Government Oriental Library Series.

BIBLIOTHECA SANSKRITA—No. 7.



# तैत्तिरीयसंहिता

## भट्टभास्करमिश्रविरचितभाष्यसहिता.

# THE TAITTIRÍYA SAMHITÁ

OF THE

# KRISHNA YAJUR-VEDA

WITH THE

## COMMENTARY OF BHATTABHA'SKARAMIS'RA.

### Vol. III.

(Kanda I—Prasnas 7–8 and Kanda II—Prasnas 1–2.)

EDITED BY

A. MAHA'DEVA SA'STRI, B. A.

*Curator, Government Oriental Library, Mysore.*

AND

PANDHAPARSAM K. RANGA'CHA'RYA,

*Pandit, Government Oriental Library, Mysore.*

Published under the Authority of the Government of His Highness the Maharaja of Mysore.

MYSORE:

PRINTED AT THE GOVERNMENT BRANCH PRESS,

1895.

Price—Rs. 3.

# PREFACE.

In addition to the MSS included among those noticed in the preface to the volume I, the following MS. has also been used in editing the portion comprised in the present volume —

(ग) A Grantha MS of the commentary on Kāṇḍa II. belonging to the Sarasvati Bhandara of His Highness the Mahárája of Mysore Its readings differ in many places from those of क and are often preferable to the latter

Mysore,
*June* 1895

A. M.



# विषयानुक्रमणिका.

## प्रथमे काण्डे सप्तमः प्रपाठकः.

## अष्टमः प्रपाठकः.

## द्वितीयकाण्डे प्रथमः प्रपाठकः

काम्याः पशुयागाः, केचिन्नैमित्तिकाश्च— अनुवाकः

भूतिकामग्रामकामप्रजाकामज्योगामयाविनां वायव्याः पशवः, प्रजाकामपशुकामयोः प्राजापत्योऽजस्तूपरः, पशुकामस्य सोमापौष्णश्वेतश्च. १

वरुणगृहीतस्य वारुणः कृष्ण एकशितिपात्, पशुप्रजाकामानामादित्येभ्यः कामाय अविर्वशा ब्रह्मवर्चसकामस्य बार्हस्पत्या मल्हाः, वचनाक्षमस्य सारस्वती मेषी, ज्योगामयाविनः प्रजाकामविद्यानुरूपकीर्तिरहितस्य पुरोधायां स्पर्धमानस्य च आग्नेयादयः. २

स्पर्धमानस्य वैष्णवो वामनः, संग्रामजयार्थिनः ऐन्द्रो ललामः, ग्रामकामस्य ऐन्द्रः पृश्निसक्थः, अन्नकामस्य राज्यकामस्य च सौम्यो बभ्रुः, गतश्रियः प्रतिष्ठाकामस्य पाप्मगृहीतस्य राज्यकामस्य च ऐन्द्रो ललामः. ... ... ३

ब्रह्मवर्चसकामस्य आदित्या दशर्षभा, दुःस्वप्नदोषभीतस्य सौमापौष्णश्यामः, भ्रातृव्यवतः उक्षवशौ, पाप्मगृहीतस्याग्नेयैन्द्रौ, ज्योगपरुद्धस्य वायव्यः ... ... ४

पशुकामस्यैन्द्र उन्नतः, प्रजाकामस्य ओषधीभ्यो वेहत्, भूतिकामस्यैन्द्री सूतवशा, विच्छिन्नसोमपीथस्य ऐन्द्राग्नः पुनरुत्सृष्टः, अभिचरतो ब्राह्मणस्पत्यस्तूपरः. ... ... ५

ग्रामकामस्य बार्हस्पत्यशितिपृष्ठः, अन्नकामस्य पौष्णः श्यामः मारुतः पृश्निश्च, इन्द्रियकामस्यैन्द्रोऽरुणः, सनिकामस्य सावित्रोपध्वस्तः, अन्नकामस्य ग्रामकामस्य च वैश्वदेवो बहुरूपः, ज्योगामयाविनः प्राजापत्यस्तूपरः. ... ... ६

ब्रह्मवर्चसकामस्य बार्हस्पत्या शितिपृष्ठा, वृष्टिकामस्य प्रजाकामस्य च मैत्रावरुणी द्विरूपा, अन्नकामस्य ग्रामकामस्य च वैश्वदेवी बहुरूपा, ब्रह्मवर्चसकामस्य बार्हस्पत्य उक्षवशः, अभिचरतो रौद्री रोहिणी. ७

ब्रह्मवर्चसकामस्य सौरी वशा, अभिचरतो ब्राह्मणस्पत्या बभ्रुकर्णी, यज्ञप्राप्तिकामस्य वैष्णवो वामनः, पशुकामस्य त्वाष्ट्रो वडवः, शत्रुभिस्सन्धिकामस्य मैत्रश्वेतः, वृष्टिकामस्य प्राजापत्यः कृष्णः. ८

अन्नाद्योपनमनकामस्य वारुणी वशा, अन्नकामस्य ज्योगामयाविनश्च मैत्रश्वेतादिः, पुष्टिकामस्य आश्विनी वशा. ... ९

दुर्ब्राह्मणस्य सोमं पिपासोराश्विनो धूम्रः, मिथ्याभिशस्तस्य वायव्यो गोमृगः, आश्विने शस्यमाने सूर्यानाविर्भावे सौर्यो बहुरूपः १०

## द्वितीयः प्रपाठकः.

काम्या इष्टयः, काश्चिन्नैमित्तिकाश्च—

हरिः ओम्.

# तैत्तिरीयसंहिता

## भट्टभास्करीयभाष्ययुक्ता.

## प्रथमः काण्डः.

### सप्तमः प्रश्नः.

पाकयज्ञं वा अन्वाहिताग्नेः पशव
उप तिष्ठन्त इडा खलु वै पाकयज्ञ-
स्सैषान्तरा प्रयाजानूयाजान् यजे-

[1]पाकयज्ञमिति पाक-यज्ञम् । वै । अन्विति । आहिताग्नेरित्याहित-अग्नेः । पशवः । उपेति । तिष्ठन्ते । इडा । खलु । वै । पाकयज्ञ इति पाक-यज्ञः । सा । एषा । अन्तरा । प्रयाजानूयाजानिति

---

[1]अथ दर्शपूर्णमासयोरेव याजमानशेषस्य ब्राह्मणं प्राजापत्यं काण्डम् । तत्रेडाया आह्रियमाणाया अनुमन्त्रणं विधातुमाह—पाकयज्ञमित्यादि ॥ अत्रेदमुक्तमाचार्येण 'हुतः प्रहुत आहुतश्शूलगवो बलिहरणं प्रत्यवरोहणमष्टकाहोम इति सप्त पाकयज्ञसंस्थाः । अपरिमिता इत्येके ब्रुवते यत्किञ्चान्यत्र विकाराद्धूयते सर्वास्ताः पाकयज्ञसंस्थाः' इति । पक्वमात्रनिर्वर्तिताः पाकयज्ञाः । अन्ये त्वा-

मानस्य लोकेऽवहिता तामाह्रियमा-
णामभि मन्त्रयेत सुरूपवर्षवर्ण
एहीति पशवो वा इडा पशूनेवोप
ह्वयते यज्ञं वै देवा अदुह्रन् यज्ञो-

प्रयाज-अनूयाजान् । यजमानस्य । लोके । अ-
वहितेत्यव-हिता । ताम् । आह्रियमाणामित्या-
ह्रियमाणाम् । अभीति । मन्त्रयेत । सुरूपवर्षवर्ण
इति सुरूप-वर्षवर्ण । एति । इहि । इति । पशवः ।
वै । इडा । पशून् । एव । उपेति । ह्वयते । [2]यज्ञम् ।
वै । देवाः । अदुह्रन् । यज्ञः । असुरान् । अदुहत् ।

---

हुः—'अल्पयज्ञाः पाकयज्ञाः' इति । पाकयज्ञमनु आहिताग्नेः पशव उपतिष्ठन्ते यजमानमेव श्रयन्ते । यद्वा—आहिताग्नेरिति कर्मणि षष्ठी आहिताग्निं पशव इति । सङ्गतिकरणे आत्मनेपदम् । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणस्सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । 'अनुर्लक्षणे' इत्यनोः कर्मप्रवचनीयत्वम् । इडा खल्वित्यादि । इडायाः प्राशनं पाकयज्ञः । सैपेति । 'अन्तरान्तरेण' इति द्वितीया । यजमानस्य लोके स्थाने अवहितावस्थिता । तामित्यादि । पशुसाधनत्वात्ताच्छब्द्यम् पशव इडेति । तस्मादिड एहीति पशूनेवोपह्वयते । 'निसमुपाविभ्यो ह्वः' इत्यात्मनेपदम् ॥

[2]यज्ञं वा इत्यादि ॥ दुहेर्लङि 'बहुलं छन्दसि' इति रुट् । 'वेवावेति च छन्दसि' इति निघाताभावः । अदुहदिति व्यत्य-

सुराः अदुहन्तेऽसुरा यज्ञदुग्धाः परा-
भवन् यो वै यज्ञस्य दोहं विद्वान्॥
॥ १ ॥ यजतेप्यन्यं यजमानं दुहे
सा मे सत्याशीरस्य यज्ञस्य भूया-
दित्याहैष वै यज्ञस्य दोहस्तेनै-
वैनं दुहे प्रत्ता वै गौर्दुहे प्रत्तेडा यज-

ते। असुराः। यज्ञदुग्धा इति यज्ञ–दुग्धाः। परेति। अभवन्। यः। वै। यज्ञस्य। दोहम्। विद्वान्॥ १॥ यजते। अपीति। अन्यम्। यजमानम्। दुहे। सा। मे। सत्या। आशीरित्या–शीः। अस्य। यज्ञस्य। भूयात्। इति। आह। एषः। वै। यज्ञस्य। दोहः। तेन। एव। एनम्। दुहे। [3]प्रत्ता। वै। गौः। दुहे। प्रत्ता। इडा।

येन च्छेरड्। यज्ञेन दुग्धा यज्ञदुग्धाः। 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम्। पराभवनं विनाशः। दोहनं हि रिक्तीकरणम्। 'दुह प्रपूरणे' इति प्रशब्दो हि धात्वर्थनिवृत्तिमाचष्टे प्रस्मरणं प्रस्थानमिति यथा। यज्ञस्तु देवैर्दुग्धोपि स्वमहिम्ना पुनःपुनराप्यायते गौरिव। यो वा इत्यादि। सा मे सत्याशीरित्यादिवचनं यज्ञस्य दोहः। अनेन मन्त्रेण यज्ञोसुरानधुक्षत्। दुह इति पूर्ववत्तलोपः॥

[3]प्रत्तेत्यादि॥ पयः प्रदातुमारब्धवती प्रत्ता वत्सलेहनेन

मानाय दुह एते वा इडायै स्तना
इडोपहूतेति वायुर्वत्सो यर्हि होते-
डामुपह्वयेत तर्हि यजमानो होता-
रमीक्षमाणो वायुं मनसा ध्यायेत्॥
॥ २ ॥ मात्रे वत्समुपावसृजति

यजमानाय । दुहे । एते । वै । इडायै । स्तनः । इडा । उपहूतेत्युप—हूता । इति । वायुः । वत्सः । यर्हि । होता । इडाम् । उपह्वयेतेत्युप—ह्वयेत । तर्हि । यजमानः । होतारम् । ईक्षमाणः । वायुम् । मनसा । ध्यायेत् ॥ २ ॥ मात्रे । वत्सम् । उपा-

---

प्रस्तुतस्तनी गोः । आदिकर्मणि क्तः, 'अच उपसर्गात्तः' इति तत्वम् । दुहे दुग्धे भूयिष्ठं क्षीरं क्षारयति । एवं प्रत्ता होत्रे अध्वर्युणा । प्रदानेन इडा यजमानाय दुग्धे तस्मादिडां प्रददातीति । एते वा इत्यादि । इडोपहूतेत्यादयो मन्त्राः अस्यास्स्तनस्थानीयाः; दोहनसाधनत्वात्स्तनत्वेन रूप्यन्ते स्तनापेक्षत्वाद्दोहस्य । वायुर्वत्सस्थानीयः प्राणवृत्तिरूपत्वात् । यर्हीत्यादि । 'अनद्यतने र्हिलन्यतरस्याम्' इति र्हिल् । वायुमित्यादि । किं कृतं भवतीत्याह—मात्र इति । दोहार्थं मातृसकाशं वत्सं प्रापयतीत्यनेन प्रदेशान्तरमृता एतेनेति । [....न्तरं गता एव ते इति । ] 'उदात्तयणः' इति चतुर्थ्या उदात्तत्वम् ॥

सर्वेण वै यज्ञेन देवास्सुवर्गं लोक-
मायन्पाकयज्ञेन मनुरश्राम्यत्सेडा
मनुमुपावर्तत तां देवासुरा व्यह्वयन्त
प्रतीचीं देवाः पराचीमसुरास्सा देवा-
नुपावर्तत पशवो वै तद्देवानवृणत

वंसृजतीत्युप—अवंसृजति । 'सर्वेण । वै । यज्ञेन । देवाः । सुवर्गमिति सुवः—गम् । लोकम् । आयन् । पाकयज्ञेनेति पाक—यज्ञेन । मनुः । अश्राम्यत् । सा । इडा । मनुम् । उपावर्ततेत्युप—आवर्तत । ताम् । देवासुरा इति देव—असुराः । वीति । अह्वयन्त । प्रतीचीम् । देवाः । पराचीम् । असुराः । सा । देवान् । उपावर्ततेत्युप—आवर्तत । पशवः । वै । तत् । देवान् । अवृणत । पशवः । असुरान् ।

---

'सर्वेणेत्यादि ॥ अश्राम्यत् पाकयज्ञमात्रानुष्ठानतत्परोभवत् । ततस्सेडा मनुमुपावर्तत । तस्मादियं मानवीत्युच्यत इत्यभिप्रायः । तामित्यादि । व्यह्वयन्त विविधमाह्वयन् । पूर्ववदात्मनेपदम् । प्रतीचीं स्वात्माभिमुखावस्थानाम्, पदाभ्यासात् । 'चौ' इति पूर्वपदस्य दीर्घत्वमन्तोदात्तत्वं च । पराचीं पराङ्मुखावस्थानाम्, पदाभ्यासाभावात् । 'अनिगन्तोऽञ्चतौ' इति गतेः प्रकृतिस्वरत्वं च । केचिदाहुः—इडोपहूतेति प्राची, उपहूतेडेति पराची । पशवो वा

पुशवोसुरानजहुर्यं कामयेतापुशु-
स्स्यादिति पराचीं तस्येडामुपं ह्वये-
तापुशुरेव भवति यम् ॥ ३ ॥
कामयेत पुशुमान्त्स्यादिति प्रतीचीं
तस्येडामुपं ह्वयेत पुशुमानेव भवति
ब्रह्मवादिनो वदन्ति स त्वा इडामु-

अजहुः । यम् । कामयेत । अपुशुः । स्यात् । इति । पराचीम् । तस्य । इडाम् । उपेति । ह्वयेत । अपुशुः । एव । भवति । 'यम् ॥ ३ ॥ कामयेत । पुशुमानिति पुशु—मान् । स्यात् । इति । प्रतीचीम् । तस्य । इडाम् । उपेति । ह्वयेत । पुशुमानिति पुशु—मान् । एव । भवति । 'ब्रह्मवादिन

---

इत्यादि । इडायाः प्रतीचीनत्वेन पशव एव देवानुगता इति वेदितव्यम् । पराचीनत्वेनासुरान् पशवोऽजहुरित्यर्थः । 'मिन-म्यात्' इति तुन् ॥

'यमित्यादि । गतम्* ॥

'ब्रह्मवादिन इत्यादि ॥ अत्र भेदः स्वदितुं [illegible] [illegible] 'स्वस्ति वदः' इति [illegible] संहितायां [illegible] ।

---

*तै. सं. १-७-१.

पं ह्वयेत य इडामुपहूयात्मानमिडा-
यामुपह्वयेतेति सा नः प्रिया सुप्र-
तूर्तिर्मघोनीत्याहेडामेवोपहूयात्मान-

इति ब्रह्म-वादिनः । वदन्ति । सः । तु । वै । इडाम् । उपेति । ह्वयेत । यः । इडाम् । उपहूयेत्युप-हूय । आत्मानम् । इडायाम् । उपह्वयेतेत्युप-ह्वयेत । इति । [7]सा । नः । प्रिया । सुप्रतूर्तिरिति सु-प्रतूर्तिः । मघोनी । इति । आह । इडाम् । एव । उपहूयेत्युप-हूय । आत्मानम् ।

उक्तं च प्रातिशाख्ये—'तनुपूर्वं उदात्तयोर्वकारः'* इति । य इडामात्मनि उपहूयात्मानमिडायामुपह्वयते स एवेडामुपह्वातुमर्हतीति ब्रह्मवादिन आहुः ॥

[7]सा न इत्यादि ॥ सुप्रतूर्तित्वान्मघवत्त्वाच्च सास्माकं प्रियेति आत्मानमिडायामुपह्वयते । व्यस्तमित्यादि । विच्छेद इवैष यज्ञस्य क्रियते यदिडा नाम । कथमित्याह—सामीत्यादि । तत्र हविषो यदेकदेशं प्राश्नन्ति यजमानपञ्चमा ऋत्विजः, एकदेशं प्रस्तरे मार्जयन्ते, नायं यज्ञो न दक्षिणा व्यय एवायं; तस्माद्विच्छिद्यते यज्ञ इति । 'चादिलोपे विभाषा' इति प्रथमा तिङ्विभक्तिर्न निहन्यते, गतिस्वरसमासावुक्तौ ॥

*५,१३.

मिडायामुप ह्वयते व्यस्तमिव वा
एतद्यज्ञस्य यदिडा सामि प्राश्नन्ति
॥ ४ ॥ सामि मार्जयन्त एतत्प्र-
ति वा असुराणां यज्ञो व्यच्छिद्यत
ब्रह्मणा देवास्समदधुर्बृहस्पतिस्तनु-
तामिमं न इत्याह ब्रह्म वै देवानां

इडायाम् । उपेति । ह्वयते । [8]व्यस्तमिति वि—अस्तम् । इव । वै । एतत् । यज्ञस्य । यत् । इडा । सामि । प्राश्नन्तीति प्र—अश्नन्ति ॥ ४ ॥ सामि । मार्जयन्ते । एतत् । प्रतीति । वै । असुराणाम् । यज्ञः । वीति । अच्छिद्यत । ब्रह्मणा । देवाः । समिति । अदधुः । बृहस्पतिः । तनुताम् । इमम् । नः । इति । आह । ब्रह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्मणा । एव । यज्ञम् । समिति ।

---

[8]व्यस्तमिति ॥ भावे निष्ठायां व्यत्ययेन गतेः प्रकृतिस्वरत्वम् । 'उदात्तस्वरितयोर्यणः' इत्याकारस्स्वर्यते । एतत्प्रतीति । अत एवैतस्मिन् प्रदेशे असुराणां यज्ञो व्यच्छिद्यत अतः परं लुप्त एवाभवत् । लक्षणादिना प्रतेः कर्मप्रवचनीयत्वम् । देवास्तु विच्छिन्नं यज्ञं ब्रह्मणि समदधुः संहितमकुर्वन् । तस्मात् 'बृहस्पतिस्तनुतामिमं नः'* इति मार्जनमन्त्रे वचनं ब्रह्मणि सन्धानप्रति-

*सं. १-६-३६.

बृहस्पतिर्ब्रह्मणैव यज्ञꣳ सं दधाति
विच्छिन्नं यज्ञꣳ समिमं दधात्वि-
त्याह सन्तत्यै विश्वे देवा इह मादय-
न्तामित्याह सन्तत्यैव यज्ञं देवेभ्योनु
दिशति यां वै ॥ ५ ॥ यज्ञे दक्षिणां
ददाति तामस्य पशवोऽनु सं क्रामन्ति

दधाति । विच्छिन्नमिति वि-छिन्नम् । यज्ञम् । समिति । इमम् । दधातु । इति । आह । सन्तत्या इति सं-तत्यै । विश्वे । देवाः । इह । मादयन्ताम् । इति । आह । सन्तत्येति सं-तत्य । एव । यज्ञम् । देवेभ्यः । अन्विति । दिशति । [1]याम् । वै ॥ ५ ॥ यज्ञे । दक्षिणाम् । ददाति । ताम् ।

पादनार्थं, विच्छिन्नमिति वचनं सन्तत्यै । ब्रह्मणा समदधुरित्युक्ते ब्रह्मप्रतिपादनस्याकाङ्क्षितत्वात् तृतीयः पादः प्रथमं व्याख्यातः । ततो द्वितीयः—विश्व इति । विच्छिन्नं यज्ञं सन्तत्यैव सन्धाय देवेभ्योनुदिशति । इह संहिते यज्ञे देवा माद्यन्तु मोपेक्षां कुर्वतेति बोधयति ॥

[1]यां वा इत्यादि ॥ अत्र 'ब्रध्न पिन्वस्व'* इति बर्हिषदं पुरोडाशमनुमन्त्रयते, स च ऋत्विग्भ्यो दक्षिणैव दीयते । तामधिकृत्येदमुच्यते—दक्षिणां पशवोनुसङ्क्रामन्ति दक्षिणया सह गच्छन्ति । स एष यजमानः ईजानः दक्षिणादानान्तं सर्वं यज्ञं कृतवान् अप-

*सं. १-६-३[7].

स एष ईंजानोंऽपशुर्भावुंको यजंमा-
नेन् खल्ु वै तत्कार्यंमित्याहुर्यथा
देवत्रा दत्तं कुर्वीतात्मन्पशून्रमयेते-
ति ब्रध्न पिन्वस्वेत्याह यज्ञो वै
ब्रध्नो यज्ञमेव तन्महयत्यथो देवत्रैव
दत्तं कुरुत आत्मन्पशून्रमयते ददं-
तो मे मा क्षायीत्याहाक्षितिमेवो-

अस्य । पशवंः । अनुं । समितिं । क्रामन्ति । सः ।
एषः । ईजानः । अपशुः । भावुंकः । यजंमानेन ।
खलुं । वै । तत् । कार्यम् । इतिं । आहुः । यथा ।
देवत्रेतिं देव-त्रा । दत्तम् । कुर्वीत । आत्मन् ।
पशून् । रमयेत । इतिं । ब्रध्न । पिन्वस्व । इतिं ।
आह । यज्ञः । वै । ब्रध्नः । यज्ञम् । एव । तत् ।
महयति । अथो इतिं । देवत्रेतिं देव-त्रा । एव ।
दत्तम् । कुरुते । आत्मन् । पशून् । रमयते ।
ददंतः । मे । मा । क्षायि । इतिं । आह । अक्षिं-
तिम् । एव । उपेतिं । एति । कुर्वतः । मे । मा ।

पशुभांवुकः भविता । 'उपमनद' इत्युक्तम् । तस्माद्यजमानेन सादरं शिक्षितव्यं, येन देवत्रा देवेषु ऋत्विक्षु दत्तं पुरोडाशादिकं कुर्वीत कर्तुं समर्थः स्यात्, आत्मन्येव पशून्रमयेत । 'देवत्र-

पैति कुर्वतो मे मोपं दसदित्याह
भूमानमेवोपैति ॥ ६ ॥
सङ्‌श्रवा ह सौवर्चनसस्तुमिंञ्जमौ-
पोदितिमुवाच यत्सत्रिणाꣳ होता-
भूः कामिडामुपाह्वथा इति तामुपाह्व

उपेतिं । दसत् । इतिं । आह । भूमानम् । एव । उपेतिं । एति ॥ ६ ॥

विद्वान्ध्यायेद्भवति यं प्राश्नन्ति यां वै म
एकान्न विꣳशतिश्चं ॥१॥

[1]सङ्‌श्रवा इति सं–श्रवाः । ह । सौवर्चनसः । तुमिंञ्जम् । औपोदितिमित्यौपं–उदितिम् । उवाच । यत् । सत्रिणाम् । होता । अभूः । काम् । इडाम् ।

---

नुप्य' इति त्राप्रत्ययः । ग्रध पिन्वस्वेत्यादि । महयति महान्तं करोति; महितं वा करोति । गतमन्यत्* ॥

इति सप्तमे प्रथमोनुवाकः.

---

[1]संश्रवा इत्यादि प्रासङ्गिकं हौत्रम् । सुवर्चनसोपत्यं संश्रवा नाम उपोदितस्यापत्यं तुमिञ्जन्नामोवाच । यदित्यादि । यत् यदा । उपाह्वथाः—'निसमुपविभ्यो ह्वः' इत्यात्मनेपदम्, 'लिपि सिचि ह्वश्च' इत्यङ् । एवं संश्रवसा पृष्टे तामित्युत्तरमुवाच तुमिञ्जः ।

---

*सं. १-६-३⁷.

इति होवाच या प्राणेन देवान्दाधार
व्यानेन मनुष्यानपानेन पितॄनिति
छिनत्ति सा न छिनत्ती३ इति छिन-
त्तीति होवाच शरीरं वा अस्यै तदु-

उपेति । अह्वथाः । इति । ताम् । उपेति । अह्वे । इति । ह । उवाच । या । प्राणेनेति प्र–अनेन । देवान् । दाधार । व्यानेनेति वि–अनेन । मनुष्यान् । अपानेनेत्यप–अनेन । पितॄन् । इति । [2]छिनत्ति । सा । न । छिनत्ती३ । इति । छिनत्ति । इति । ह । उवाच । [3]शरीरम् । वै । अस्यै । तत् । उपेति । अह्वथाः । इति । ह । उवाच ।

येत्यादि । या प्राणेन उत्तमवृत्त्या दक्षिणात्वेन देवान्धारयति, व्यानेन मध्यमवृत्त्या मनुष्योपजीव्यत्वेन मनुष्यान् धारयति, अपानेनाधमवृत्त्या मरणेन पितॄन्धारयति, तादृशीमहमुपाह्वे, सन्व्या [ सेयं ] अन्या वास्त्विति* ॥

[2]अथ संश्रवाः—छिनत्तीत्यादिकम् । प्रतिग्रहादिषु प्रजा अनर्थेन योजयति उत नेति । प्रश्नान्ते प्लुतः । छान्दसं तिङ उदात्तत्वम्, विश्वजनादित्वात्तुगभावः । अथ छिनत्तीत्युवाच तुमिक्षः । समानवाक्ये पदात्परत्वाभावान्न निहन्यते । सर्वस्य प्लुतस्य पाक्षिकत्वादाख्यातलक्षणप्लुताभावः ॥

[3]संश्रवा उवाच—शरीरमित्यादि ॥ किं पुनस्तच्छरीरमित्या-

*म. क. ख. ग—संध्या अन्या वस्त्विति. तं—संध्या अन्या वास्त्विति.

पाह्वथा इति होवाच गौ वै ॥ ७ ॥
अस्यै शरीरं गां वाव तौ तत्पर्यवदतां
या यज्ञे दीयते सा प्राणेन देवान्दा-
धार यया मनुष्या जीवन्ति सा
व्यानेन मनुष्यान् यां पितृभ्यो
घ्नन्ति सापानेन पितॄन् य एवं वेद

गौः । वै ॥ ७ ॥ अस्यै । शरीरम् । गाम् । वाव । तौ । तत् । परीति । अवदताम् । [4]या । यज्ञे । दीयते । सा । प्राणेनेति प्र—अनेन । देवात् । दाधार । यया । मनुष्याः । जीवन्ति । सा । व्यानेनेति वि—अनेन । मनुष्यान् । याम् । पितृभ्य इति पितृ-भ्यः । घ्नन्ति । सा । अपानेनेत्यप—अनेन । पितॄन् । यः ।

काङ्क्षायां गौर्वा इत्यादि वेदात्मा वदति गोरूपा इडा भवतीति । अथ सः असहमान इवाह—गामित्यादि । तत् तदानीं तौ संश्रवस्तुमिश्रौ एवं गां पर्यवदतामनिन्दतां, अन्यत्मारव्धमन्यत्फालितमिच्छति वेत् [त्फलितमित्यतिवक्तृ] त्वाभ्युपगमो निन्दा ॥

[4]अथ यदुक्तं संश्रवसा अस्याश्शरीरं त्वमुपाह्वथा इति तत्समर्थनार्थं प्राणादिवृत्तिभिर्देवादीनां धारकत्वं वेदात्मैव गौराह—या यज्ञ इत्यादि ॥ तस्मात्सम्यगभिहितं संश्रवसेति । य एवमित्यादि । गतम्* ॥

*सं. १-७-२[1],

पशुमान्भवत्यथ वै तामुपाह्व इति
होवाच या प्रजाः प्रभवन्तीः प्रत्या-
भवतीत्यन्नं वा अस्यै तत् ॥ ८ ॥
उपाह्वथा इति होवाचौषधयो वा
अस्या अन्नमोषधयो वै प्रजाः प्रभ-

एवम् । वेद । पशुमानिति पशु-मान् । भवति ।
[5]अथ । वै । ताम् । उपेति । अह्वे । इति । ह । उवा-
च । या । प्रजा इति प्र-जाः । प्रभवन्तीरिति प्र-
भवन्तीः । प्रतीति । आभवतीत्या-भवति । इति ।
[6]अन्नम् । वै । अस्यै । तत् ॥ ८ ॥ उपेति । अह्वथाः ।
इति । ह । उवाच । ओषधयः । वै । अस्याः ।
अन्नम् । ओषधयः । वै । प्रजा इति प्र-जाः । प्र-
भवन्तीरिति प्र-भवन्तीः । प्रति । एति । भवन्ति ।
यः । एवम् । वेद । अन्नाद इत्यन्न-अदः । भवति ।

---

[5]अथ तुमिञ्ज उवाच—अथ वैतामित्यादि ॥ लक्षणं चाचष्टे—येत्यादि । या प्रभवन्तीः प्रभुत्ववतीः प्रजाः प्रत्याभवति प्रत्यक्षाभिमुख्येन भजति ॥

[6]अथ संश्रवा उवाच—अन्नमित्यादि ॥ तत्समर्थयते वेदात्मा पुरुषः—ओषधय इत्यादि । अस्या गोरन्नमोषधयः, ताभिः प्रजाः प्रभवन्त्यो भवन्तीति ॥

वन्तीः प्रत्या भवान्ति य एवं वेदान्नादो
भवत्यथ वै तामुपाह्व इति होवाच या
प्रजाः पराभवन्तीरनुगृह्णाति प्रत्या-
भवन्तीर्गृह्णातीति प्रतिष्ठां वा अस्यै
तदुपाह्वथा इति होवाचेयं वा अस्यै
प्रतिष्ठा ॥१॥ इयं वै प्रजाः पराभव-
न्तीरनु गृह्णाति प्रत्याभवन्तीर्गृह्णाति

[7]अथ । वै । ताम् । उपेति । अह्वे । इति । ह । उवाच । या । प्रजा इति प्र—जाः । पराभवन्तीरिति परा—भवन्तीः । अनुगृह्णातीत्यनु—गृह्णाति । प्रतीति । आभवन्तीरित्या—भवन्तीः । गृह्णाति । इति । [8]प्रतिष्ठामिति प्रति—स्थाम् । वै । अस्यै । तत् । उपेति । अह्वथाः । इति । ह । उवाच । इयम् । वै । अस्यै । प्रतिष्ठेति प्रति—स्था ॥ १ ॥ इयम् । वै । प्रजा इति प्र—जाः । पराभवन्तीरिति

[7]पुनरपि तुमिञ्ज उवाच—अथेति ॥ लक्षणं च ब्रूते—येत्यादि । या पराभवन्तीः विद्यमानाः प्रजाः अनुगृह्णाति पुष्ट्यादिप्रदानेन धारयति । प्रत्याभवन्तीः आत्मानं भजमानाः प्रजाः गृह्णाति प्रतिष्ठिताः करोतीति ॥

[8]अथ संश्रवा उवाच—प्रतिष्ठामित्यादि ॥ तदुपपादयति वेदात्मा—इयमित्यादि ॥

य एवं वेद प्रत्येव तिष्ठत्यथ वै ता-
मुपाह्व इति होवाच यस्यै निक्रमणे
घृतं प्रजास्सञ्जीवन्तीः पिबन्तीति
छिनत्ति सा न छिनत्ती३ इति
न छिनत्तीति होवाच प्र तु जनयती-

परा-भवन्तीः । अन्विति । गृह्णाति । प्रतीति । आभवन्तीरित्या-भवन्तीः । गृह्णाति । यः । एवम् । वेद । प्रतीति । एव । तिष्ठति । [9]अथ । वै । ताम् । उपेति । अह्वे । इति । ह । उवाच । यस्यै । निक्र-मण इति नि-क्रमणे । घृतम् । प्रजा इति प्र-जाः । सञ्जीवन्तीरिति सं-जीवन्तीः । पिबन्ति । इति । [10]छिनत्ति । सा । न । छिनत्ती३ । इति । [11]न । छिनत्ति । इति । ह । उवाच । प्रेति । तु ।

[9]अथ तुमिञ्ज उवाच—अथेति ॥ लक्षणं चाभिधत्ते—यस्या इत्यादि । यस्या निक्रमणे न्यक्पतने सर्वाः प्रजास्सञ्जीवन्त्यः घृतमुदकं पिबन्ति । ब्राह्मणान्तरं च भवति 'सा यत्र यत्र न्यक्रामत्ततो घृतमपीड्यत'* इति ॥

[10]अथ संश्रवा उवाच—छिनत्तीत्यादि ॥ व्याख्यातम्† ॥

[11]अथ तुमिञ्जः प्रत्युवाच—न छिनत्ति, अपितु प्रजनयत्येव प्रजा इति ॥

*सं—२-६-७. †सं. १-७-२².

त्येष वा इडामुपाह्वथा इति हो-
वाच वृष्टिर्वा इडा वृष्ट्यै वै निक्रमणे
घृतं प्रजास्सञ्जीवन्तीः पिबन्ति य ए-
वं वेद प्रैव जायतेऽन्नादो भव-
ति ॥ १० ॥

जनयति । इति । [12]एषः । वै । इडाम् । उपेति ।
अह्वथाः । इति । ह । उवाच । वृष्टिः । वै । इडा ।
वृष्ट्यै । वै । निक्रमण इति नि-क्रमणे । घृतम् ।
प्रजा इति प्र-जाः । सञ्जीवन्तीरिति सं-जीव-
न्तीः । पिबन्ति । यः । एवम् । वेद । प्रेति । एव ।
जायते । अन्नाद इत्यन्न-अदः । भवति ॥१०॥

गौर्वा अस्यै तत्प्रतिऽष्ठाह्वथा इति
विꣳशतिश्च ॥ २ ॥

---

[12]अथ संश्रवा उवाच—एष वा इडामित्यादि ॥ एष त्वमिडा-मुपह्वथाः यस्त्वं घृतपदीमह्वथा इति । तदेतत्समर्थयते वेदात्मा—वृष्टिर्वा इत्यादि । तत्साधनत्वात्ताच्छब्द्यम् । एवं वेदिता होता प्रकरणाद्वा यजमानः वृष्टिलाभेन प्रजावान् भवति अन्नस्य चात्ता ॥

इति सप्तमे द्वितीयोनुवाकः.

परोक्षं वा अन्ये देवा इज्यन्ते प्रत्यक्षमन्ये यद्यजते य एव देवाः परोक्षमिज्यन्ते तानेव तद्यजति यदन्वाहार्यमाहरत्येते वै देवाः प्रत्यक्षं यद्ब्राह्मणास्तानेव तेन प्रीणात्यथो

[1]परोक्षमिति परः—अक्षम् । वै । अन्ये । देवाः । इज्यन्ते । प्रत्यक्षमिति प्रति—अक्षम् । अन्ये । यत् । यजते । ये । एव । देवाः । परोक्षमिति परः—अक्षम् । इज्यन्ते । तान् । एव । तत् । यजति । यत् । अन्वाहार्यमित्यनु—आहार्यम् । आहरतीत्या—हरति । एते । वै । देवाः । प्रत्यक्षमिति प्रति—अक्षम् । यत् । ब्राह्मणाः । तान् । एव । तेन । प्रीणाति । अथो इति । दक्षिणा । एव । अस्य ।

---

[1]अथान्वाहार्यं विधास्यन्नाह—परोक्षं वा इत्यादि ॥ अक्ष्णः परस्तात्परोक्षम् । 'परोक्षे लिट्' इति निपातनाद्रूपसिद्धिः । अक्षमक्षं प्रति प्रत्यक्षम्, यथार्थेऽव्ययीभावः । उभयत्रापि 'कूलतीरतूल' इत्यादिनी उत्तरपदाद्युदात्तत्वम्, 'एकान्याभ्यां समर्थाभ्याम्' इति प्रथमा तिङ्विभक्तिर्न निहन्यते । यद्यजते इत्यादि । यागेन परोक्षं यष्टव्यान् यजते । प्रत्यक्षयष्टव्यानन्वाहार्याहरणेन प्रीणयति । एते वै देवाः प्रत्यक्षमिति । वर्तन्त इति शेषः । अथो अपि च दक्षिणैवास्य याग-

दक्षिणैवास्यैषाथो यज्ञस्यैव छिद्र-
मपि दधाति यद्वै यज्ञस्य क्रूरं य-
द्विलिष्टं तदन्वाहार्येण ॥ ११ ॥ अ-
न्वाहरति तदन्वाहार्यस्यान्वाहार्यत्वं
देवदूता वा एते यदृत्विजो यदन्वा-

एषा । अथो इति । यज्ञस्य । एव । छिद्रम् । अपीति । दधाति । [2]यत् । वै । यज्ञस्य । क्रूरम् । यत् । विलिष्टमिति वि-लिष्टम् । तत् । अन्वाहार्येणेत्यनु-आहार्येण ॥ ११ ॥ अन्वाहरतीत्यनु-आहरति । तत् । अन्वाहार्यस्येत्यनु-आहार्यस्य । अन्वाहार्यत्वमित्यन्वाहार्य-त्वम् । [3]देवदूता इति देव-दूताः । वै । एते । यत् । ऋत्विजः । यत् ।

---

स्यैषा यदन्वाहार्याहरणम् । अपि च; यज्ञस्य यच्छिद्रं प्रमादालस्यादिना छिन्नं तदपिदधाति पूरयति ॥

[2]अधुना छिद्रापिधानं समर्थयते—यद्वा इत्यादि ॥ यज्ञस्य यत्क्रूरं मात्रातीतं क्रियते, यच्च विलिष्टं न्यूनं क्रियते । लिश अल्पीभावे । तदन्वाहार्येणान्वाहरति हीनं पुनरन्वाहरति । यद्वा—अनुक्रमेणाहृत्य नाशयति । तदन्वाहार्यत्वमस्य । करणे ण्यत् । तस्माच्छिद्रापिधानमेतत् इति । अन्वाहार्यः ओदनविशेषः ॥

[3]देवदूता इत्यादि ॥ गतम् ॥

हार्यमाहरंति देवदूतानेव प्रीणाति प्र-
जापतिर्देवेभ्यो यज्ञान्व्यादिशत्स रि-
रिचानोऽमन्यत स एतमन्वाहार्यम-
भक्तमपश्यत्तमात्मन्नधत्त स वा एष
प्राजापत्यो यदन्वाहार्यो यस्यैवं वि-
दुषोऽन्वाहार्य आह्रियते साक्षादेव

अन्वाहार्यमित्यनु—आहार्यम् । आहरतीत्या—हरं-
ति । देवदूतानिति देव—दूतान् । एव । प्रीणाति ।
*प्रजापतिरिति प्रजा—पतिः । देवेभ्यः । यज्ञान् ।
व्यादिशदिति वि—आदिशत् । सः । रिरिचानः ।
अमन्यत । सः । एतम् । अन्वाहार्यमित्यनु—आ-
हार्यम् । अभक्तम् । अपश्यत् । तम् । आत्मन् ।
अधत्त । सः । वै । एषः । प्राजापत्य इति प्राजा-
पत्यः । यत् । अन्वाहार्य इत्यनु—आहार्यः ।
यस्य । एवम् । विदुषः । अन्वाहार्य इत्यनु—आ-
हार्यः । आह्रियत इत्या—ह्रियते । साक्षादिति स—
अक्षात् । एव । प्रजापतिमिति प्रजा—पतिम् ।

*प्रजापतिरित्यादि ॥ व्यादिशत् विभज्याददात् । स प्रजातिर्व्यादि-
श्यद्गो रिक्तोहमित्यमन्यत । ततोऽन्वाहार्यमविभक्तमपश्यत् । तमात्मन्ये-
वाधत्त स्थापयामास । तस्मादयं प्राजापत्य एव । यस्यैवमित्यादि ।

प्रजापतिमृध्नोत्यपरिमितो निरुप्योऽपरिमितः प्रजापतिः प्रजापतेः॥१२॥ आप्त्यै देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतं प्राजापत्यमन्वाहार्यमपश्यन्तमन्वाहरन्त ततो देवा अभवन्परासुरा यस्यैवं विदुषोऽन्वा-

ऋध्नोति । अपरिमित इत्यपरि–मितः । निरुप्य इति निः–उप्यः । अपरिमित इत्यपरि–मितः । प्रजापतिरिति प्रजा–पतिः । प्रजापतेरिति प्रजा–पतेः ॥ १२ ॥ आप्त्यै । देवाः । वै । यत् । यज्ञे । अकुर्वत । तत् । असुराः । अकुर्वत । ते । देवाः । एतम् । प्राजापत्यमिति प्राजा–पत्यम् । अन्वाहार्यमित्यनु–आहार्यम् । अपश्यन्न् । तम् । अन्वाहरन्तेत्यनु–आहरन्त । ततः । देवाः । अभवन्न् । परेति । असुराः । यस्य । एवम् । विदुषः । अन्वाहार्य इत्यनु–आहार्यः । आह्रियत इत्या–

गतम् । अपरिमितत्वं प्रजापतेराप्त्यै च भवति; तस्याप्यपरिमितत्वात् ॥

[5]देवा वा इत्यादि ॥ गतम् । भवत्यात्मना भूतिमान् सम्पद्यते । अस्य भ्रातृव्यः पराभवति विनष्टो भवति ॥

हार्यं आह्रियते भवत्यात्मना परास्य भ्रातृव्यो भवति यज्ञेन वा इष्टी पक्वेन पूर्ती यस्यैवं विदुषोऽन्वाहार्यं आह्रियते स त्वेवेष्टापूर्ती प्रजापतेर्भागोऽसि ॥ १३ ॥ इत्याह प्रजापतिमेव भागधेयेन समर्धयत्यूर्जं-

ह्रियते । भवति । आत्मना । परेति । अस्य । भ्रातृव्यः । भवति । [6]यज्ञेन । वै । इष्टी । पक्वेन । पूर्ती । यस्य । एवम् । विदुषः । अन्वाहार्यं इत्यनु—आहार्यः । आह्रियत इत्या—ह्रियते । सः । तु । एव । इष्टापूर्तीतीष्ट—पूर्ती । [7]प्रजापतेरिति प्रजा—पतेः । भागः । असि ॥ १३ ॥ इति । आह । प्रजापतिमिति—प्रजा—पतिम् । एव । भा-

[6]यज्ञेन वा इत्यादि ॥ इष्टमनेनेतीष्टी । पूर्तमनेनेति पूर्ती । 'इष्टादिभ्यश्च' इतीनिप्रत्ययः, 'नध्याख्या' इति निष्ठानत्वाभावः, साधकतमत्वविवक्षायां 'क्तस्येन्विषयस्य' इति सप्तम्यभावः । अन्वाहार्यमाहरन्निष्टापूर्ती भवति । 'अत इनिठनौ' इतीनिप्रत्ययः, छान्दसं पूर्वपदस्य दीर्घत्वम् ॥

[7]प्रजापतेरित्यादिरन्वाहार्यस्यासन्नस्यानुमन्त्रणमन्त्रः । गतमन्यत्* ।

*तै. सं. १-६-३[8].

स्वान्पयस्वानित्याहोर्जमेवास्मिन्प-
यो दधाति प्राणापानौ मे पाहि स-
मानव्यानौ मे पाहीत्याहाशिषमेवै-
तामा शास्तेऽक्षितोस्यक्षित्यै त्वा मा
मे क्षेष्ठा अमुत्रामुष्मिँल्लोक इत्या-
ह क्षीयते वा अमुष्मिँल्लोकेन्नमितः-
प्रदानꣳ ह्यमुष्मिँल्लोके प्रजा उपजी-

गधेयेनेति भाग–धेयेन । समिति । अर्धयति । ऊर्जस्वान् । पयस्वान् । इति । आह । ऊर्जम् । एव । अस्मिन् । पयः । दधाति । प्राणापानाविति प्राण–अपानौ । मे । पाहि । समानव्यानाविति समान–व्यानौ । मे । पाहि । इति । आह । आशिषमित्या–शिषम् । एव । एताम् । एति । शास्ते । अक्षितः । असि । अक्षित्यै । त्वा । मा । मे । क्षेष्ठाः । अमुत्र । अमुष्मिन् । लोके । इति । आह । क्षीयते । वै । अमुष्मिन् । लोके । अन्नम् । इतःप्रदानमितीतः–प्रदानम् । हि । अमुष्मिन् । लोके । प्रजा इति प्र–जाः । उपजीवन्तीत्युप–

पाहीत्याशिषमाशास्ते । इतः प्रदानमस्मिन् लोके यत्प्रत्तं तत्प्रजा अमुष्मिन् लोक उपजीवन्तीति । न तु तत्रोत्पाद्यते । तस्माद्

वन्ति यदेवमभिमृशत्यक्षितिमेवैनं-
द्गमयति नास्यामुष्मिंल्लोकेन्नं क्षी-
यते ॥ १४ ॥
बर्हिषोहं देवयज्यया प्रजावान्भू-
यासमित्याह बर्हिषा वै प्रजापतिः

जीवन्ति । यत् । एवम् । अभिमृशतीत्यभि-मृ-
शति । अक्षितिम् । एव । एनत् । गमयति । न ।
अस्य । अमुष्मिन् । लोके । अन्नम् । क्षीयते॥१४॥

अन्वाहार्येण प्रजापतेरसि ह्यमुष्मिंल्लोके
पञ्चदश च ॥ ३ ॥

[1]बर्हिषः । अहम् । देवयज्ययेति देव-यज्यया ।
प्रजावानिति प्रजा-वान् । भूयासम् । इति ।
आह । बर्हिषा । वै । प्रजापतिरिति प्रजा-

क्षीयतेमुष्मिन् लोकेन्नं; तस्मादनेनाभिमर्शनमक्षयत्वाय भवति ।
अक्षितिरक्षयः ॥

इति सप्तमे तृतीयोनुवाकः.

[1]अथानूयाजानामनुमन्त्रणमन्त्राः—बर्हिषोहमित्याद्याः । गताः* ।

*सं. १-६-४.[1-3]

प्रजा असृजत तेनैव प्रजास्सृंजते नराशꣳसस्याहं देवयज्यया पशुमान्भूयासमित्याह नराशꣳसेन वै प्रजापतिः पशूनसृजत तेनैव पशून्थ्सृजतेऽग्नेस्स्विष्टकृतोहं देवयज्यायायुष्मान् यज्ञेन प्रतिष्ठां गमेयमित्याहायुरेवात्मन्धत्ते प्रति यज्ञेन ति-

पतिः । प्रजा इति प्र–जाः । असृजत । तेन । एव । प्रजा इति प्र–जाः । सृजते । नराशꣳसस्य । अहम् । देवयज्ययेति देव–यज्यया । पशुमानिति पशु–मान् । भूयासम् । इति । आह । नराशꣳसेन । वै । प्रजापतिरिति प्रजा–पतिः । पशून् । असृजत । तेन । एव । पशून् । सृजते । अग्नेः । स्विष्टकृत इति स्विष्ट–कृतः । अहम् । देवयज्ययेति देव–यज्यया । आयुष्मान् । यज्ञेन । प्रतिष्ठामिति प्रति–स्थाम् । गमेयम् । इति । आह । आयुः । एव । आत्मन् । धत्ते ।

नरैश्शंसनीयो नराशंसः । द्वितीयानूयाजदेवता । छान्दसं पूर्वपदस्य दीर्घत्वम्, उत्तरपदाद्युदात्तत्वं च ॥

वन्ति यदेवमभिमृशत्यक्षितिमेवैनं-
द्गमयति नास्यामुष्मिँल्लोकेन्नं क्षी-
यते ॥ १४ ॥
वर्हिषोहं देवयज्यया प्रजावान्भू-
यासमित्याह वर्हिषा वै प्रजापतिः

जीवन्ति । यत् । एवम् । अभिमृशतीत्यभि–मृ-
शति । अक्षितिम् । एव । एनत् । गमयति । न ।
अस्य । अमुष्मिन् । लोके । अन्नम् । क्षीयते॥१४॥

अन्वाहार्येण प्रजापतेरसि ह्यमुष्मिँल्लोके
पञ्चदश च ॥ ३ ॥

[1]वर्हिषः । अहम् । देवयज्ययेति देव–यज्यया ।
प्रजावानिति प्रजा–वान् । भूयासम् । इति ।
आह । वर्हिषा । वै । प्रजापतिरिति प्रजा–

क्षीयतेमुष्मिन् लोकेन्नं; तस्मादनेनाभिमर्शनमक्षयत्वाय भवति । अक्षितिरक्षयः ॥

इति सप्तमे तृतीयोनुवाकः.

[1]अथानूयाजानामनुमन्त्रणमन्त्राः—वर्हिषोहमित्याद्याः । गताः* ।

*सं. १-६-४.[1-3]

प्रजा असृजत तेनैव प्रजास्सृजते
नराशꣳसस्याहं देवयज्यया पशुमा-
न्भूयासमित्याह नराशꣳसेन वै प्र-
जापतिः पशूनसृजत तेनैव पशू-
न्थ्सृजतेऽग्नेस्स्विष्टकृतोहं देवयज्य-
यायुष्मान् यज्ञेन प्रतिष्ठां गमेयमि-
त्याहायुरेवात्मन्धत्ते प्रति यज्ञेन ति-

पतिः । प्रजा इति प्र-जाः । असृजत । तेन । एव । प्रजा इति प्र-जाः । सृजते । नराशꣳसस्य । अहम् । देवयज्ययेति देव-यज्यया । पशुमानिति पशु-मान् । भूयासम् । इति । आह । नराशꣳसेन । वै । प्रजापतिरिति प्रजा-पतिः । पशून् । असृजत । तेन । एव । पशून् । सृजते । अग्नेः । स्विष्टकृत इति स्विष्ट-कृतः । अहम् । देवयज्ययेति देव-यज्यया । आयुष्मान् । यज्ञेन । प्रतिष्ठामिति प्रति-स्थाम् । गमेयम् । इति । आह । आयुः । एव । आत्मन् । धत्ते ।

नरैश्शंसनीयो नराशंसः । द्वितीयानूयाजदेवता । छान्दसं पूर्वपदस्य दीर्घत्वम्, उत्तरपदाद्युदात्तत्वं च ॥

ष्ठति दर्शपूर्णमासयोः ॥ १५ ॥
वै देवा उज्जितिमनूदजयन्दर्शपू-
र्णमासाभ्यामसुरानपानुदन्ताग्नेरह-
मुज्जितिमनूज्जेषमित्याह दर्शपूर्णमा-
सयोरेव देवतानां यजमान उज्जिति-
मनूज्जयति दर्शपूर्णमासाभ्यां भ्रा-

प्रतीति । यज्ञेन । तिष्ठति । [2]दर्शपूर्णमासयोरिति दर्श–पूर्णमासयोः ॥ १५ ॥ वै । देवाः । उज्जितिमित्युत्–जितिम् । अनु । उदिति । अजयन् । दर्शपूर्णमासाभ्यामिति दर्श–पूर्णमासाभ्याम् । असुरान् । अपेति । अनुदन्त । अग्नेः । अहम् । उज्जितिमित्युत्–जितिम् । अनु । उदिति । जेषम् । इति । आह । दर्शपूर्णमासयोरिति दर्श–पूर्णमासयोः । एव । देवतानाम् । यजमानः । उज्जितिमित्युत्–जितिम् । अनु । उदिति । जयति । दर्शपूर्णमासाभ्यामिति दर्श–पूर्णमासा-

[2]दर्शपूर्णमासयोर्वा इत्यादि ॥ दर्शपूर्णमासयोर्या उज्जितिः उच्छ्रिता जितिः दर्शपूर्णमासनिमित्ता वा । तामनु देवाः उदजयन् । लक्षणेनोः कर्मप्रवचनीयत्वं, 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । दर्शपूर्णमासयोरेवेति । दर्शपूर्णमासयोर्या देवता

तृव्यानपं नुदते वाजवतीभ्यां व्यू-
हत्यन्नं वै वाजोऽन्नमेवाव रुन्धे द्वा-
भ्यां प्रतिष्ठित्यै यो वै यज्ञस्य द्वौ
दोहौ विद्वान् यजत उभयतः॥१६॥
एव यज्ञं दुहे पुरस्ताच्चोपरिष्टाच्चैष

भ्याम् । भ्रातृव्यान् । अपेति । नुदते । [3]वाजव-तीभ्यामिति वाज—वतीभ्याम् । वीति । ऊहति । अन्नम् । वै । वाजः । अन्नम् । एव । अवेति । रु-न्धे । द्वाभ्याम् । प्रतिष्ठित्या इति प्रति—स्थित्यै । [4]यः । वै । यज्ञस्य । द्वौ । दोहौ । विद्वान् । यजते । उभयतः ॥१६॥ एव । यज्ञम् । दुहे । पुरस्तात् । च । उपरिष्टात् । च । एषः । वै । अन्यः । यज्ञ-

अग्न्यादयः तासामुज्जितिमनु यजमान उज्जयति । सूक्तवाके 'अग्नेरहम्'* इत्युज्जितीनां वचनात् । अग्नेरहमिति चोपलक्षणं 'सोमस्याहम्'* इत्यादीनां सर्वासामुज्जितीनाम् ॥

[3]वाजवतीभ्यामित्यादि ॥ 'वाजस्य मा प्रसवेन'* इत्यादिभ्यां स्रुचौ व्यूहति विश्लेषयति । अध्वर्युणा क्रियमाणमनुमन्त्रयते— द्वाभ्यां व्यूहनं प्रतिष्ठित्यै भवति । द्वाभ्यां हि पुरुषः प्रति-ष्ठाति । पूर्ववद्वृतेः प्रकृतिस्वरत्वम् ॥

[4]यो वै यज्ञस्येत्यादि ॥ उभयतः यज्ञं दुग्धे पुरस्तादुपरिष्टा-च्च । पूर्ववत्तलोपः । एष वा इत्यादि । एष वक्ष्यमाणो यज्ञ-

*सं. १-६-४--१२.

वा अन्यो यज्ञस्य दोह इडायाम-
न्यो यर्हि होता यजमानस्य ना-
मं गृह्णीयात्तर्हिं ब्रूयादेमा अग्मन्ना-
शिषो दोहंकामा इति सङ्स्तुता
एव देवता दुहेऽथो उभयत एव यज्ञं

स्यं । दोहः । इडायाम् । अन्यः । [5]यर्हि । होता ।
यजमानस्य । नाम । गृह्णीयात् । तर्हि । ब्रूयात् ।
एति । इमाः । अग्मन् । आशिष इत्या–शिषः ।
दोहकामा इति दोह–कामाः । इति । सङ्स्तुता
इति सं–स्तुताः । एव । देवताः । दुहे । अथो
इति । उभयतः । एव । यज्ञं । दुहे । पुरस्तात् ।

स्यैको दोहः, इडायामेको दोहः । तत्रेडायां स प्रथमेनुवाके उक्तः 'सा मे सत्याशीः' इति* ॥

[5]अत्र द्वितीयं दोहं विदधाति—यर्हि होतेत्यादि ॥ 'आ शास्ते यं यजमानोसौ'† इत्यदश्शब्दस्य स्थाने यदा यजमानस्य नाम गृह्णाति तदा ब्रूयाद्यजमानः । एमा अग्मन् इत्यादि । संस्तुताः 'अग्निमावह'‡ 'अग्निरिदं हविरजुषत'† इत्यादिषु बहुशस्सङ्कीर्तिताः । दर्शपूर्णमासदेवतास्सर्वा एव दुग्धे । अथो अपि च उभयतः पुरस्तादुपरिष्टाच्च यज्ञं दुग्धे ॥

*सं. १-७-१२. †ब्रा. ३-५-१०. ‡ब्रा. ३-५-३.

दुहे पुरस्ताञ्चोपरिष्टाञ्च रोहितेन
त्वाऽग्निर्देवतां गमयत्वित्याहैते वै दे-
वाश्वाः ॥ १७ ॥ यजमानः प्रस्तरो
यदेतैः प्रस्तरं प्रहरति देवाश्वैरेव
यजमानः सुवर्गं लोकं गमयति
वि ते मुञ्चामि रशना वि रश्मी-

च । उपरिष्टात् । च । [6]रोहितेन । त्वा । अग्निः । देवताम् । गमयतु । इति । आह । एते । वै । देवाश्वा इति देव–अश्वाः ॥ १७ ॥ यजमानः । प्रस्तर इति प्र–स्तरः । यत् । एतैः । प्रस्तरमिति प्र–स्तरम् । प्रहरतीति प्र–हरति । देवाश्वैरिति देव–अश्वैः । एव । यजमानम् । सुवर्गमिति सुवः–गम् । लोकम् । गमयति । [7]वीति । ते । मुञ्चामि । रशनाः । वीति । रश्मीन् । इति । आह ।

---

[6]रोहितेन त्वेति प्रस्तरस्य प्रह्रीयमाणस्यानुमन्त्रणम् ॥ तत्रैते रोहितादयः देवानामग्न्यादीनामश्वाः । स्तीर्यत इति प्रस्तरः । 'ऋदोरप्' । थाथादिनोत्तरपदान्तोदात्तत्वं, प्राधान्यात्ताच्छब्द्यम् । यदेतैरित्यादि । एतैरनुमन्त्र्यमाणं प्रस्तरं प्रहरन्नग्निः देवाश्वैर्यजमानं स्वर्गं प्रापयति ॥

[7]वि ते मुञ्चामीति परिधीनां विमुच्यमानानामनुमन्त्रणम् ॥ एष मन्त्रोऽग्निविमोको नाम ॥

नित्यांहैव वा अग्नेर्विमोकस्तेनैवैनं
वि मुंञ्चति विष्णोरशंयोरहं देवय-
ज्यया यज्ञेन प्रतिष्ठां गमेयमित्यांह
यज्ञो वै विष्णुर्यज्ञ एवान्ततः प्रति
तिष्ठति सोमस्याहं देवयज्यया सु-
रेताः ॥ १८ ॥ रेतो धिषीयेत्यांह

एषः । वै । अग्नेः । विमोक इति वि-मोकः ।
तेन । एव । एनम् । वीति । मुञ्चति । ¹विष्णोः ।
शंयोरिति शं-योः । अहम् । देवयज्ययेति देव-
यज्यया । यज्ञेन । प्रतिष्ठामिति प्रति-स्थाम् ।
गमेयम् । इति । आह । यज्ञः । वै । विष्णुः ।
यज्ञे । एव । अन्ततः । प्रतीति । तिष्ठति । ²सो-
मस्य । अहम् । देवयज्ययेति देव-यज्यया । सु-
रेता इति सु-रेताः ॥ १८ ॥ रेतः । धिषीय ।
इति । आह । सोमः । वै । रेतोधा इति रेतः-

¹सोमस्य* इत्यस्यानुवृत्तौ [illegible] ॥

²[illegible] ॥ [illegible] इति । [illegible] । [illegible] [illegible] ॥

[illegible]

सोमो वै रेतोधास्तेनैव रेत आत्मन्धत्ते त्वष्टुरहं देवयज्यया पशूनाꣳ रूपं पुषेयमित्याह त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृत्तेनैव पशूनाꣳ रूपमात्मन्धत्ते देवानां पत्नीरग्निर्गृहपतिर्यज्ञस्य मिथुनं तयोरहं देवयज्यया मिथुनेन प्र भूयासमित्याहैतस्माद्वै मिथुनात्प्रजापतिर्मिथुनेन ॥ ११ ॥ प्राजायत तस्मादेव यज-

धाः । तेन । एव । रेतः । आत्मन्न् । धत्ते । त्वष्टुः । अहम् । देवयज्ययेति देव–यज्यया । पशूनाम् । रूपम् । पुषेयम् । इति । आह । त्वष्टा । वै । पशूनाम् । मिथुनानाम् । रूपकृदिति रूप–कृत् । तेन । एव । पशूनाम् । रूपम् । आत्मन्न् । धत्ते । देवानाम् । पत्नीः । अग्निः । गृहपतिरिति गृह–पतिः । यज्ञस्य । मिथुनम् । तयोः । अहम् । देवयज्ययेति देव–यज्यया । मिथुनेन । प्रेति । भूयासम् । इति । आह । एतस्मात् । वै । मिथुनात् । प्रजापतिरिति प्रजा–पतिः । मिथुनेन । ॥११॥ प्रेति । अजायत । तस्मात् । एव । यज-

मानो मिथुनेन प्र जायते वेदोसि
वित्तिरसि विदेयेत्याह वेदेन वै देवा
असुराणां वित्तं वेद्यमविन्दन्त तद्वे-
दस्य वेदत्वं यद्यद्भ्रातृव्यस्याभिध्या-
येत्तस्य नाम गृह्णीयात्तदेवास्य सर्वं

मानः । मिथुनेन । प्रेति । जायते । [10]वेदः । असि । वित्तिः । असि । विदेयं । इति । आह । वेदेन । वै । देवाः । असुराणाम् । वित्तम् । वेद्यम् । अविन्दन्त । तत् । वेदस्य । वेदत्वमिति वेद--त्वम् । यद्यदिति यत्--यत् । भ्रातृव्यस्य । अभि-ध्यायेदित्यभि--ध्यायेत् । तस्य । नाम । गृह्णीयात् । तत् । एव । अस्य । सर्वम् । वृङ्क्ते । घृतवन्तमिति

[10]वेदोसीति वेदेऽन्तर्वेदि विधीयमाने यजमानं वाचयति ॥ वित्तं लब्धं वेद्यं लब्धुं योग्यं च धनं वेदादलभन्त देवाः । 'विदेर्वित्तश्च विन्नश्च'* इति पाक्षिको नत्वाभावः, विद्यते लभ्यतेऽनेनेति करणे घञ् । उञ्छादित्वादन्तोदात्तत्वम् । यद्यद्भ्रातृव्यस्य सम्बन्धि गृहक्षेत्रादि तदभिध्यायेत् इदं ममास्त्विति मनसा काङ्क्षेत्, मेदमस्य भूयादिति वा । यं द्विष्यात् तस्य नामधेयं विदेये-

*महा—८-२-५७.

वृक्के घृतवन्तं कुलायिनꣳ रायस्पोष̐ꣳ सहस्रिणं वेदो ददातु वाजिनमित्याह प्र सहस्रं पशूनाप्नोत्यास्य प्रजायां वाजी जायते य एवं वेद ॥ २० ॥

घृत-वन्तम् । कुलायिनम् । रायः । पोषम् । सहस्रिणम् । वेदः । ददातु । वाजिनम् । इति । आह । प्रेति । सहस्रम् । पशून् । आप्नोति । एति । अस्य । प्रजायामिति प्र-जायाम् । वाजी । जायते । यः । एवम् । वेद ॥२०॥

दर्शपूर्णमासयोरुभयतो देवाश्चासुरेताः प्रजापतिर्मिथुनेनाप्नोत्यष्टौ च ॥४॥

---

स्यतः पुरा गृह्णीयात् । तत्सर्वमस्य वृक्के स्वयमेव गृह्णाति । वृजी वर्जने, रोधादिकः । यद्वा—तत्सर्वं तस्य वर्जयति नाशयति । वेदितुः प्रजासु वाजी जायते अन्नवानेव सर्व आजीजायते, सर्वत्र वा जायते ॥

इति सप्तमे चतुर्थोनुवाकः.

ध्रुवां वै रिच्यमानां यज्ञोनु रिच्यते
यज्ञं यजमानो यजमानं प्रजा ध्रु-
वामाप्यायमानां यज्ञोन्वा प्यायते
यज्ञं यजमानो यजमानं प्रजा आ
प्यायतां ध्रुवा घृतेनेत्याह ध्रुवामेवा
प्याययति तामाप्यायमानां यज्ञोन्वा
प्यायते यज्ञं यजमानो यजमानं

[1]ध्रुवाम् । वै । रिच्यमानाम् । यज्ञः । अन्विति । रिच्यते । यज्ञम् । यजमानः । यजमानम् । प्रजा इति प्र–जाः । ध्रुवाम् । आप्यायमानामित्या–प्यायमानाम् । यज्ञः । अनु । एति । प्यायते । यज्ञम् । यजमानः । यजमानम् । प्रजा इति प्र–जाः । एति । प्यायताम् । ध्रुवा । घृतेन । इति । आह । ध्रुवाम् । एव । एति । प्याययति । ताम् । आप्यायमानामित्या–प्यायमानाम् । यज्ञः । अनु । एति । प्यायते । यज्ञम् । यजमानः । यजमानम् ।

---

[1]आप्यायतामिति ध्रुवाया आप्यायमानाया अनुमन्त्रणम् । तामाप्यायमानां स्तोतुमाह—ध्रुवां वा इत्यादि ॥ अनोर्लक्षणे कर्मप्रवचनीयत्वम् । रिचिर् रेचने, रौधादिकः, कर्मकर्तरि यक् व्यत्ययेनाद्युदात्तत्वम् । 'अचः कर्तृयकि' इति वा व्यत्ययेना-

प्रजाः प्रजापतेर्विभान्नाम लोक-
स्तस्मिꣳस्त्वा दधामि सह यजमा-
नेनेति ॥२१॥ आहाऽयं वै प्रजाप-
तेर्विभान्नाम लोकस्तस्मिन्नेवैनं द-
धाति सह यजमानेन रिच्यत इव वा
एतद्यद्यजते यद्यजमानभागं प्रा-

प्रजा इति प्र–जाः । [1]प्रजापतेरिति प्रजा–पतेः । विभानिति वि–भान् । नाम । लोकः । तस्मिन्न् । त्वा । दधामि । सह । यजमानेन । इति ॥२१॥ आह । अयम् । वै । प्रजापतेरिति प्रजा–पतेः । विभानिति वि–भान् । नाम । लोकः । तस्मिन्न् । एव । एनम् । दधाति । सह । यजमानेन । रिच्यते । इव । वै । एतत् । यत् । यजते । यत् । यजमानभागमिति यजमान–भागम् । प्राश्नातीति प्र–

तजन्तस्य भवति । स्वन्ना ज्यतस्येन । ३० प्यायी वृद्धौ । गत-
मन्यत् ॥

[1]प्रजापतेर्विभानिति ॥ यजमानप्राशनमन्त्रः । अयं लोको मनुष्य-
लोकः सूर्यादिभिर्विविधं भातीति विभान् । रिच्यत इवेत्यादि ।
नियमैः कर्शितत्वात् रिच्यत इव यजमानः । स आत्मीयभा-

श्नात्यात्मानमेव प्रीणात्येतावान् वै
यज्ञो यावान् यजमानभागो यज्ञो
यजमानो यद्यजमानभागं प्राश्नाति
यज्ञ एव यज्ञं प्रतिष्ठापयत्येतद्वै सू-
यवसꣳ सोदकं यद्बर्हिश्चापश्चैतत्।
॥ २२ ॥ यजमानस्यायतनं यद्वे-

अश्नाति । आत्मानम् । एव । प्रीणाति । एता-
वान् । वै । यज्ञः । यावान् । यजमानभाग इति
यजमान—भागः । यज्ञः । यजमानः । यत् ।
यजमानभागमिति यजमान—भागम् । प्राश्नातीति
प्र—अश्नाति । यज्ञे । एव । यज्ञम् । प्रतीति । स्थाप-
यति । [3]एतत् । वै । सूयवसमिति सु—यवसम् ।
सोदकमिति स—उदकम् । यत् । बर्हिः । च । आपः ।
च । एतत् ॥२२॥ यजमानस्य । आयतनमित्या—
यतनम् । यत् । वेदिः । यत् । पूर्णपात्रमिति पूर्ण—

---

गभाशनेनात्मानं तर्पयति । एतावानित्यादि । प्राधान्याद्यज्ञो यज-
मान इति तदधीनत्वात्तन्निवृत्तेः ॥

[3]एतद्वा इत्यादि ॥ पूर्णपात्रविधिः । सूयवसं सोदकं चाने-
नैतत्क्रियते, यद्बर्हिश्चापश्च संयोज्यन्ते । किञ्च—एतद्यजमानस्या-

दिर्यत्पूर्णपात्रमन्तर्वेदि निनयति स्व एवायतने सूयवसꣳ सोदकं कुरुते सदसि सन्मे भूया इत्याहापो वै यज्ञ आपोऽमृतं यज्ञमेवामृतमात्मन्धत्ते सर्वाणि वै भूतानि व्रतमुपयन्तमनूप यन्ति प्राच्यां दिशि देवा

पात्रम् । अन्तर्वेदीत्यन्तः–वेदि । निनयतीति नि–नयति । स्वे । एव । आयतन इत्या–यतने । सूयवसमिति सु–यवसम् । सोदकमिति स–उदकम् । कुरुते । [4]सत् । असि । सत् । मे । भूयाः । इति । आह । आपः । वै । यज्ञः । आपः । अमृतम् । यज्ञम् । एव । अमृतम् । आत्मन् । धत्ते । [5]सर्वाणि । वै । भूतानि । व्रतम् । उपयन्तमित्युप–यन्तम् । अनु । उपेति । यन्ति । प्राच्याम् । दिशि । देवाः । ऋत्विजः । मार्जयन्ताम् । इति ।

---

यतनं गृहं यद्वेदिः तस्माद्यदिदमन्तर्वेदि प्रणीतासु पूर्णपात्रमानयति तद्देतत्स्व एवायतने आत्मार्थं सूयवसं सोदकं च कुरुते ॥

[4]तत्र सदसि सन्मे इति पूर्णपात्र आनीयमाने यजमानो जपति ॥ आपो वा इत्यादि । गतम् । यज्ञममृतं चात्मनि स्थापयति अनेन मन्त्रेण । सदादिपदैर्यज्ञामृते अभिधीयेते इति भावः ॥

[5]सर्वाणीत्यादि ॥ व्रतोपायनकाल एवैनमनु सर्वाणि भूतानि

ऋत्विजो मार्जयन्तामित्याहैष वै
दर्शपूर्णमासयोरवभृथः ॥ २३ ॥
यान्येवैनं भूतानि व्रतमुपयन्तमनू-
पयन्ति तैरेव सहावभृथमवैति वि-
ष्णुमुखा वै देवाश्छन्दोभिरिमा-
न्लोकाननपजय्यमभ्यजयन् यद्वि-

आह । एषः । वै । दर्शपूर्णमासयोरिति दर्श–पूर्णमासयोः । अवभृथ इत्यव–भृथः ॥ २३ ॥ यानि । एव । एनम् । भूतानि । व्रतम् । उपयन्तमित्युप–यन्तम् । अनूपयन्तीत्यनु–उपयन्ति । तैः । एव । सह । अवभृथमित्यव–भृथम् । अवेति । एति । विष्णुमुखा इति विष्णु–मुखाः । वै । देवाः । छन्दोभिरिति छन्दः–भिः । इमान् । लोकान् । अनपजय्यमित्यनप–जय्यम् । अभीति । अजयन् । यत् । विष्णुक्रमानिति विष्णु–

देवादीनि उपयन्ति उपगच्छन्ति । इदानीं तैस्सर्वैस्सहावभृथमवैति । कः पुनरयमवभृथ इत्याह—प्राच्यामित्यादि । अनेन मन्त्रेण यादिशां व्युत्सेचनम् ॥

विष्णुमुखा इत्यादि ॥ विष्णुक्रमाणां क्रमणविधिः । ते च 'विष्णोः क्रमोऽसि'* इत्यादयः । विष्णुमुखाः विष्णुप्रधानाः ।

* सं. १–६–५४.१२.

ष्णुक्रमान्क्रमते विष्णुरेव भूत्वा य-
जमानश्छन्दोभिरिमान्लोकाननप-
जय्यमभि जयति विष्णोः क्रमो-
स्यभिमातिहेत्याह गायत्री वै पृथि-
वी त्रैष्टुभमन्तरिक्षं जागती द्यौरानु-
ष्टुभीर्दिशश्छन्दोभिरेवेमान्लोकान्

क्रमान् । क्रमते । विष्णुः । एव । भूत्वा । यज-
मानः । छन्दोभिरिति छन्दः–भिः । इमान् ।
लोकान् । अनपजय्यमित्यनप–जय्यम् । अभी-
ति । जयति । विष्णोः । क्रमः । असि । अभि-
मातिहेत्यभिमाति–हा । इति । आह । गायत्री ।
वै । पृथिवी । त्रैष्टुभम् । अन्तरिक्षम् । जागती ।
द्यौः । आनुष्टुभीरित्यानु–स्तुभीः । दिशः ।
छन्दोभिरिति छन्दः–भिः । एव । इमान् ।

---

अनपजय्यमन्यैरपजेतुमशक्यम् । क्रियाविशेषणम्, 'अचो यत्' 'क्षय्यजय्यौ शक्यार्थे' इति अयादेशः, 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम् । विष्णोः क्रमोसीति । चतुर्णां क्रमाणां ग्रहणम् । त्रिष्टुब्जगत्यनुष्टुप्शब्देभ्य उत्सादित्वादञ् । आनुष्टुभीः अनुष्टुब्भ्यः । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । छन्दोभिरेवेत्यादि । गायत्र्यादयः पृथिव्यादीनां कारणानि; कारणेन

यथापूर्वमभि जयति ॥ २४ ॥
अगन्म सुवस्सुवरगन्मेत्याह सुव-
र्गमेव लोकमेति सन्दृशस्ते मा
छित्सि यत्ते तपस्तस्मै ते मा वृक्षी-

लोकान् । यथापूर्वमिति यथा-पूर्वम् । अभीति ।
जयति ॥ २४ ॥

यजमानेनेति चैतदवभृथो दिश-
स्सप्त च ॥५॥

[1]अगन्म । सुवः । सुवः । अगन्म । इति । आह ।
सुवर्गमिति सुवः-गम् । एव । लोकम् । एति ।
सन्दृश इति सं-दृशः । ते । मा । छित्सि । यत् ।
ते । तपः । तस्मै । ते । मा । एति । वृक्षि । इति ।

---

च कार्यजयस्सुकर इति भावः । यथापूर्वमिति । अनपजय्यमि-
त्यर्थः । अनुक्रमेण वा ॥

इति सप्तमे पञ्चमोनुवाकः ॥

---

[1]अगन्म सुवरित्याहवनीयोपस्थानम् ॥ यथा यजुरिति । यथा

त्याह यथायजुरेवैतत्सुभूरसि श्रेष्ठो रश्मीनामायुर्धा अस्यायुर्मे धेही- त्याहाशिषमेवैतामा शास्ते प्र वा एषोऽस्माल्लोकाच्च्यवते यः ॥२५॥ विष्णुक्रमान्क्रमते सुवर्गाय हि लो-

आह । यथायजुरितिं यथा–यजुः । एव । एतत् । [2]सुभूरितिं सु–भूः । असि । श्रेष्ठः । रश्मीनाम् । आयुर्धा इत्यायुः–धाः । असि । आयुः । मे । धेहि । इतिं । आह । आशिषमित्या–शिषम् । एव । एताम् । एतिं । शास्ते । [3]प्रेतिं । वै । एषः । अस्मात् । लोकात् । च्यवते । यः ॥२५॥ विष्णु- क्रमानितिं विष्णु–क्रमान् । क्रमंते । सुवर्गायेतिं सुवः–गार्य । हि । लोकाय । विष्णुक्रमा इतिं

यजुर्वदति तथैवैतत्सम्पद्यते । देवसन्दर्शनादनुध्यानलक्षणादविच्छेदनं, तपसश्च देवपरिचरणलक्षणादविच्छेदनमिति ॥

[2]सुभूरित्यादित्योपस्थानम् ॥ आशिषं 'आयुर्मे धेहि वर्चो मे धेहि'*इत्येतां आशास्ते । अनेन मन्त्रेण लभते च यथाशासनमिति भावः ॥

[3]प्र वा एष इत्यादि ॥ हेतुमाह—सुवर्गायेति । उक्तमुपस्थानान्तं विष्णुक्रमाणां क्रमणम् । तत्रैवायं विशेष उच्यते—ब्रह्म

*सं. १–६–६.[3]

कार्यं विष्णुक्रमाः क्रम्यन्ते ब्रह्मवा-
दिनों वदन्ति स त्वै विष्णुक्रमान्क्रं-
मेत य इमाल्लोकान्भ्रातृव्यस्य सं-
विद्य पुनरिमं लोकं प्रत्यवरोहेदि-
त्येप वा अस्य लोकस्य प्रत्यवरोहो
यदाहेदमहममुं भ्रातृव्यमाभ्यो दि-

विष्णु–क्रमाः । क्रम्यन्ते । ब्रह्मवादिन इति ब्रह्म–वादिनः । वदन्ति । सः । तु । वै । विष्णुक्रमानिति विष्णु–क्रमान् । क्रमेत । यः । इमान् । लोकान् । भ्रातृव्यस्य । संविद्येति सं–विद्य । पुनः । इमम् । लोकम् । प्रत्यवरोहेदिति प्रति–अवरोहेत् । इति । एपः । वै । अस्य । लोकस्य । प्रत्यवरोह इति प्रति–अवरोहः । यत् । आह । इदम् । अहम् । अमुम् । भ्रातृव्यम् । आभ्यः । दिग्भ्य इति

वदितुं शीलं येपान्ते आहुः । स विष्णुक्रमान् क्रमितुमर्हति य इमान् लोकान् पृथिवीप्रभृतीन् भ्रातृव्येण निजसुकृतैरार्जितान् संविद्य लब्ध्वा आत्मसात्कृत्य तत्रतत्रारुह्य पुनरिमं मनुष्यलोकं प्रत्यवरोहेदिति । एप वा इत्यादि । इदमहमित्यस्य मन्त्रस्य वचनं भ्रातृव्यलोकानां संवेदनस्य पुनरिह प्रत्यवरोहस्य च साधनमित्यर्थः । आभ्यो दिग्भ्योऽस्मै दिव इति द्वयोरुपादानेन सर्वा-

ग्भ्योऽस्यै दिव इतीमानेव लोका-
न्भ्रातृव्यस्य संविद्य पुनरिमं लोकं
प्रत्यवरोहति सम् ॥ २६ ॥ ज्यो-
तिषाऽभूवमित्याहास्मिन्नेव लोके
प्रति तिष्ठत्यैन्द्रीमावृतमन्वावर्त इ-
त्याहासौ वा आदित्य इन्द्रस्तस्यैवा-

दिक्-भ्यः । अस्यै । दिवः । इति । इमान् । एव । लोकान् । भ्रातृव्यस्य । संविद्येति सं-विद्य । पुनः । इमम् । लोकम् । प्रत्यवरोहतीति प्रति-अवरोहति । [4]समिति ॥ २६ ॥ ज्योतिषा । अभूवम् । इति । आह । अस्मिन् । एव । लोके । प्रतीति । तिष्ठति । [5]ऐन्द्रीम् । आवृतमित्या-वृतम् । अन्वावर्त इत्यनु-आवर्ते । इति । आह । असौ । वै । आदित्यः । इन्द्रः । तस्य । एव । आवृतमित्या-

---

न्भ्रातृव्यस्य लोकानुपलक्षयंस्तेषां भूयस्त्वं गमयति । हस्ताग्रेण निदर्शयन्निदंशब्दं प्रयुङ्क्ते ॥

[4]सं ज्योतिषेत्यात्माभिमर्शनम् ॥ प्रतितिष्ठतीति । प्रतिष्ठयाभिदीप्तया सङ्गच्छते ॥

[5]ऐन्द्रीमावृतमित्युदक्पर्यावर्तनमन्त्रः ॥ असौ वा इत्यादि । ईश्वरत्वादिन्द्र आदित्यः तस्यावृतं पर्यावृत्तिं तेन पूर्वं कृतं यजमानो-

वृतमनु पर्यावर्तते दक्षिणा पर्यावर्त-
ते स्वमेव वीर्यमनु पर्यावर्तते तस्मा-
द्दक्षिणोर्ध आत्मनो वीर्यावत्तरोथो
आदित्यस्यैवावृतमनु पर्यावर्तते स-
महं प्रजया सं मया प्रजेत्याहाशि-

वृतम् । अन्विति । पर्यावर्तत इति परि-आवर्तते । दक्षिणा । पर्यावर्तत इति परि-आवर्तते । स्वम् । एव । वीर्यम् । अन्विति । पर्यावर्तत इति परि-आवर्तते । तस्मात् । दक्षिणः । अर्धः । आत्मनः । वीर्यावत्तर इति वीर्यावत्-तरः । अथो इति । आदित्यस्य । एव । आवृतमित्या-वृतम् । अन्विति । पर्यावर्तत इति परि-आवर्तते । [6]समिति । अहम् । प्रजयेति प्र-जया । समिति । मया । प्रजेति प्र-जा । इति । आह । आशिषमित्या-

---

नुपर्यावर्तते । लक्षणेऽनोः कर्मप्रवचनीयत्वम् । दक्षिणा दक्षिणेन शरीरभागेन प्रदक्षिणमिति यावत् । 'दक्षिणादाच्' । स्वमेवेत्यादि । आत्मनश्शरीरस्य दक्षिण एकदेशो वीर्यावत्तरः इतरस्मात् । छान्दसं दीर्घत्वम् । 'दक्षिणस्यादिगाख्यायाम्' इत्याद्युदात्तत्वम् । अथो अपि च । पुनर्वचनं प्रादक्षिण्यफलप्रदर्शनार्थम् ॥

[6]समहमित्युपस्थानमन्त्रः ॥ आशिषमिति । ससाधनां क्रिया-

पर्म् ॥ २७ ॥ एवैतामा शास्ते
समिद्धो अग्ने मे दीदिहि समेद्धा ते
अग्ने दीद्यासमित्याह यथायजुरेवै-
तद्वसुमान् यज्ञो वसीयान्भूयासमि-
त्याहाशिर्षमेवैतामा शास्ते बहु वै

शिर्षम् ॥ २७ ॥ एव । एताम् । एति । शास्ते । [7]समिद्ध इति सं–इद्धः । अग्ने । मे । दीदिहि । समेद्धेति सं–एद्धा । ते । अग्ने । दीद्यासम् । इति । आह । यथायजुरिति यथा–यजुः । एव । एतत् । [8]वसुमानिति वसु–मान् । यज्ञः । वसीयान् । भूयासम् । इति । आह । आशिषमित्या–शिर्षम् । एव । एताम् । एति । शास्ते । [9]बहु । वै । गार्ह-

मुपसर्ग आहेति योग्यभूतगमनक्रियोपस्थानात् प्रजया सङ्गसीयेति लाभादेवमुक्तम् ॥

[7]समिद्ध इति समिदाधानम् ॥ यथायजुरेवैतद्भवति । दीद्यासमिति दीप्तिमन्वाशासनम् ॥

[8]वसुमानित्युपस्थानम् ॥ आशिषमिति । वसीयान् भूयासमित्यनेनैतामाशिषमाशास्ते । लभते च यथाशासनमिति ॥

[9]बहु वा इत्यादि ॥ गार्हपत्यस्यान्ते समीपे मिश्रमिव पापशबलमिव बहु चर्यते परद्रोहचिन्तादि(षु) । क्षुद्रजन्तुवधादि च । येन अग्निरप्यपूतस्स्यात् ; तस्मादाग्निपावमानीभ्यामृग्भ्यां 'अग्न आयूंषि

गार्हपत्यस्यान्ते मिश्रमिव चर्यत
आग्निपावमानीभ्यां गार्हपत्यमुपं
तिष्ठते पुनात्येवाग्निं पुनीत आत्मानं
द्वाभ्यां प्रतिष्ठित्या अग्ने गृहपत
इत्याह ॥ २८ ॥ यथायजुरेवैतच्छ-

पत्यस्येति गार्हं–पत्यस्य । अन्ते । मिश्रम् । इव । चर्यते । आग्निपावमानीभ्यामित्याग्नि–पावमानीभ्याम् । गार्हपत्यमिति गार्हं–पत्यम् । उपेति । तिष्ठते । पुनाति । एव । अग्निम् । पुनीते । आत्मानम् । द्वाभ्याम् । प्रतिष्ठित्या इति प्रति–स्थित्यै । [10]अग्ने । गृहपत इति गृह–पते । इति । आह । ॥२८॥ यथायजुरिति यथा–यजुः । एव । एतत् ।

पवसे '*' इत्याभ्यां गार्हपत्यमुपतिष्ठते । पुनात्येवाग्निं पुनीते चैवात्मानम् । कर्त्रभिप्रायत्वादुत्तरत्रात्मनेपदम्, सतिशिष्टोपि विकरणस्वरः लसार्वधातुकस्वरेण बाध्यते इत्याद्युदात्तत्वम् । पुनातीत्यत्र तस्य पित्त्वाद्विकरणस्वरः । समानवाक्ये पदात्परत्वाभावादुभयत्रापि निघाताभावः । द्वाभ्यामिति । उपतिष्ठत इत्येव । प्रतिष्ठित्या इति । द्वित्वान्वयात् पद्भ्यामिव प्रतिष्ठितो भवति । पूर्ववद्गतेः प्रकृतिस्वरत्वम् ॥

[10]अग्ने गृहपते इत्युपस्थानमेव ॥ यथायजुरिति । सुगृहपतित्वावाप्तिर्ज्योतिष्मदपत्यलाभश्चेत्येतद्यथायजुर्भवत्येव ॥

*सं. १-३-१४.[23-24]

तꣳ हिमा इत्याह शतं त्वा हेमन्तानिन्धिषीयेति वावैतदाह पुत्रस्य नाम गृह्णात्यन्नादमेवैनं करोति तामाशिषमा शासे तन्तवे ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रोऽजातस्स्यात्तेजस्व्येवास्य ब्रह्मवर्चसी पुत्रो जायते तामाशिषमा शासेऽमुष्मै ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रः॥

[11]शतम् । हिमाः । इति । आह । शतम् । त्वा । हेमन्तान् । इन्धिषीय । इति । वाव । एतत् । आह । पुत्रस्य । नाम । गृह्णाति । अन्नादमित्यन्न–अदम् । एव । एनम् । करोति । ताम् । आशिषमित्या–शिषम् । एति । शासे । तन्तवे । ज्योतिष्मतीम् । इति । ब्रूयात् । यस्य । पुत्रः । अजातः । स्यात् । तेजस्वी । एव । अस्य । ब्रह्मवर्चसीति ब्रह्म–वर्चसी । पुत्रः । जायते । ताम् । आशिषमित्या–शिषम् । एति । शासे । अमुष्मै ।

[11]शतं हिमा इत्यादि ॥ व्याख्यातं अग्निहोत्राग्न्युपस्थाने 'सम्पश्यामि'* इत्यत्र ॥

*सं. १-५-६.16

॥ २९ ॥ जातस्स्यात्तेजं एवास्मिं-
न्ब्रह्मवर्चसं दधाति यो वै यज्ञं
प्रयुज्य न विमुञ्चत्यप्रतिष्ठानो वै स
भवति कस्त्वां युनक्ति स त्वा वि-
मुंञ्चत्वित्यांह प्रजापतिर्वै कः प्रजा-

ज्योतिंष्मतीम् । इतिं । ब्रूयात् । यस्यं । पुत्रः ।
॥२९॥ जातः । स्यात् । तेजः । एव । अस्मिन् ।
ब्रह्मवर्चसमितिं ब्रह्म–वर्चसम् । दधाति । [12]यः । वै ।
यज्ञम् । प्रयुज्येतिं प्र–युज्यं । न । विमुञ्चतीतिं वि–
मुञ्चति । अप्रतिष्ठान इत्यप्रति–स्थानः । वै । सः ।
भवति । कः । त्वा । युनक्ति । सः । त्वा । वीतिं ।
मुञ्चतु । इतिं । आह । प्रजापंतिरितिं प्रजा–पतिः ।
वै । कः । प्रजापंतिनेतिं प्रजा–पतिना । एव ।

[12]यो वै यज्ञमित्यादि ॥ गतम्* । अप्रतिष्ठानः प्रतिष्ठारहितः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । कस्त्वेति यज्ञविमोकः । प्रजापतिनैवैनं युनक्ति कस्त्वा युनक्ति स त्वा युनक्त्विति प्रजापतिरेव त्वां योक्तुमर्हति ; अतस्स एव त्वां युनक्त्विति, पूर्वं प्रजापतिनैव योगः कारितः । एवमत्रापि प्रजापतिनैव विमुञ्चति—कस्त्वा युनक्ति स त्वा विमुञ्चत्विति । प्रजापतिर्हि त्वां युनक्ति स्म । अतस्स एव त्वां विमुञ्चतु । तेन युक्तं त्वां कोन्यो मोक्तुं शक्नोतीति भावः । एवं हि क्रियमाणं प्रतिष्ठित्यै भवति, इत-

*सं. १-६-८[4]

पतिनैवैनं युनक्ति प्रजापतिना वि
मुञ्चति प्रतिष्ठित्या ईश्वरं वै व्रतम-
विसृष्टं प्रदहोऽग्ने व्रतपते व्रतमचारिष-
मित्याह व्रतमेव ॥३०॥ वि सृजते
शान्त्या अप्रदाहाय पराङ् वाव

एनम् । युनक्ति । प्रजापतिनेति प्रजा-पतिना । वीति । मुञ्चति । प्रतिष्ठित्या इति प्रति-स्थित्यै । [13]ईश्वरम् । वै । व्रतम् । अविसृष्टमित्यवि-सृष्टम् । प्रदह इति प्र-दहः । अग्ने । व्रतपत इति व्रत-पते । व्रतम् । अचारिषम् । इति । आह । व्रतम् । एव ॥ ३० ॥ वीति । सृजते । शान्त्यै । अप्रदाहायेत्यप्र-दाहाय । [14]पराङ् । वाव । यज्ञः । एति । न । नीति । वर्तते । पुनः । यः । वै ।

---

रथा अप्रतिष्ठानस्स्यात् ; अन्येन विमोकस्याविमोकतुल्यत्वात् अप्रतिष्ठान एवेति । उक्तस्स्वरः । 'चादिलोपे विभाषा' इति प्रथमा तिङ्विभक्तिर्न निहन्यते ॥

[13]ईश्वरमित्यादि ॥ अविसृष्टं प्रदहः प्रकर्षेण दग्धुमीश्वरं शक्तम् । 'ईश्वरे तोसुन्कसुनौ' इति कसुन् । अग्ने व्रतपते इति व्रतविमोकः ॥

[14]पराङित्यादि ॥ युक्तमुक्तो गौरिव पराचीनगतिरेव यज्ञो

यज्ञ एति न नि वर्तते पुनर्यो वै
यज्ञस्य पुनरालम्भं विद्वान् यजते
तमभि नि वर्तते यज्ञो बभूव स
आ बभूवेत्याहैष वै यज्ञस्य पुनरा-
लम्भस्तेनैवैनं पुनरा लभतेऽनवरु-
द्धा वा एतस्य विराड्य आहिताग्नि-
स्सन्नसभः पशवः खलु वै ब्राह्म-

यज्ञस्य । पुनरालम्भमिति पुनः—आलम्भम् । विद्वान् । यजते । तम् । अभि । नीति । वर्तते । यज्ञः । बभूव । सः । एति । बभूव । इति । आह । एषः । वै । यज्ञस्य । पुनरालम्भ इति पुनः—आलम्भः । तेन । एव । एनम् । पुनः । एति । लभते । [15]अनवरुद्धेत्यनव—रुद्धा । वै । एतस्य । विराडिति वि—राट् । यः । आहिताग्निरित्याहित—अग्निः । सन् । असभः । पशवः । खलु । वै । ब्राह्मणस्य ।

---

मुक्तो गच्छति न पुनर्निवर्तते । किं सर्वत्र? नेत्याह—यो यज्ञस्य पुनरालम्भं विद्वान्यजते तमभि तदाभिमुख्येन निवर्तत एव । यज्ञो बभूवेत्यादि यज्ञस्य पुनरालम्भः ॥

[15]अनवरुद्धेति ॥ विराडन्नं असभः अपशुस्स्यात् । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । पशवः खल्वित्यादि । द्विपा-

णस्यं सुभेष्ट्वा प्राङुत्क्रम्यं ब्रूयाद्गो-
माः अग्नेऽविंमाः अश्वी यज्ञ इत्यव॑
सभाः रुन्धे प्र सहस्रं पशूनाप्नो-
त्यास्यं प्रजायां वाजी जायते॥३१॥

सभा । इष्ट्वा । प्राङ् । उत्क्रम्येत्युत्-क्रम्य । ब्रूयात् । गोमानिति गो-मान् । अग्ने । अविंमानित्यविं-मान् । अश्वी । यज्ञः । इति । अवेति । सभाम् । रुन्धे । प्रेति । सहस्रम् । पशून् । आप्नोति । एति । अस्य । प्रजायामिति प्र-जायाम् । वाजी । जायते ॥ ३१ ॥

यस्समाशिषं गृहपत इत्याहामुष्मै ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रो व्रतमेव खलु वै चतुर्विंशतिश्च ॥ ६ ॥

दश्चतुष्पादश्च तस्मादिष्ट्वा प्राङुत्क्रम्य उदेत्य 'गोमाः अग्ने'* इत्यादिकां गोमतीमृचं ब्रूयात् जपेत्, अवरुन्धे च सभाम् । प्राप्नोति च सहस्रं पशून् । आजायते वाजी अस्य प्रजासु । वाजी अन्नवान् पुरुषः । पूर्ववत्प्रथमा तिङ्विभक्तिर्न निहन्यते । 'बर्हिषोहम्'† इत्यनुवाकान्ते तु 'प्र सहस्रं पशूनाप्नोति'† इत्येकैव तिङ्विभक्तिः; आजायत इत्यस्या वेदितृविषयत्वात् । तस्माच्चलोपाभावादुभयमपि तत्र निहन्यते ॥

इति सप्तमे षष्ठोनुवाकः.

*सं. १-६-६ [15].  †सं. १-७-४ [1, 10].

देवं सवितः प्र सुव यज्ञं प्र सुव
यज्ञपतिं भगाय दिव्यो गन्धर्वः ।
केतपूः केतं नः पुनातु वाचस्पति-
र्वाचंमद्य स्वदाति नः । इन्द्रस्य व-

[1]देव । सवितः । प्रेति । सुव । यज्ञम् । प्रेति । सुव । यज्ञपतिमिति यज्ञ-पतिम् । भगाय । दिव्यः । गन्धर्वः । केतपूरिति केत-पूः । केतम् । नः । पुनातु । वाचः । पतिः । वाचम् । अद्य । स्वदाति । नः । [2]इन्द्रस्य । वज्रः । असि । वार्त्रघ्न

[1]अथ वाजपेयकाण्डं सौम्यम् । तत्र सावित्रं जुहोति—देवसवितरिति जगत्या ॥ 'सावित्रं जुहोति कर्मणःकर्मणः पुरस्तात्'* इत्यादि ब्राह्मणम् । हे देव सवितः सर्वस्य प्रसवितः प्रसुव प्रेरय प्रवर्तय यज्ञं वाजपेयं उदयादिभिः । यज्ञपतिं यजमानं च प्रसुव भगाय ऐश्वर्याय अनुष्ठानसामर्थ्याय अन्नाय वा । अन्नेन हि यागरसमाप्यते । दिव्यः दिवमर्हति 'छन्दसि च' इति यः । गन्धर्वः गामुदकं धारयिता वृष्टिद्वारेण यागस्य प्रवर्तयितेति । एवमीदृशस्त्वं प्रसुवेति । केतपूः केतस्यान्नस्य ज्ञानस्य वा प्रजाया वा शोधयिता वायुः सोस्माकं केतं पुनातु पवमानः वाचस्पतिर्देवः प्रजापतिर्मनो† वा । सोपि नोस्माकं वाचं अद्यास्मिन् कर्मणि स्वदाति स्वदयतु सुमतिं श्रवणीयां करोतु । लेट्याडागमः ॥

[2]रथमुपावहरति—इन्द्रस्येति यजुषा ॥ इन्द्रस्य यो वज्रस्स

*ब्रा १-३-५. †तं—मनसो.

ज्रोसि वार्त्रघ्नस्त्वयाऽयं वृत्रं वध्यात्।
वाजस्य नु प्रसवे मातरं महीम-
दितिं नाम वचसा करामहे। यस्या-
मिदं विश्वं भुवनमाविवेश तस्यां

इति वार्त्र-घ्नः। त्वया। अयम्। वृत्रम्। व-
ध्यात्। [3]वाजस्य। नु। प्रसव इति प्र-सवे।
मातरम्। महीम्। अदितिम्। नाम। वचसा।
करामहे। यस्याम्। इदम्। विश्वम्। भुवनम्।

---

एव त्वमसि। अमित्रवधसाधनत्वसामर्थ्यात् भाव [तद्भाव?] उप-
चर्यते। यद्वा—वजित्वा गतौ [वज गतौ] वज्रः। औणादिको
रः [रन्]। रथ उच्यते। इन्द्रस्य रथोसि [सीति] स्तूयते।
इन्द्रस्य रथो विशेष्यते—वार्तघ्नः वृत्रघ्नोयं वार्त्रघ्नः। उत्सा-
दित्वादञ्। यं रथमारुह्य वृत्रमसुरमिन्द्रो हतवान् स एव रथ-
स्त्वमसीति। तस्मात्त्वयाऽयं यजमानो वृत्रं वारकं छादयितारम-
मित्रं वध्यात्। आशिषि लिङ्। 'हनो वध लिङि' इति
वधादेशः॥

[3]अन्तर्वेद्यम्यावर्तयति—वाजस्येति जगत्या॥ वाजस्यान्नस्य प्र-
सवे उत्पत्तौ उत्पत्त्यर्थम्। थाथादिनोत्तरपदान्तोदात्तत्वम्। मातरं
अन्नस्य निर्मातारं महीं पृथिवीं अदितिं नाम। अदितिरदीनाऽ-
खण्डना वा। एवं स्वभाववन्नामधेयां वचसा स्तुत्या करामहे कुर्म-
हे। अदितिस्त्वमावामेनामन्नप्रसवार्थं स्तुम इत्यर्थः। व्यत्ययेन
शप्। किञ्च—यस्यामिदं विश्वं भुवनं भूतजातं आविवेश उपरि

नो देवस्सविता धर्मं साविषत् ।
अप्सु ॥३२॥ अन्तरमृतमप्सु भेष-
जमपामुत प्रशस्तिष्वश्वा भवथ वा-

आविवेशेत्या–विवेश । तस्याम् । नः । देवः । सविता । धर्मं । साविषत् । [4]अप्स्वित्यप्–सु॥३२॥ अन्तः । अमृतम् । अप्स्वित्यप्–सु । भेषजम् । अपाम् । उत । प्रशस्तिष्विति प्र–शस्तिषु । अ-

सुखेन वर्तते । तस्यामस्यां नोस्माकं धर्मं धारणं रथस्य देवस्सविता साविषत् अनुजानातु । सुवतेर्लेटि 'सिब्बहुलं लेटि' इति सिब्विकरणस्य लुक्, इतश्च लोपः, गुणे कृते छान्दसं दीर्घत्वम् । यद्वा—छान्दसो लुङ्, सिचि वृद्धिः, ईटोपवादोऽडागमः 'अमाङ्योगेपि' इति धातोरडभावः ॥

[4]अश्वानप्सु स्नापयति—अप्स्वन्तरिति पुरउष्णिहा ॥ अप्स्वन्तरममृतं वर्तते अमरणत्वम् । अप्स्वेव भेषजं अमृतत्वस्य साधनम् । 'ऊडिदम्' इति सप्तम्या उदात्तत्वम् । पूर्वत्र 'उदात्तस्वरितयोः' इति संहितायां स्वरितत्वम् । अमृतस्य स्वर उक्तः । तस्माद्या अन्या अप्यपां प्रशस्तयः प्रशस्तगुणाः तासु सर्वास्वपि हे अश्वा भवथ तत्सम्बन्धाद्यूयमपि तत्स्वभावा भवथ । हे वाजिनः अन्नवन्तः । अत्र पादादित्वादश्वा इति न निहन्यते । पाष्ठिकमामन्त्रिताद्युदात्तत्वम्; तस्य च व्यत्ययेन विद्यमानवत्त्वाभावः । यद्वा—नाश्वा इत्यामन्त्रितम् । अपां प्रशस्तिष्वश्वा व्याप्तिमन्तो भवथ हे वाजिन इति । सर्वमिष्टं सिद्धम् । 'तादौ च निति' इति गतेः प्रकृतिस्वरत्वम् ॥

जिनः [4]। वायुर्वा त्वा मनुर्वा त्वा गन्धर्वास्सप्तवि९शतिः । ते अग्रे अश्वमायुञ्जन्ते अस्मिञ्जवमादधुः । अपां नपादाशुहेमन् य ऊर्मिः

श्वाः । भवथ । वाजिनः । [5]वायुः । वा । त्वा । मनुः । वा । त्वा । गन्धर्वाः । सप्तवि९शतिरिति सप्त-वि९शतिः । ते । अग्रे । अश्वम् । आयुञ्जन् । ते । अस्मिन् । जवम् । एति । अदधुः । [6]अपाम् । नपात् । आशुहेमन्नित्याशु-हेमन् । यः । ऊर्मिः ।

---

[5]प्रष्टिवाहिनं रथं युनक्ति—वायुर्वा त्वेत्यनुष्टुभा ॥ वाशब्दस्समुच्चये, विकल्पासम्भवात् । प्राणो मनुः । तद्वानित्येके । प्रसिद्धा [सिद्ध] एवेत्यन्ये । वायुश्च मनुश्च गन्धर्वाश्च । कति पुनस्ते? पञ्चविंशतिरिति ब्रूमः । यदाहुः—सप्तविंशतिस्त इति । सर्वे सम्भूय वायुमनुभ्यां सह सप्तविंशतिसङ्ख्यास्त इत्यर्थः । ते सर्वेपि अग्रं प्रथममस्मत्तः पूर्वमश्वं व्याप्नुवन्तं आयुञ्जन् अयुञ्जत । ततोहं युनज्मीति । छान्दसे लङि छान्दस आडागमः । अटि वा वर्णव्यत्ययेन दीर्घत्वम् । किञ्च—ते वाय्वादयोस्मिंस्त्वयि जवं वेगं चादधुः आदधतु । छान्दसो लिट् । वायुश्च त्वां मनुश्च त्वां गन्धर्वाश्च त्वामिति प्रत्येकं योगसम्बन्धख्यापनाय युष्मच्छब्दावृत्तिः ॥

[6]षष्ठमश्वस्य प्रतिमार्ष्टि—अपान्नपादिति ककुदुष्णिहा ॥ द्वितीयस्य द्वादशाक्षरत्वात्, ऊर्मिरिति प्रथमपादान्तः । अश्व आम-

ककुद्मान्प्रतूर्तिर्वाजसातमस्तेनायं
वाजꣳ सेत् । विष्णोः क्रमोसि

ककुद्मानिति ककुत्–मान् । प्रतूर्तिरिति प्र–तूर्तिः । वाजसातम इति वाज–सातमः । तेन । अयम् । वाजम् । सेत् । ⁷विष्णोः । क्रमः । असि । वि-

न्नचते—हे अपान्नपात् अपां नप्तश्चतुर्थः । यथा—'अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधीभ्योन्नमन्नादश्वः' इति । हे आशुहेमन् आशुगन्तः । हि गतौ, 'अन्येभ्योपि दृश्यते' इति मनिन् । 'सुबामन्त्रिते' इति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य पाष्ठिकमामन्त्रिताद्युदात्तत्वम् । तस्य 'नामन्त्रिते समानाधिकरणे' इत्यविद्यमानवत्त्वनिषेधात्परं न निहन्यते । ऊर्मिश्छादयिता अरणशीलो वा यस्तरङ्गः ककुद्मान् प्रधानभूतः ककुत्सम्बन्धी वा प्रतूर्तिः त्वयि प्रतीर्णः त्वामभिगतः । नप्तत्तनिपत्तादौ निष्ठायां निपातितं निष्ठावद्भावात्क्तिनोपि भवति, 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । वाजसातमः अन्नस्य सम्भक्तृतमः दातृतमः । 'जनसनखन' इति विट्, 'विड्वनोः' इत्यात्वम् । तेन तादृशेनायं वाजमन्नं सेत् साधय यजमानस्य हे अश्व । लिङ्लेटोरन्यतरः, विकरणस्य लुक् । यद्वा—अयं यजमानः तेन त्वदीयेन वाजं सेत्साधयतु बध्नातु वा । षिञ् बन्धने ॥

⁷विष्णुक्रमान्क्रमते रथं यजमानोभ्येति—विष्णोरिति ॥ विष्णोर्भगवत एव क्रमोसि गमनसाधनत्वात् । प्रकृष्टस्य विष्णोः क्रमरूपेण स्तूयते रथः विष्णोः क्रमवत् भविष्यसि जयहेतुरिति । विष्णोः

विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमस्यङ्कौ न्यङ्कावभितो रथं यौ ध्वान्तं वाताग्रमनु सञ्चरन्तौ दूरेहे-

ष्णोः । क्रान्तम् । असि । विष्णोः । विक्रान्तमिति वि-क्रान्तम् । असि । [8]अङ्कौ । न्यङ्काविति नि-अङ्कौ । अभितः । रथम् । यौ । ध्वान्तम् । वाताग्रमिति वात-अग्रम् । अन्विति । सञ्चरन्ताविति सं-चरन्तौ । दूरेहेतिरिति दूरे-हेतिः ।

---

क्रान्तमसि यत्पूर्वं विष्णुना कृतं क्रमणं, तदेव त्वमसि तद्वज्जयसाधनं भविष्यसि अस्माकम् । विष्णोर्विक्रान्तं विजयः, तदेव त्वमसि तद्वद्विजयसाधनत्वात् । पूर्ववद्गतिस्वरः ॥

[8]रथस्य चक्रे पक्षसी वाभिमृशति—अङ्काविति त्रिष्टुभा ॥ अङ्कौ लक्षणभूतौ रथस्य । अकि लक्षणे, करणे घञ् । अञ्चतेर्वा । याभ्यां रथोऽञ्चति गच्छति तादृशौ । उञ्छादिर्द्रष्टव्यः । न्यङ्कौ नियतगमनौ निश्चितगमनौ वा । क? अभितो रथं रथस्य पार्श्वयोः यौ नियतगमनौ । 'नेरनिधाने' इत्युत्तरपदान्तोदात्तत्वम् । ध्वान्तं शब्दितं शब्दवत् । णिन्नि व्यत्ययेनेडभावः । वाताग्रं वातस्य पूर्वभागं अनुसञ्चरन्तौ शीघ्रतया वातमतिलङ्घ्य चरन्तौ तावङ्कौ । दूरेहेतिः, इन्द्रियावान्, पतत्रीत्येतन्नामानस्त्रयो नोऽस्माकमग्नयः पप्रयः पूरयितारः कर्मणाम् । एतावङ्कौ पारयन्तु कर्मणि समर्थौ कुर्वन्तु । यद्वा—नोऽस्माकं पप्रयः अस्मद्धितार्थं तौ पारयन्तु । प्रा पूरणे, छान्दसस्य लिटः

तिरिन्द्रियावांन्पतत्री ते नोमर्यः प-
प्रंयः पारयन्तु ॥ ३३ ॥
देवस्याहꣳ संवितुः प्रंसवे बृहस्पतिंना

इन्द्रियावानितींन्द्रिय-वान् । पतत्री । ते । नः ।
अमर्यः । पप्रंयः । पारयन्तु ॥ ३३ ॥
अप्सु न्यङ्ङ्गो पञ्चं दश च ॥ ७ ॥

[1]देवस्यं । अहम् । सवितुः । प्रसव इतिं प्र-
सवे । बृहस्पतिंना । वाजजितेतिं वाज-जितां ।

'आदृगमहन' इति किन्प्रत्ययः । ते इति वा लिङ्गव्यत्ययः; तावित्यर्थः । पक्षसी वा विशेष्येते; अङ्कसाधने ते पक्षसी पारयन्त्विति । पार तीर कर्मसमाप्तौ ॥

इति सप्तमे सप्तमोनुवाकः.

---

[1]रथमातिष्ठति तमनुमन्त्रयते—देवस्येति यजुषा ॥ सवितुः सर्वस्य प्रेरयितुः देवस्याहं प्रसवे अनुज्ञायां अनुज्ञां लब्ध्वैव न स्वातन्त्र्येण बृहस्पतिना ब्रह्मणा साधनभूतेन वाजजिता अन्नं जितवता वशीकृतसर्वान्नेन; अतस्तेनाहं वाजमन्नं जेषं जयेयम् । लेटि 'सिब्बहुलं लेटि' इति सिप्, मिपोडागमः, इतश्च लोपः । बृहस्पतिशब्दे 'तद्बृहतोः' इति सुट्, वनस्पत्यादित्वात्पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् ॥

वाजजिता वाजं जेषं देवस्याहꣳ स- वितुः प्रसवे बृहस्पतिना वाजजिता वर्षिष्ठं नाकꣳ रुहेयमिन्द्राय वाचं वदतेन्द्रं वाजं जापयतेन्द्रो वाजम- जयित् । अश्वाजनि वाजिनि वा-

वाजम् । जेषम् ।[2] देवस्य । अहम् । सवितुः । प्रसव इति प्र-सवे । बृहस्पतिना । वाजजितेति वाज-जिता । वर्षिष्ठम् । नाकम् । रुहेयम् ।[3] इन्द्राय । वाचम् । वदत । इन्द्रम् । वाजम् । जापयत । इन्द्रः । वा- जम् । अजयित् । [4]अश्वाजनीत्यश्व-अजनि ।

[2]चात्वाले रथचक्रं निमितं ब्रह्माधिरोहति तमभिमन्त्रयते— देवस्येति ॥ गतम्* । वर्षिष्ठं वृद्धतमं नाकं स्वर्गं स्वर्गस्थानीयं चक्रं रुहेयमारोहामि नाकमेव वानेन निमित्तेनारुहेयम् । 'लि- ङ्याशिष्यङ्' ॥

[3]दुन्दुभिं संह्रादयति—इन्द्रायेति ॥ इन्द्रायेन्द्रार्थं सर्वे वाचं वदत तस्य स्वामित्वात् यथेन्द्रो जयति तथा शब्दयत । यज- मान एव वा ऐश्वर्ययोगादिन्द्रः; तस्य शोभनां वाचं वदत । इन्द्रं वाजं जापयत । 'क्रीङ्जीनां णौ' इत्यात्वम्, 'अर्तिह्री' इत्यादिना पुक् । इन्द्रश्च वाजमन्नमजयित् अजयत् । जयतेश्छा- न्दसे लङि वर्णव्यत्ययेन शप इकारः । शपो वा लुकि तिप इडागमः॥

[4]अश्वाजनीं प्रयच्छति—अश्वाजनीति गायत्र्या ॥ याऽश्वा-

*सं. १-७-८[1]

जेषु वाजिनीवत्यश्वान्त्समत्सु वा-
जय । अर्वाऽसि सप्तिरसि वाज्य-
सि वाजिनो वाजं धावत मरुतां

वाजिनि । वाजेषु । वाजिनीवतीति वाजिनी-वति । अश्वान् । समत्स्विति समत्-सु । वाजय। [5]अर्वा । असि । [6]सप्तिः । असि । [7]वाजी । असि। [8-9]वाजिनः । वाजम् । धावत । मरुताम् । प्रसव

नाजयति गमयति साश्वाजनी कशोच्यते । वाजिनी अन्नवती यज्ञसाधनद्वारेण । यद्वा—वेगवती; अश्वानां वेगहेतुत्वात् । वाजेषु अन्नेषु साध्येषु वाजिनीवती वेगवत्या गत्या तद्वती । यद्वा—वेगवत्याश्वपङ्क्त्या तद्वती । सा त्वमश्वान् समत्सु सङ्ग्रामेषु वाजय गमय । सह माद्यन्त्यास्विति समदः ॥

[5-7]तयाश्वान् समवाक्षिणोति—अर्वासीति ॥ अर्वा अरणकुशलः । 'अन्येभ्योपि दृश्यन्ते' इति वनिप् । तादृशोसीति दक्षिणम् । सप्तिः । षप समवाये । सङ्ग्रामेषु सहसा समवैति । तादृशोसीति मध्यमम् । वाजी वेगवान् अन्नवान्वा । तादृशोसीत्युत्तरम् । उक्तमुदात्तयणः परस्यानुदात्तस्य स्वरितत्वम् । 'अग्निर्वा अर्वा । वायुस्सप्तिः । आदित्यो वाजी । '* इत्यादि ब्राह्मणम् ॥

[8-9]अश्वानाजिशिरोभ्यावर्तयति—वाजिन इति द्वाभ्याम् । तत्राद्या द्विपदा गायत्री ॥ हे वाजिनः अश्वा वाजमन्नं प्रति

*ब्रा. १-३-६.

प्रसवे जयत वि योजना मिमीध्व-
मध्वनस्स्कभ्नीत ॥ ३४ ॥ काष्ठां
गच्छत वाजेवाजेऽवत वाजिनो नो

इति प्र-सवे । जयत । वीति । योजना । मिमी-
ध्वम् । अध्वनः । स्कभ्नीत ॥ ३४ ॥ काष्ठाम् ।
गच्छत । [10]वाजेवाज इति वाजे-वाजे । अवत ।

धावत वाजं साधयितुं शीघ्रं गच्छत । सर्तेर्वेगितायां गतौ धावादेशः । मरुतां प्रसवेऽनुज्ञायां जयतान्नम् । ते हि युष्मानाज्ञापयन्ति ; यूयं चास्माकं जयत । कथं धावतीति चेत्—वियोजनेति । इयं त्रिपदोपमा प्रतिष्ठा वा ; 'पङ्क्तमत्तकाष्टकैर्विवर्धमाना । विपरीता प्रतिष्ठा'* इति । ककुद्मती वा, 'एतस्मिन् पञ्चमे सर्वं छन्दः शङ्कुमती । पङ्क्ते ककुद्मती'† । योजना योजनानि विमिमीध्वं बहून्यपि योजनानि मिमीध्वम् । गमनशैघ्र्येण विमितानि परिमितानि अल्पानीव कुरुध्वम् । माङ् माने । किञ्च—अध्वनो मार्गान् स्कभ्नीत स्तम्भयत शीघ्रया गत्या हितानि कुरुत । काष्ठामध्वसमाप्तिं आजिशिरो गच्छत । गन्तव्यमध्वानं शीघ्रं लङ्घयतेति यावत् ॥

[10]अश्वान् धावतोनुमन्त्रयते—वाजेवाज इत्यादिभिश्चतसृभिः । आद्या त्रिष्टुप् । 'वाजिनो नः' इति प्रथमपादान्तः ॥ वाजे-

*पि ३-१४, १५.
†पि सूत्रे 'एकस्मिन्पञ्चके छन्दश्शङ्कुमती' (३-५५) इत्येव दृश्यते.

धनेषु विप्रा अमृता ऋतज्ञाः। अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः । ते नो अर्वन्तो हवनश्रुतो हवं विश्वे शृण्वन्तु

वाजिनः । नः । धनेषु । विप्राः । अमृताः । ऋतज्ञा इत्यृत—ज्ञाः । अस्य । मध्वः । पिबत । मादयध्वम् । तृप्ताः । यात । पथिभिरिति पथि—भिः । देवयानैरिति देव—यानैः । "ते । नः । अर्वन्तः । हवनश्रुत इति हवन—श्रुतः । हवम् ।

वाजे अन्नेऽन्ने साध्ये वाजिनः अश्वाः अस्मानवत रक्षत तल्लम्भयित्वा । किञ्च—धनेषु अवतेति धनानि चास्मान् लम्भयत । हे विप्रा मेधाविनः यथा तद्रागिणः अमृताः अमरणाः ऋतज्ञाः सत्यज्ञास्सत्यवन्तः अस्य मध्वः मधुसदृशस्य घृतस्य पिबत । पूर्ववत्कर्मणि षष्ठी । नुमभावश्छान्दसः । पीत्वा च मादयध्वं तृप्यत । मद तृप्तियोगे, चुरादिरनुदात्तेत् । तृप्ताश्च यात गच्छत । पथिभिर्मार्गैर्देवयानैः देवा यैर्गच्छन्ति, तैर्मनोहरैः । कदुत्तरपदप्रकृतिस्वरत्वम् । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् ॥

"ते नो अर्वन्त इति द्विपदा विराट् । 'विराड्जागतगायत्राभ्याम्' इति ॥ हे अर्वन्तः अरणकुशलाः । अर्तेः 'अन्येभ्योपि दृश्यन्ते' इति वनिप् । 'अर्वणस्त्रसावनञः' । हवनश्रुतः आह्वानस्य श्रोतारः ते वाजिनोश्वाः अस्माकं हवं आह्वानं शृण्वन्तु विश्वे सर्वेपि । 'भावेनुपसर्गस्य' इति अप्, सम्प्रसारणं च ॥

वा॒जिनः॑ । मि॒तद्र॑वस्सहस्र॒सा मे॒-
धसा॑ता सनि॒ष्यवः॑ । म॒हो ये रत्न॑ꣳ
स॒मि॒धेषु॑ ज॒भ्रि॒रे शं नो॑ भवन्तु
विश्वे॑।शृ॒ण्व॒न्तु । वा॒जिनः॑ । [12]मि॒तद्र॑व॒ इति॑ मि॒त–
द्र॒वः । स॒ह॒स्र॒सा इति॑ सहस्र–साः । मे॒धसा॒तेति॑
मेध–सा॒ता । स॒नि॒ष्यवः॑ । म॒हः । ये । रत्न॑म् ।
स॒मि॒धेष्विति॑ सं–इ॒धेषु॑ । ज॒भ्रि॒रे । [13]शम् । नः॒ ।

---

[12]मितद्रव इति परोष्णिक् अस्तारपङ्क्तिर्वा, 'परो चेद्गादशाक्षरावास्तारपङ्क्तिः' इति ॥ मितमल्पमिव महान्तमपि पन्थानं द्रवन्ति गच्छन्तीति मितद्रवः । यद्वा—मितं शीघ्रं गच्छन्तीति मितद्रवः 'मितद्र्वादिभ्य उपसङ्ख्यानम्' इति डुप्रत्ययः, दासीभारादिर्द्रष्टव्यः । मितं द्रवणं येषामिति वा बहुव्रीहिः । सहस्रसाः सहस्रस्य महतो धनराशेः सनितारः । पूर्ववद्विट्प्रत्यय आकारश्च । मेधसाता मेधस्य सननं सम्भजनं मेधसातिः यज्ञप्राप्तिः । तस्मिन्निमित्ते यतमानाः । 'जनसनखनां सञ्झलोः' इत्यात्वम्, 'सुपां सुलुक्' इति सप्तम्या डादेशः, दासीभारादिः । सनिष्यवः सनिस्सननीयं धनं वा संविभजनम् । सनेरिसिप्रत्ययः, तदन्तात् 'सुप आत्मनः' इति क्यच् । इप्रत्ययान्ताद्वा क्यचि छान्दसस्सुडागमः । किञ्च—ये वाजिनस्समिधेषु सङ्ग्रामेषु । 'समीणः' इति धक्प्रत्ययः । महः महतः महाबलस्य शत्रोः रत्नं धनं जभ्रिरे हरन्ति । छान्दसो लिट् । 'हृग्रहोर्भः' इति भत्वम् ॥

[13]शं नो भवन्त्विति त्रिष्टुप् । अस्तारपङ्क्तिपक्षे देवतातेत्यादिः

वाजिनो हवेषु । देवताता मितद्रव-
स्स्वर्काः । जम्भयन्तोऽहिं वृकꣳ र-
क्षाꣳसि सनेम्यस्मद्युयवन्न् ॥३५॥

भवन्तु । वाजिनः । हवेषु । देवतातेति देव-ताता । मितद्रव इति मित-द्रवः । स्वर्का इति सु-अर्काः । जम्भयन्तः । अहिम् । वृकम् । रक्षाꣳसि । सनेमि । अस्मत् । युयवन् ॥ ३५ ॥ अमीवाः ।

त्रिपदा त्रिष्टुप् ॥ नोस्माकं शं भवन्तु सुखहेतवो भवन्तु हवेषु आह्वानेषु । पूर्ववदप् । वाजिनोश्वाः देवताता देवास्तायन्ते विस्तार्यन्ते पृथक्पृथगाराध्यन्तेस्मिन्निति देवतातिर्यज्ञः । परमप्यनुनासिकलोपं बाधित्वा व्यत्ययेन 'अनुनासिकस्य क्विझलोः' इति पूर्वपदस्य दीर्घत्वम्, तत्रानुनासिकलोपः, पूर्ववत्सप्तम्या डादेशः । दासीभारादिः । मितद्रवः व्याख्यातम्*। स्वर्काः शोभनगमनाः शोभनस्तुतयो वा । 'नञ्सुभ्याम्' इति स्वरः । जम्भयन्तः भञ्जयन्तः अहिमागत्य हन्तारं वृकं हिंसकं चोरादिकं रक्षांसि च । यद्वा—अहिमागत्य हन्तारं वृकमपहर्तारम् । वृक वृक आदाने, इगुपधात्कः । रक्षांसि धर्मविघ्नकारीणि । सनेमि क्षिप्रमित्येके, पुराणमित्यन्ये । अस्मदस्मत्तः युयवन् यावयन्तु पृथक्कुर्वन्तु । किञ्च—अमीवाः रोगांश्च युयवन्नित्येव । आगत्य हिंसन्तीत्यमीवाः । मीयतेराङ्पूर्वाद्वन्प्रत्ययः, उपसर्गस्य च ह्रस्वत्वं निपात्यते । यौतेर्लेटि शपश्श्लुः, 'छन्दस्युभयथा' इत्यार्धधातुकत्वात् ङित्त्वाभावे गुणः ॥

* सं. १-७-८.¹²

अमीवाः । एष स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि । क्रतुं दधिक्रा अनु सन्त-

[14]एषः । स्यः । वाजी । क्षिपणिम् । तुरण्यति । ग्रीवायाम् । बद्धः । अपिकक्ष इत्यपि–कक्षे । आसनि । क्रतुम् । दधिक्रा इति दधि–क्राः । अन्विति । सन्तवीत्वदिति सं–तवीत्वत् । पथाम् । अ-

[14]प्रत्याधावतोऽनुमन्त्रयते—एष स्य इति जगती ॥ स्योऽश्वः सामान्येनोच्यते । एष स्यः स एषः वाजी अश्वः । 'स्यश्छन्दसि बहुलम्' इति सुलोपः । क्षिपणिं कशां क्षिप्यतेऽनयेत्यनिः । तुरण्यति त्वरयन्नतीव शीघ्रं प्रस्थापयति । तुरण त्वरायाम्, कण्ड्वादिरन्तर्भावितण्यर्थः । विभक्तिव्यत्ययो वा । क्षिपण्या क्षिपणिप्रहारेण त्वरयते तूर्णं गच्छति । ग्रीवायां बद्धः उरोबन्ध्रेण अपिकक्षे कक्षेऽपि कक्ष्यया बद्ध इत्येव । 'सुप्सुपा' इति समासः । यद्वा—कक्ष्यायामपीतः अपिकक्षः अवयवविशेषः यत्र कक्ष्यया बध्यते । निरुदकादित्वादुत्तरपदान्तोदात्तत्वम् । आसनि आस्ये च बद्धः खलीनेन । 'पद्दन्' इत्यादिना आसन्नादेशः । एवमेषु स्थानेषु बद्धोऽप्येवं शीघ्रो भवतीति अन्यो ह्येषामेकत्रापि बद्धश्चलितुमपि न शक्नोतीति भावः । पुनश्च विशेष्यते—क्रतुं सादिनः प्रज्ञामभिप्रायं कर्म दात्मीयं यन्महाश्वानामुचितं भवति; तत् अनुसन्तवीत्वत् अनुसंवर्धमानः अनुविदधान इति यावत् । अनुक्रमेण वा संवर्धयन् । तु इति वृद्धिकर्मा, ततो यङ्लुकि 'गुणो यङ्लुकोः' इति गुणे, ह्रस्वे अभ्यासस्येडागमः, शतरि 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्, छन्द-

I

वीत्वत्पथामङ्काꣳस्यन्वापनीफणत्। उत स्मास्य द्रवतस्तुरण्यतः पर्णं न वेरनु वाति प्रगर्धिनः। श्येनस्येव

ङ्काꣳसि । अन्विति । आपनीफणदित्या—पनीफणत् । [15]उत । स्म । अस्य । द्रवतः । तुरण्यतः । पर्णम् । न । वेः । अन्विति । वाति । प्रगर्धिन इति प्र—गर्धिनः । श्येनस्य । इव । ध्रजतः । अ-

त्तरपदप्रकृतिस्वरत्वम् । दधिक्राः धारकान् पर्वतादीन् क्रामन् दूरस्थानपि सहसावक्रामन्निति यावत् । (पर्वतादीन् माक्षि वा) । 'जनसन' इत्यादिना विट्, 'विड्वनोरनुनासिकस्यात्' इत्यात्वम् । पुनश्च विशेष्यते—पथां मार्गाणां अङ्कांसि लक्ष्मस्थानीयानि कुटिलानि निम्नोन्नतत्वादीनि वा । अकि लक्षणे, असुन् । अन्वापनीफणत् अनुक्रमेण ऋजुत्वं समत्वं च पथामापादयन् । दाधर्त्यादौ निपात्यते, पूर्ववत्स्वरः । एवं कुर्वन् तुरण्यति ॥

[15]उत स्मेत्यादि ॥ स्मेति पादपूरणे । अपि चास्य द्रवतः गच्छतः तुरण्यतः त्वरमाणस्य । 'शतुरनुमः' इति षष्ठ्या उदात्तत्वम् । अस्येत्यन्वादेशानुदात्तत्वम् । प्रगर्धिनः गन्तव्याक्रमणाभिकाङ्क्षिणः अस्याश्वस्याङ्कसं देहासक्तं चामरादिकं वस्त्रादिकं चास्य लक्षणभूतं तत्सर्वं परितः सर्वस्मिन्नपि देहे विद्यमानं अनुवाति गच्छति । अङ्कतेरौणादिकोऽसिच्प्रत्ययः । कस्येव किमिव नेत्यत्राह—श्येनस्येव वेः पक्षिणः ध्रजतो गच्छतः । ध्रज गतौ । पर्णं न पत्रमिव पत्रार्थं प्रगर्धिनः आमिषार्थिनः । अने-

ध्रजंतो अङ्क्सं परिं दधिक्रावूण्णं-
स्सुहोर्जा तरित्रतः । आ मा वा-
जस्य प्रसुवो जंगम्यादा द्यावापृ-
थिवी विश्वशंम्भू । आ मां गन्तां

ङ्क्सम् । परीतिं । दुधिक्रावूण्ण इतिं दधि-क्रा-
वूण्णंः । सुह । ऊुर्जा । तरित्रतः । [16]एतिं । मा ।
वाजंस्य । प्रसुव इतिं प्र-सुवः । जुगुम्यात् ।
एतिं । द्यावापृथिवी इति द्यावा-पृथिवी । विश्वशं-
म्भू इतिं विश्व-शम्भू । एतिं । मा । गन्ताम् ।

---

केवशब्दाद्वाक्यार्थोपमा भवतीति द्वयोरुपमार्थीययोरुपादानम् । अ-
श्वो विशेष्यते—दधिक्राव्णः व्याख्यातः* । ऊर्जा बलेन सह
तरित्रतः भृशं तरतः । यद्वा—ऊर्जा अन्नेन आमिषादिना सह
तरतः श्येनस्येव । वेगवत्त्वातिशयप्रदर्शनार्थं चेदम् । तरतेर्य-
ङ्लुगन्तस्य तत्रैव निपात्यते, 'शतुरनुमः' इत्येतद्बाधित्वा परत्वात्
'अभ्यस्तानामादिः' इत्याद्युदात्तत्वं भवति । 'सावेकाचः'
इत्यूर्जस्तृतीयाया उदात्तत्वम् ॥

[16]रथविमोचनीयं जुहोति—आ मा वाजस्येति त्रिष्टुभा ॥
वाजस्यान्नस्य प्रसवः प्रसूतिः उत्पत्तिः मा मां आजगम्यात्
आगच्छेत् । लिङि शपश्लुः । अन्नं ममोत्पद्यतामित्यर्थः ।
किञ्च—द्यावापृथिवी द्यावापृथिव्यौ च मामागच्छेताम् । विश्व-

*सं. १-५-११.३।

पितरा ॥३६॥ मातरा चा मा सोमो अमृतत्वाय गम्यात् । वाजिनो वाजजितो वाजꣳ सरिष्यन्तो वाजं जेष्यन्तो बृहस्पतेर्भागमव जिघ्रत

पितरा ॥ ३६ ॥ मातरा । च । एति । मा । सोमः । अमृतत्वायेत्यमृत—त्वाय । गम्यात् । [17]वाजिनः । वाजजित इति वाज—जितः । वाजम् । सरिष्यन्तः । वाजम् । जेष्यन्तः । बृहस्पतेः ।

---

शम्भू विश्वस्य शं सुखं भावयन्त्यौ । मितद्र्वादित्वाड्डुप्रत्ययः । क्विपि वा द्विवचनस्य पूर्वसवर्णदीर्घत्वम् । किञ्च—पितरा मातरा च पिता माता च मामागच्छेताम् । लेटि शपो लुक्, 'पितरा मातरा च छन्दसि' इति निपात्यते । यद्वा—उभयत्रापि 'सुपां सुलुक्' इति सोराकारः । किञ्च—सोमश्च माममृतत्वाय अमरणत्वाय गम्यादागच्छेत् । लिङि शपो लुक् । आशिषि लिङ्वा ॥

[17]रथयुजोऽश्वान्नैवारं चरुमवघ्रापयति—वाजिन इति यजुषा ॥ हे वाजिनः अश्वाः वाजजितः वाजमन्नं जेतुमुद्यताः । 'विभाषितं विशेषवचने बहुवचनम्' इति पूर्वस्याविद्यमानवत्त्वाभावः । वाजं वाजहेतुमाजिं सरिष्यन्तस्सर्तुकामाः सृत्वा च वाजमाजिं जेष्यन्तो जेतुकामाः । उभयत्रापि हेतौ शता । सरणार्थं जयार्थं चेत्यर्थः । बृहस्पतेः बार्हस्पत्यस्य चरोर्नैवारस्य भागमवजिघ्रत । बृहस्पतिशब्दे सुट्तलोपौ । 'कर्षात्वतः' इति भागशब्दोऽन्तोदात्तः ॥

वाजिनो वाजजितो वाजꣳ ससृ-
वाꣳसो वाजं जिगिवाꣳसो बृहस्प-
तेर्भागे नि मृड्ढमियं वस्सा सत्या
सन्धाऽभूद्यामिन्द्रेण समधध्वमजी-

भागम् । अवेति । जिघ्रत । [18]वाजिनः । वाज-जित इति वाज–जितः । वाजम् । ससृवाꣳसः । वाजम् । जिगिवाꣳसः । बृहस्पतेः । भागे । नीति । मृड्ढम् । [19]इयम् । वः । सा । सत्या । सन्धेति सं–धा । अभूत् । याम् । इन्द्रेण । समध-

[18]आगतवतोवघ्रापयति ॥ हे वाजिनः वाजजितः वाजं ससृवांसः सृतवन्तः वाजं जिगिवांसः जितवन्तः । 'अभ्यासाच्च' इति कुत्वम् । बृहस्पतेर्भागे निमृड्ढं निमार्जयध्वं शुद्धा भवत । मृजूष् शौचालङ्कारयोः, चुरादिराधृषीयः अनुदात्तेत् अकर्मकः, 'बहुलं छन्दसि' इति शपो लुक् । मार्ष्टेर्वा व्यत्ययेनात्मनेपदम् । आत्मानं शोधयतेति ॥

[19]दुन्दुभीन्विमुच्यमानाननुमन्त्रयते—इयं व इति यजुषा ॥ हे दुन्दुभयः इयं वो युष्माकं सा सन्धा सन्धानं सत्या अमोघफलाऽभूत् । केत्याह—यां सन्धां इन्द्रेण समधध्वं इन्द्रेण सह कृतवन्तः 'इन्द्राय वाचं वदत'* इत्यादिका सा सत्याभूदिति । किञ्च—हे वनस्पतयः । विकारे प्रकृतिशब्दः । वनस्पतिविकारा

*सं. १-७-८.३

जिपत वनस्पतय इन्द्रं वाजं वि
मुंच्यध्वम् ॥ ३७ ॥
क्षत्रस्योल्वमसि क्षत्रस्ययोनिरसि

ध्वमिति सं–अधध्वम् । अजीजिपत । वनस्पतयः
इन्द्रम् । वाजम् । वीति । मुच्यध्वम् ॥ ३७ ।
स्कभ्नीत युयवन्पितरा द्विचत्वारिꣳशच्च ॥८॥
[1]क्षत्रस्य । उल्वम् । असि । [2]क्षत्रस्य । योनिः

हि दुन्दुभयः इन्द्रं वाजमजीजिपत इन्द्रं वाजस्यान्नस्य जेतारं कृतवन्तः । यथोक्तं पूर्वं 'इन्द्रं वाजं जापयत'* -इति । तच्च तथा कृतवन्तस्स्थेत्यर्थः । सम्प्रति विमुच्यध्वं विश्राम्यत विमुक्ताः। जयतेर्णौ 'क्रीड्जीनां णौ' इत्यात्वम्, वर्णव्यत्ययेन धातोरिकारः । वनस्पतिशब्दः पारस्करादिः ॥

इति सप्तमे अष्टमोनुवाकः.

---

[1]यजमानं तार्प्यं घृताक्तं वस्त्रं परिधापयति—क्षत्रस्येति ॥ केचित्तु त्वचं तार्प्यमाहुः । क्षत्रस्य धनस्य शरीरलक्षणस्य उल्वं रक्षाधिकरणस्थानीयं वा परिवासस्त्वमसि ॥

[2]दर्भमयं पत्नी—क्षत्रस्येति ॥ क्षत्रस्य धनस्य योनिः कारणमसि । दर्भमूलत्वाद्धनसाधनानां कर्मणाम् ॥

*सं. १-७-८.३

जाय॒ एहि॒ सुवो॒ रोहा॑व॒ रोहा॑व॒ हि सुव॒रहं नौ॑व॒भयो॒स्सुवो॒ रोक्ष्यामि॒ वाज॑श्च प्रस॒वश्चा॑पि॒जश्च॒ क्रतु॑श्च॒ सु-

अ॒सि । [3]जाये॑ । एति॑ । इ॒हि॒ । सुव॑ः । रोहा॑व । [4]रोहा॑व । हि । सुव॑ः । [5]अ॒हम् । नौ॒ । उ॒भयो॑ः । सुव॑ः । रो॒क्ष्या॒मि॒ । [6]वाज॑ः । च॒ । प्र॒स॒व इति॑ प्र-स॒वः॑ । च॒ । अ॒पि॒ज इत्य॑पि-जः । च॒ । क्रतु॑ः । च॒ ।

---

[3]जायामामन्त्रयते—जाये इति ॥ हे जाये एह्यागच्छ सुवः स्वर्ग स्वर्गहेतुं निश्रेणिं रोहाव त्वञ्चाहञ्च किं रोहावेति । 'नादिलोपे विभाषा' इति तिङन्तस्य निघातप्रतिषेधः । 'स्वरो रोहतो छन्दसि' इत्युत्वम् ॥

[4]जाया पतिम्याम[पतिं प्रत्या]ह—रोहाव हीति ॥ एव भवत्या[त्वा] रोहाव सुवरावाम् । हिशब्दो यस्मादर्थे । यस्मात्सुवः तस्माद्रोहाव इति । अपदात्परत्वान्न निहन्यते, हियोगाच्च ॥

[5]यजमान आह—अहमिति ॥ तर्हि नौ आवयोरुभयोरहं सुवो रोक्ष्यामि । पूर्ववदुत्वम् ॥

[6]वाजप्रसवीया द्वादश स्रुवाहुतीर्जुहोति—वाजश्चेत्यादि ॥ प्राजापत्यास्सर्वाः; तस्य सर्वमयत्वात् । वाजोऽन्नम् । प्रसवस्तस्योत्पत्तिः अनुज्ञा वा । थाथादिनोत्तरपदान्तोदात्तत्वम् । अपिजः तस्यैव पुनःपुनरुत्पत्तिः । 'अन्येषामपि दृश्यते' इति डः । क्रतुस्सङ्कल्पः भोगादिविषयः, यागो वा । सुवरादित्यः तस्योत्पत्तौ हेतुः । मूर्धा अहः; प्रथ-

वंश्च मूर्धा च व्यश्नियश्चाऽऽन्त्यायन-
श्चाऽन्त्यंश्च भौवनश्च भुवनश्चाधिप-
तिश्च । आयुर्यज्ञेन कल्पतां प्राणो
यज्ञेन कल्पतामपानः ॥ ३८ ॥
यज्ञेन कल्पतां व्यानो यज्ञेन क-

सुवः । च । मूर्धा । च । व्यश्नियं इति वि-अ-
श्नियः । च । आन्त्यायनः । च । अन्त्यः । च ।
भौवनः । च । भुवनः । च । अधिपतिरित्यधि-
पतिः । च । [7]आयुः । यज्ञेन । कल्पताम् । [8]प्राण
इति प्र-अनः । यज्ञेन । कल्पताम् । [9]अपान
इत्यंप-अनः ॥३८॥ यज्ञेन । कल्पताम् । [10]व्यान

मोपलब्धेः प्राधान्यात् । व्यश्नियः रात्रिः विविधमन्नं व्याप्तिर्वा व्यक्षः तत्र साधुः व्यश्नियः सर्वपरिणामहेतुत्वात् । आन्त्यायनः मासः, रविगत्योः अन्ते भवे अयने अन्त्ये ; तयोरपत्यस्थानीयत्वात् । संवत्सरो वा अन्त्यः ; सर्वमासान्तभवत्वात् । तस्यापत्यस्थानीयो मास आन्त्यायनः । नडादिर्द्रष्टव्यः । अन्तशब्दाद्वा गर्गादियञन्तात् 'यञिञोश्च' इति फक् । अन्त्यस्संवत्सरः मासानामन्ते भवः । भौवनः प्रजापतिः ; भुवनात् विश्वोपादानादुत्पन्नत्वात् । भवत्यस्माद्विश्वमिति भुवनः । औणादिकः क्युन्प्रत्ययः । अधिपतिः ततोप्यधिको विश्वस्य पतिः विश्वाधिको देवः । एते वाजादयो मम सन्तु इति शेषः ॥

[7–16]दशभिः कल्पैरोहति—आयुर्यज्ञेनेति ॥ आयुर्जीवनमन्नं

ल्पतां चक्षुर्यज्ञेनं कल्पताꣳ श्रोत्रं
यज्ञेनं कल्पतां मनो यज्ञेनं कल्प-
तां वाग्यज्ञेनं कल्पतामात्मा य-
ज्ञेनं कल्पतां यज्ञो यज्ञेनं कल्पताꣳ
सुवर्देवाꣳ अंगन्मामृता अभूम प्र-

इति वि–अनः । यज्ञेनं । कल्पताम् । [11]चक्षुः । यज्ञेनं । कल्पताम् । [12]श्रोत्रम् । यज्ञेनं । कल्पताम् । [13]मनः । यज्ञेनं । कल्पताम् । [14]वाक् । यज्ञेनं । कल्पताम् । [15]आत्मा । यज्ञेनं । कल्पताम् । [16]यज्ञः । यज्ञेनं । कल्पताम् । [17]सुवः । देवान् । अगन्म । अमृताः । अभूम । प्रजापतेरिति प्रजा–पतेः ।

---

वा । तद्यज्ञेनानेन कल्पतां मम सम्पद्यतां यथाश्रुतं भूयात् । प्राणादीनां कल्पनं स्वकार्यकरणसामर्थ्यम् । पदानि व्याख्यातानि । यज्ञस्य कल्पनं अविच्छेदेन प्रवर्तनम् ॥

[17]आरुह्य बाहू उद्गृह्णाति—सुवरिति ॥ सुवः स्वर्गं देवांश्च तत्रस्थान् सर्वान् अगन्म गतवन्तो वयम् । 'अस्मदो द्वयोश्च' इत्येकस्मिन् बहुवचनम् । अनेन निश्रेण्यारोहणेन स्वर्गं देवांश्च प्राप्ता वयमिति । छान्दसो भविष्यति लङ् । अनेनारोहणेन स्वर्गं देवांश्च गमिष्यामो वयमिति । 'आशंसायां भूतवच्च' इति वा भविष्यति भूतप्रत्ययः । सांहितिकौ रुत्वानुनासिकौ । अमृता अमरणा- अभूम भविष्यामो वा । 'न ञो जरमर'

वंश्च मूर्धा च व्यश्रियश्चाऽऽन्त्यायन-
श्चाऽन्त्यंश्च भौवनश्च भुवनश्चाधिप-
तिश्च । आयुर्यज्ञेनं कल्पतां प्राणो
यज्ञेनं कल्पतामपानः ॥ ३८ ॥
यज्ञेनं कल्पतां व्यानो यज्ञेनं क-

सुवंः । च । मूर्धा । च । व्यश्रिय इति वि-अ-
श्रियः । च । आन्त्यायनः । च । अन्त्यंः । च ।
भौवनः । च । भुवंनः । च । अधिपतिरित्यधि-
पतिः । च । [7]आयुः । यज्ञेनं । कल्पताम् । [8]प्राण
इति प्र-अनः । यज्ञेनं । कल्पताम् । [9]अपान
इत्यंप-अनः ॥३८॥ यज्ञेनं । कल्पताम् । [10]व्यान

---

मोपलब्धेः प्राधान्यात् । व्यश्रियः रात्रिः विविधमन्नं व्याप्तिर्वा व्यश्नः तत्र साधुः व्यश्रियः सर्वपरिणामहेतुत्वात् । आन्त्यायनः मासः, रविगत्योः अन्ते भवे अयने अन्त्ये ; तयोरपत्यस्थानीयत्वात् । संवत्सरो वा अन्त्यः ; सर्वमासान्तभवत्वात् । तस्यापत्यस्थानीयो मास आन्त्यायनः । नडादिर्द्रष्टव्यः । अन्तशब्दाद्वा गर्गादियनन्तात् 'यञिञोश्च' इति फक् । अन्त्यस्संवत्सरः मासानामन्ते भवः । भौवनः प्रजापतिः ; भुवनात् विश्वोपादानादुत्पन्नत्वात् । भवत्यस्माद्विश्वमिति भुवनः । औणादिकः क्युन्प्रत्ययः । अधिपतिः ततोप्यधिको विश्वस्य पतिः विश्वाधिको देवः । एते वाजादयो मम सन्तु इति शेषः ॥

[7–16]दशभिः कल्पैरोहति—आयुर्यज्ञेनेति ॥ आयुर्जीवनमन्नं

ल्पतां चक्षुर्यज्ञेन कल्पताꣳ श्रोत्रं
यज्ञेन कल्पतां मनो यज्ञेन कल्प-
तां वाग्यज्ञेन कल्पतामात्मा यु-
ज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताꣳ
सुवर्देवाꣳ अगन्मामृता अभूम प्र-

इति वि-अनः । यज्ञेन । कल्पताम् । [11]चक्षुः । यज्ञेन । कल्पताम् । [12]श्रोत्रम् । यज्ञेन । कल्पताम् । [13]मनः । यज्ञेन । कल्पताम् । [14]वाक् । यज्ञेन । कल्पताम् । [15]आत्मा । यज्ञेन । कल्पताम् । [16]यज्ञः । यज्ञेन । कल्पताम् । [17]सुवः । देवान् । अगन्म । अमृताः । अभूम । प्रजापतेरिति प्रजा-पतेः ।

वा । तद्यज्ञेनानेन कल्पतां मम सम्पद्यतां यथाश्रुतं भूयात् । प्राणादीनां कल्पनं स्वकार्यकरणसामर्थ्यम् । पदानि व्याख्यातानि । यज्ञस्य कल्पनं अविच्छेदेन प्रवर्तनम् ॥

[17]आरुह्य बाहू उद्गृह्णाति—सुवरिति ॥ सुवः स्वर्गं देवांश्च तत्रस्थान् सर्वान् अगन्म गतवन्तो वयम् । 'अस्मदो द्वयोश्च' इत्येकस्मिन् बहुवचनम् । अनेन निश्रेण्यारोहणेन स्वर्गं देवांश्च प्राप्ता वयमिति । छान्दसो भविष्यति लङ् । अनेनारोहणेन स्वर्गं देवांश्च गमिष्यामो वयमिति । 'आशंसायां भूतवच्च' इति वा भविष्यति भूतप्रत्ययः । सांहितिकौ रुत्वानुनासिकौ । अमृता अमरणाः अभूम भविष्यामो वा । 'न शो जरमर'

जापतेः प्रजा अभूम समहं प्रजया
सं मया प्रजा समहꣳ रायस्पोषेण
सं मया रायस्पोषोऽन्नाय त्वान्ना-
द्याय त्वा वाजाय त्वा वाजजि-

प्रजा इति प्र—जाः । अभूम । [18]समिति । अहम् । प्रजयेति प्र—जया । समिति । मया । प्रजेति प्र—जा । समिति । अहम् । रायः । पोषेण । समिति । मया । रायः । पोषः । [19]अन्नाय । त्वा । [20]अन्नाद्यायेत्यन्न—अद्याय । त्वा । [21]वाजाय । त्वा । [22]वा-

---

इत्युत्तरपदाद्युदात्तत्वम् । प्रजापतेः सर्वस्य पितुः प्रजा अभूम वयं सम्प्रति प्रजास्सञ्जाताः; प्रजाकार्यकरत्वात् । पूर्वमप्रजा इति भावः । 'पत्यावैश्वर्ये' इति प्रजापतौ पूर्वपदप्रकृतिस्वरत्वम् ॥

[18]इमं लोकं प्रत्यवेक्षते—समहमिति ॥ससाधनां क्रियामुपसर्ग आह । अहं प्रजया अपत्यादिना सङ्गच्छेय । प्रजा मया सङ्गच्छताम् । तथा रायो धनस्य पोषेणाहं सङ्गच्छेय । रायश्च पोषश्च मया सङ्गच्छताम् । रायो विभक्त्युदात्तत्वं सत्वं चोक्तम् ॥

[19–22]यजमानमासपुटैर्घ्नन्ति ऋत्विजः—अन्नाय त्वेत्यादिभिः ॥ प्राच्यादिषु अध्वर्युब्रह्महोतृद्गातारः । अन्नाय अन्नार्थं अन्नं तव स्यादिति, त्वामहं हन्मीति शेषः । हननं ताडनम् । अन्नाद्यं अन्नादनसामर्थ्यम् । छान्दसो यत् । वाजः सङ्ग्रामसामर्थ्यम् ।

त्यायै त्वाऽमृतमसि पुष्टिरसि प्र-
जननमसि ॥ ३१ ॥

वाजस्येमं प्रसवस्सुषुवे अग्रे सो-

जजित्याया इति वाज-जित्यायै । त्वा । [23]अमृ-
तम् । असि । [24]पुष्टिः । असि । प्रजननमिति प्र-
जननम् । असि ॥ ३१ ॥

अपानो वाजाय नव च ॥ ९ ॥

[1]वाजस्य । इमम् । प्रसव इति प्र-सवः ।
सुषुवे । अग्रे । सोमम् । राजानम् । ओषधीषु ।

अन्नमेव वा । वाजजित्या सङ्ग्रामे विजयः । अन्नविजयो वा । छान्दसः क्यप् । व्यत्ययेनान्तोदात्तत्वम्, पित्त्वस्य वा तुगर्थत्वात् ॥

[23]दक्षिणं पादं हिरण्य उपावहरति—अमृतमिति ॥ अमृतम-मरणहेतुस्त्वमसि ॥

[24]सव्यं बस्ताजिने—पुष्टिरिति ॥ पुष्टिः पुष्टिहेतुः असि । प्रजननं प्रजाहेतुरसि ॥

इति सप्तमे नवमोनुवाकः.

---

[1]सप्त वाजप्रसवीयान् जुहोति—वाजस्येममिति ॥ तत्राद्यास्तिस्त्रिष्टुभः, अन्त्या अनुष्टुभः । वाजस्यान्नस्य प्रसव उत्पत्तिः,

मꣳ राजा॑नमोष॑धीष्व॒प्सु । ता अ॒-
स्मभ्यं॒ मधु॑मतीर्भवन्तु व॒यꣳ रा॒ष्ट्रे
जा॑ग्रियाम पु॒रोहि॑ताः । वाज॑स्ये॒दं
प्र॑स॒व आ ब॑भूवे॒मा च॒ विश्वा॒ भुव॑-

अ॒प्स्वित्य॑प्–सु । ताः । अ॒स्मभ्य॒मित्य॒स्म–भ्य॒म् ।
मधु॑म॒ती॒रिति॒ मधु॑–म॒तीः । भ॒व॒न्तु॒ । व॒यम् । रा॒-
ष्ट्रे । जा॒ग्रि॒या॒म॒ । पु॒रोहि॑ता॒ इति॑ पु॒रः–हि॒ताः ।
[2]वाज॑स्य । इ॒दम् । प्र॒स॒व इति॑ प्र–स॒वः । एति॑ ।
ब॒भू॒व॒ । इ॒मा । च॒ । विश्वा॑ । भुव॑नानि । स॒र्वतः॑ ।

---

उत्पत्तिहेतुर्वा इदं कर्म, देवो वा सविता । इमं सोमं राजानं ओपधीष्वप्सु च सुषुवे उदपीपदत् आधिपत्येन तासु प्रवर्तयामास । अग्रे प्रथममेव ताः तादृश्यः सोमसम्बन्धा ओषधयः आपश्च अस्मभ्यमस्मदर्थं मधुमतीः मधुमत्यः मधुरसवत्यो वा भवन्तु । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । वयं च तद्वत्तया राष्ट्रे जाग्रियाम प्रबुध्येमहि अप्रमत्ता भवेम । 'छन्दस्युभयथा' इत्युभयभावात् 'रिङ्शयग्लिङ्क्षु' सलोपश्च । पुरोहिताः धर्मकार्येष्वग्रतः कृताः प्रधानभूता इत्यर्थः । 'पुरोऽव्ययम्' इति गतित्वात् 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् ॥

[2]अथ द्वितीया—वाजस्य प्रसवः प्रसवहेतुः इदं कर्म आ बभूव उदपादि । अनन्तरं चेमानि विश्वानि भुवनानि भूतजातान्या बभूवुः । सर्वतः सर्वेण प्रकारेण । 'शेश्छन्दसि'

नानि सुर्वतः । स विराजं पर्येति
प्रजानन्प्रजां पुष्टिं वर्धयमानो अस्मे ।
वाजस्येमां प्रसवश्शिश्रिये दिवमि-
मा च विश्वा भुवनानि सम्राट् ।
अदित्सन्तं दापयतु प्रजानन्रयिम् ॥

सः । विराजमिति वि-राजम् । परीति । एति ।
प्रजानन्निति प्र-जानन् । प्रजामिति प्र-जाम् ।
पुष्टिम् । वर्धयमानः । अस्मे इति । [3]वाजस्य ।
इमाम् । प्रसव इति प्र-सवः । शिश्रिये । दिवम् ।
इमा । च । विश्वा । भुवनानि । सम्राडिति सं-
राट् । अदित्सन्तम् । दापयतु । प्रजानन्निति प्र-

इति शेर्लोपः । स वाजस्य प्रसवः अन्नं वा कर्म वा वि-राजं प्रजापतिं कर्मपक्षे अन्नं पर्येति प्राप्नोति । प्रजानन् प्र-जानन्निव मयैतत्कर्तव्यमिति विद्वानिव प्रजां पुष्टिञ्च वर्धयमानः वर्धयितुम् । हेतौ शानन्, अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । अस्मे अस्माकं अस्मदर्थम् । 'सुपां सुलुक्' इति शे आदेशः, उदात्तनिवृत्तिस्वरेण तस्योदात्तत्वम् ॥

[3]अथ तृतीया—वाजस्य प्रसवो यथोक्तस्वरूपः इमां दिवं पृथिवीम् । त्रिष्वपि लोकेषु दिवूशब्दो वर्तते । यथा 'तृतीयस्यामितो दिवि '* इति । शिश्रिये श्रितवान् इमं लोकं

*सं॰ ३-५-७.

॥ ४० ॥ च नस्सर्ववीरां नि यच्छ-
तु । अग्ने अच्छा वदेह नः प्रति
नस्सुमना भव । प्र णो यच्छ भुव-

ज्ञानन् । रयिम् ॥ ४० ॥ च । नः । सर्ववीरामिति सर्व-वीराम् । नीति । यच्छतु । अग्ने । अच्छ । वद । इह । नः । प्रतीति । नः । सुमना इति सु-मनाः । भव । प्रेति । नः । यच्छ । भुवः ।

धारयितुम् । अनेन हीहत्यानां स्थितिर्भवति कर्मणा वा वृष्ट्यादिद्वारेण तत इमानि विश्वानि भुवनानि समसवशिश्रिये । अन्नेन हि कर्मणा वृष्ट्यादिद्वारेण विश्वेषां भुवनानां स्थितिर्भवति यथा 'तस्मादितः प्रदानं देवा उप जीवन्ति'* इति । सम्राट् संहतदीप्तिः नोस्मभ्यं अदित्सन्तं दातुमनिच्छन्तं दापयतु । यो हि दित्सन् भवति स हि स्वयमेव ददाति । प्रजानन् प्रज्ञावानिव अस्मद्विषये प्रवर्तताम् । किञ्च—रयिं धनं च सर्ववीरपुरुषान् नियच्छतु नियमयतु ददातु अस्मासु स्थापयतु वा ॥

अथ चतुर्थी—अग्न इति ॥ हे अग्ने इहास्मिन् कर्मणि नोस्मान् अस्माकं वा इहास्मिन् कर्मणि अच्छवद आभिमुख्येन वद अस्मद्धितं ब्रूहि । किञ्च—नोस्मान् प्रति सुमनाः कल्याणमतिश्च भव मनसा च अस्मद्धितमनुचिन्तयेत्यर्थः । किं वः क्रियतामिति चेत्; नोस्मभ्यं प्रयच्छ देहि धनमिति गम्यते; 'धनदा असि' इति वक्ष्यमाणत्वात् । 'उपसर्गाद्बहुलम्' इति नसो णत्वम् । भुवस्पते पृथिव्याः पते । 'षष्ठ्याः पतिपुत्र' इति

*तै. ३-२-१.

स्पते धनदा असि नस्त्वम् । प्र णो
यच्छत्वर्यमा प्र भगः प्र बृहस्पतिः । प्र
देवाः प्रोत सूनृता प्र वाग्देवी ददातु
नः । अर्यमणं बृहस्पतिमिन्द्रं दा-
नाय चोदय । वाचं विष्णुꣳ सरस्व-
तीꣳ सवितारम् ॥ ४१ ॥ च वा-

पते । धनदा इति धन—दाः । असि । नः । त्वम् ।
[5]प्रेति । नः । यच्छतु । अर्यमा । प्रेति । भगः ।
प्रेति । बृहस्पतिः । प्रेति । देवाः । प्रेति । उत ।
सूनृता । प्रेति । वाक् । देवी । ददातु । नः ।
[6]अर्यमणम् । बृहस्पतिम् । इन्द्रम् । दानाय । चो-
दय । वाचम् । विष्णुम् । सरस्वतीम् । सवितार-
म् ॥ ४१ ॥ च । वाजिनम् । [7]सोमम् । राजा-

---

सत्वम् । धनदाः धनस्य दाता धनं दातुं समर्थः त्वमस्माक-
मसि । तस्माद्देहीति ॥

[5]अथ पञ्चमी—प्र ण इति ॥ नः अस्मभ्यमर्यमा प्रयच्छतु
यावद्दातव्यं तत्सर्वं ददातु भगश्च, बृहस्पतिश्च, देवाश्च । उत
अपि च सूनृता प्रियवाक् यज्ञः वाग्देवी सरस्वती च प्रददातु
अस्मभ्यम् । बृहस्पतिशब्दे सुट्स्वरावुक्तौ । शोभना च ऋता च
सूनृता पृषोदरादिः ॥

[6]षष्ठी—अर्यमणमिति ॥ हे अग्ने दानाय चोदय अभिम-

जिनम् । सोमꣳ राजानं वरुणम्ग्निमन्वारभामहे । आदित्यान् विष्णुꣳ सूर्यं ब्रह्माणं च बृहस्पतिम्। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेस्त्वा

नम् । वरुणम् । अग्निम् । अन्वारभामह इत्यनु-आरभामहे । आदित्यान् । विष्णुम् । सूर्यम् । ब्रह्माणम् । च । बृहस्पतिम् । [8-10]देवस्य । त्वा । सवितुः । प्रसव इति प्र-सवे । अश्विनोः । बाहुभ्यामिति बाहु-भ्याम् । पूष्णः । हस्ताभ्याम् । सरस्वत्यै । वाचः । यन्तुः । यन्त्रेण । अग्नेः । त्वा ।

---

तानि दापय । वाग्ग्रहणं सरस्वतीविशेषणं नदीनिवृत्त्यर्थम् । सवितृविशेषणं वाजिग्रहणम् ॥

[7]सप्तमी—सोममिति ॥ सोमादीनग्निं च त्वामन्वारभामहे । यूयमेव प्रथमं कर्म आरभध्वम्, अभिमतप्रदत्वात्; वयन्तु युष्मानन्वारभामहे । यद्वा—अन्वारम्भणमवलम्बनम् । अस्मिन् कर्मणि सोमादीनेवावलम्बामह इति । यद्वा—अन्वारम्भणं पश्चादारम्भणम्, रभिश्च याच्ञायाम् । युष्मद्दानानन्तरं पुनःपुनर्युष्मानेव वयं याचामहे, नान्यान्याचिष्महीति । आदित्यानप्येवमिति ॥

[8-10]अभिषेकमन्त्राः—देवस्येत्यादयः ॥ सावित्रो व्याख्यातः* ।

---

*सं. १-१-५.[8]

साम्राज्येनाभिषिञ्चामीन्द्रस्य बृह-
स्पतेस्त्वा साम्राज्येनाभिषिञ्चामि
॥ ४२ ॥
अग्निरेकाक्षरेण वाचमुदजयदश्विनौ

साम्राज्येनेति सां–राज्येन । अभीति । सिञ्चामि । इन्द्रस्य । बृहस्पतेः । त्वा । साम्राज्येनेति सां–राज्येन । अभीति । सिञ्चामि ॥ ४२ ॥

रयिꣳ सवितारꣳ पङ्क्तिꣳश्च ॥ १० ॥

अग्निः । एकाक्षरेणेत्येक–अक्षरेण । वाचम् ।

सावितुर्देवस्यानुज्ञाने अश्विनोरेव बाहुभ्यां पूष्ण एव हस्ताभ्याम् । न त्वात्मीयाभ्यामिति । सरस्वत्यै सरस्वत्याः । षष्ठ्यर्थे चतुर्थी । सरस्वत्या वाचस्सम्बन्धिना यन्तुर्यन्त्रेण यन्तुरप्यन्यस्य यन्त्रणेन यमनेन । सामान्येन वा विवक्ष्यते, यन्त्र्याः वाचस्सरस्वत्याः यन्त्रणेन अग्नेश्च साम्राज्येन त्वामभिषिञ्चामि । सङ्गतं राजतीति सम्राट्, 'मो राजि समः क्वौ,' 'गुणवचनब्राह्मणादिभ्यः' इति ष्यञ् । एवं 'इन्द्रस्य त्वा साम्राज्येन' 'बृहस्पतेस्त्वा साम्राज्येन,' इत्येतौ गतौ ॥

इति सप्तमे दशमोनुवाकः.

---

¹उज्जितीस्सप्तदश यजमानं वाचयति—अग्निरित्याद्याः ॥ एकमक्षरं यस्य तेनैकाक्षरेण छन्दसाग्निर्वाचमुदजयत् उज्जितवान्, तद्व-

द्व्यक्षरेण प्राणापानावुदजयतां वि-
ष्णुस्त्र्यक्षरेण त्रीँल्लोकानुदजय-
त्सोमश्चतुरक्षरेण चतुष्पदः पशू-

उदिति । अजयत् । [2]अश्विनौ । द्व्यक्षरेणेति द्वि-अक्षरेण । प्राणापानाविति प्राण-अपानौ । उदिति । अजयताम् । [3]विष्णुः । त्र्यक्षरेणेति त्रि-अक्षरेण । त्रीन् । लोकान् । उदिति । अजयत् । [4]सोमः । चतुरक्षरेणेति चतुः-अक्षरेण । चतुष्पद इति चतुः-पदः । पशून् । उदिति । अजयत् ।

---

दहमप्येकाक्षरेण वाचमुज्जीयासमिति । सर्वत्रैवमुक्तादीन्यष्टचत्वारिंशन्नामानि द्रष्टव्यानि, सप्तदश छन्दांसि स्तूयन्ते । केचिदाहुः—'आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिः'* इत्यस्यैकाक्षरादारभ्योच्यन्ते, इति । तेषां बहुव्रीहिस्वरो नोपपद्यते । 'ता वा एता उज्जितयो व्याख्यायन्ते । यज्ञस्य सर्वत्वाय । देवतानामनिर्भागाय'† । इत्यादि ब्राह्मणम् ॥

[2-17]अश्विनावित्यादयो निगदसिद्धाः । चतुष्पदः चत्वारः पादा येषाम् । 'सङ्ख्यासुपूर्वस्य' इति पादस्य लोपे 'पादः पत्' इति पद्भावः । पङ्क्तिः पञ्चपदा । सप्तपदा । 'टाबृचि'

---

*सं. १-६-११. †ब्रा. १-३-२.

नुर्दजयत्पूषा पञ्चाक्षरेण पङ्क्तिमुदं-
जयद्धाता षडक्षरेण षड्तूनुदंजय-
न्मरुतस्सप्ताक्षरेण सप्तपदाꣳ शक्क-
रीमुदंजयन्बृहस्पतिरष्टाक्षरेण गा-
यत्रीमुदंजयन्मित्रो नवाक्षरेण त्रि-
वृतꣳ स्तोममुदंजयत् ॥ ४३ ॥
वरुणो दशाक्षरेण विराजमुदंजय-

[6]पूषा । पञ्चाक्षरेणेति पञ्च-अक्षरेण । पङ्क्तिम् । उदिति । अजयत् । [6]धाता । षडक्षरेणेति षट्-अक्षरेण । षट् । ऋतून् । उदिति । अजयत् । [7]मरुतः । सप्ताक्षरेणेति सप्त-अक्षरेण । सप्तपदामिति सप्त-पदाम् । शक्करीम् । उदिति । अजयत् । [8]बृहस्पतिः । अष्टाक्षरेणेत्यष्टा-अक्षरेण । गायत्रीम् । उदिति । अजयत् । [9]मित्रः । नवाक्षरेणेति नव-अक्षरेण । त्रिवृतमिति त्रि-वृतम् । स्तोमम् । उदिति । अजयत् ॥ ४३ ॥ [10]वरुणः । दशाक्षरेणेति दश-अक्षरेण । विराजमिति वि-

इति टाप् । बृहस्पतिर्व्याख्यातः* । त्रिवृतमिति । अवयवेषु अवयविनि न तिस्रो वृत्तयो यस्य इति बहुव्रीहौ त्रिचक्रादि-

*सं. १-७-१०.

भुवनसदमिन्द्राय जुष्टं गृह्णाम्येष
ते योनिरिन्द्राय त्वोपयामगृहीतो-
स्यप्सुषदं त्वा घृतसदं व्योमसदमि-
न्द्राय जुष्टं गृह्णाम्येष ते योनिरि-

दम् । भुवनसदमिति भुवन—सदम् । इन्द्राय । जुष्टम् । गृह्णामि । [2]एषः । ते । योनिः । इन्द्राय । त्वा । [3]उपयामगृहीत इत्युपयाम—गृहीतः । असि । अप्सुषदमित्यप्सु—सदम् । त्वा । घृतसदमिति घृत—सदम् । व्योमसदमिति व्योम—सदम् । इन्द्राय । जुष्टम् । गृह्णामि । [4]एषः । ते । योनिः ।

गृहीतोसीति हे ग्रह त्वा त्वां नृषदं नृषु मनुष्येषु सीदतीति तेषां नृषत् । एवमुत्तरत्र । सुषामादित्वात्षत्वम्, 'सदिरप्रतेः' इति वा सर्वविषयं द्रष्टव्यम् । द्रुषदं 'वनस्पतयो वै द्रु'* । भुवनसदं भुवनं सर्वभूतजातम् । इन्द्राय जुष्टं प्रियं गृह्णामीति व्याख्यातमायम् ॥

[2]गृहीत्वा यथायतनं सादयति—एष ते योनिः कारणं इन्द्राय त्वा सादयामि । व्याख्यातमेव† ॥

[3-4]द्वितीयम्—उपयामगृहीतोसीति ॥ त्वा त्वामप्सुषदम् । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । अप्स्वादीनामुत्पादकतया तत्र सीदतीति । 'अग्नौ प्रास्ताहुतिस्सम्यक्' इत्यादि । शेषं समानम् ॥

*ब्रा. १-३-५. †सं. १-४-१२.

न्द्राय त्वोपयामगृहीतोसि पृथिवि-
षदं त्वान्तरिक्षसदं नाकसदमिन्द्राय
जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा।
ये ग्रहाः पञ्चजनीना येषां तिस्रः

इन्द्राय । त्वा । [5]उपयामगृहीत इत्युपयाम-गृहीतः । असि । पृथिविषदमिति पृथिवि-सदम् । त्वा । अन्तरिक्षसदमित्यन्तरिक्ष-सदम् । नाकसदमिति नाक-सदम् । इन्द्राय । जुष्टम् । गृह्णामि । [6]एषः । ते । योनिः । इन्द्राय । त्वा । [7]ये । ग्रहाः । पञ्च-जनीना इति पञ्च-जनीनाः । येषाम् । तिस्रः ।

[5-6]अथ तृतीयम्—उपयामगृहीतोसीति ॥ पृथिविषदम् । 'ङ्यापोस्संज्ञाच्छन्दसोः' इति ह्रस्वत्वम् । पूर्ववद्भूतिहेतुत्वेन पृथिव्यादिषु सदनम् । गतमन्यत् ॥

[7]अथ चतुर्थम्—ये ग्रहा इति पञ्चपदया पङ्क्त्या ॥ ये ग्रहाः पञ्चजनीनाः पञ्चजनेभ्यो देवादिभ्यो वा हिताः । 'पञ्चजनादुपसङ्ख्यानम्' इति खः । सर्वेप्यतिग्राह्याः पञ्चजनीनाः येषां मध्ये तिस्रः परमजाः प्रकृतयः परमायां प्रकृत्यवस्थायां जाताः समाम्नाताः परमजाः आग्नेयैन्द्रसौर्याः; प्रकृतिरूपेण विवक्षितत्वात् । ग्रहेष्वपि वर्तमानस्त्रिलिङ्गो भवति । 'तिसृभ्यो जसः' इत्युदात्तत्वम् । किञ्च—येषां प्रभावेन देव्यः दिवि भवः कोशः मेघः समुब्जितः अधोमुखः जलस्रावणाय आर्जवमासादितः वर्षाभिमुखः

परमजाः । दैव्यः कोशः ॥ ४५ ॥
समुब्जितः । तेषां विशिप्रियाणा-
मिषमूर्जꣳ समग्रभीमेष ते योनि-
रिन्द्राय त्वा । अपाꣳरसमुद्वयसꣳ
सूर्यरश्मिꣳ समाभृतम् । अपाꣳ
रसस्य यो रसस्तं वो गृह्णाम्युत्तम-
मेष ते योनिरिन्द्राय त्वा । अया

परमजा इति परम-जाः । दैव्यः । कोशः ॥ ४५ ।
समुब्जित इति सं-उब्जितः । तेषाम् । विशिप्रि-
याणामिति वि-शिप्रियाणाम् । इषम् । ऊर्जम् ।
सम्इति । अग्रभीम् । [8]एषः । ते । योनिः । इन्द्राय । त्वा ।
[9]अपाम् । रसम् । उद्वयसमित्युत्-वयसम् । सूर्य-
रश्मिमिति सूर्य-रश्मिम् । समाभृतमिति सं-
आभृतम् । अपाम् । रसस्य । यः । रसः । तम् ।
वः । गृह्णामि । उत्तममित्युत्-तमम् । [10]एषः ।

कृत इत्यर्थः । जलूकवद्रक्तस्रावणार्थं । उब्ज आर्जवे । तेषां तेभ्यः । तादर्थ्यचतुर्थ्याष्षष्ठी । विशिप्रियाणां विविधहनुपर्यन्तानां इषमन्नमूर्जं रसं च समग्रभीं सङ्गृह्णामि । उपयामगृहीतोऽसीति गृह्णाति । छान्दसे लुङि 'अमो मश्' 'ह्रग्रहोर्भः' ॥

[8]एष ते इत्यादि ॥ गतम् ॥

[9–10]अथ पञ्चमम्—अपां रसमित्यनुष्टुप् ॥ अपां रसं सारं

विष्ठा जनयन्कर्वराणि स हि घृणि-
रुरुर्वराय गातुः । स प्रत्युदैद्धरुणो
मध्वो अग्रꣳ स्वायां यत्तनुवां तनू-
मैरयत । उपयामगृहीतोसि प्रजा-

ते । योनिः । इन्द्राय । त्वा । [11]अया । विष्ठा इति वि-स्थाः । जनयन् । कर्वराणि । सः । हि । घृणिः । उरुः । वराय । गातुः । सः । प्रति । उदिति । ऐत् । धरुणः । मध्वः । अग्रम् । स्वायाम् । यत् । तनुवाम् । तनूम् । ऐरयत । [12]उप-यामगृहीत इत्युपयाम-गृहीतः । असि । प्रजाप-

उद्धयसं उद्धृतान्नं उद्धृतजीवनं वा । सूर्यरश्मिं पावकरश्मिम् । यद्वा—सूर्यो रश्मिस्थानीयो यस्य । यद्वा—तृतीयाबहुवचनस्य स्थाने व्यत्ययेन द्वितीयैकवचनम् । सूर्यरश्मिभिस्समाभृतं सम्यक्समन्ताच्च धृतं सम्यगाहृतं वा । 'हृग्रहोर्भः' । किञ्च—तस्यापां रसस्य यो रसः अन्नं तमुत्तमं तस्मादुत्तमाय प्रशस्ताय जलरसायान्नाय च वो युष्मान्गृह्णामीति । उपयामगृहीतोसीति गृह्णाति । क्रियाविशेषणं वा, उत्तमं गृह्णामीति । तादर्थ्यात्ताच्छब्द्यम् । उत्तमशब्द उञ्छादिः । 'ऊडिदम्' इत्यद्भ्यप्पञ्चा उदात्तत्वम् । गतमन्यत् ॥

[11–12]सुराग्रहान् गृह्णाति—अया विष्ठा इति त्रिष्टुभा यजुरन्तया ॥ अया अनेन ग्रहणेन । इदमस्तृतीयाया याजादेशः

पंतये त्वा जुष्टं गृह्णाम्येष ते योनिः प्रजापंतये त्वा ॥ ४६ ॥

तय इति प्रजा–पतये । त्वा । जुष्टम् । गृह्णामि । एषः । ते । योनिः । प्रजापंतय इति प्रजा–पतये । त्वा ॥ ४६ ॥

कोशस्तनुवां त्रयोदश च ॥ १२ ॥

'हलि लोपः' । यद्वा—अया अस्मिन् जगति विष्ठाः । सप्तम्या याजादेशः । विष्ठाः विविधं तिष्ठन्तीति । 'क्विप्च' इति क्विप् । सर्वात्मतया स्थित इत्यर्थः । जनयन्नुत्पादयन् कर्वराणि कर्माणि कार्यजातानि वा य एवं करोति प्रजापतिः स हि घृणिः दीप्यमानः । घृणि दीप्तौ 'इन् सर्वधातुभ्यः' इतीन् । हेतौ हिः । घृणिमान्वा घृणिः, मत्वर्थीयो लुप्यते । उरुर्महान् वराय वरिष्ठाय फलाय गातुर्मार्गः प्राप्तेः पुरुषार्थप्राप्तिमार्गः । तादर्थ्ये चतुर्थी । स तादृशः प्रत्युदेत् प्रत्युद्गच्छतु । छान्दसो लुङ् । किम्? मध्वः उदकस्य अग्रं सारम् । नुमभावच्छान्दसः, 'जसादिषु वा वचनं प्राङ्णौ चङ्युपधायाः' इति गुणाभावः। धरुणो धारयिता स तादृशः मधुनोग्रं प्राप्नोतु । यद्यस्मात्त्वा-थामात्मीयायां तनुवां शरीरभूतेस्मिन् ग्रहे तनूं स्वशरीरमैरयत प्रेरयति; तस्मादेतद्ग्रहात्मा अस्मदभिमतं साधयत्विति । उपयामगृहीतोसीत्यादि गतम् । प्रजापतिशब्दे 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् । वाजपेयमन्त्रास्समाप्ताः ॥

इति सप्तमे द्वादशोनुवाकः.

अन्वह मासा अन्विद्वनान्यन्वोष-
धीरनु पर्वतासः। अन्विन्द्रꣳ रोद-
सी वावशाने अन्वापो अजिहत
जायमानम्। अनु ते दायि मह ई-

[1]अन्विति। अहं। मासाः। अन्विति। इत्। वनानि। अन्विति। ओषधीः। अन्विति। पर्वतासः। अन्विति। इन्द्रम्। रोदसी इति। वावशाने इति। अन्विति। आपः। अजिहत। जायमानम्। [2]अन्विति। ते। दायि। महे। इन्द्रियाय।

[1]अथ याज्याकाण्डं वैश्वदेवं, तत्र 'इन्द्रायान्वृजवे पुरोडाशमेकादशकपालं निर्वपेद्ग्रामकामः'* इत्यस्य पुरोनुवाक्या—अन्वहेति त्रिष्टुप्॥ अहेति पादपूरणे प्रसिद्धो वा। इदिति समुच्चये। मासाश्च वनानि च ओषधीः ओषधयश्च। पूर्ववत्पूर्वसवर्णदीर्घत्वम्। पर्वतासः पर्वताः। पूर्ववदसुक्। रोदसी रोदस्यौ द्यावापृथिव्यौ च वावशाने कामयमाने इन्द्रमेव परस्परं वा। यङ्लुगन्तात्ताच्छीलिकश्चानश्, 'न वशः' इति सम्प्रसारणाभावः। आपश्चेन्द्रमेव जायमानमन्वजिहत अनुजिहते अनुगच्छन्ति अनुजायन्ते इत्यर्थः। यद्वा—स्वामित्वेन जायमानमिन्द्रमेवेन्द्रं भजन्ते। छान्दसो लिङ्, 'भृञामित्' इत्यभ्यासस्येत्वम्। स इन्द्र एवम्महाप्रभावः अस्माकं ग्रामं साधयत्विति॥

[2]तत्रैव याज्या—अनु ते दायीति त्रिष्टुप्॥ व्याख्यातेयं

*सं. २-२-८.

न्द्रियायं सत्रा ते विश्वमनु वृत्रहत्यें । अनु क्षत्रमनु सहो यजत्रेन्द्र देवेभिरनु ते नृषह्यें । इन्द्राणीमासु नारिषु सुपत्नीमहमश्रवम् । न

सत्रा । ते । विश्वम् । अन्विति । वृत्रहत्य इति वृत्र-हत्ये । अन्विति । क्षत्रम् । अन्विति । सहः । यजत्र । इन्द्र । देवेभिः । अन्विति । ते । नृषह्य इति नृ-सह्ये । इन्द्राणीम् । आसु । नारिषु । सुपत्नीमिति सु-पत्नीम् । अहम् । अश्रवम् । न ।

---

पद्यान्ते* । हे इन्द्र यजत्र यष्टव्य तुभ्यं देवैः ऋत्विग्भिः दायि दीयते सामर्थ्याद्धविः । विश्वं कृत्स्नमपि सत्रा सर्तव्येषु यज्ञेषु महदिन्द्रियमनुवीक्ष्य महतेन्द्रियेण तद्वानिति कृत्वा, वृत्रहत्यां चानुवीक्ष्य, क्षत्रं धनं सहो बलं चानुवीक्ष्येति ॥

"[१]इन्द्राण्यै चरुं निर्वपेद्यस्य सेनाऽसंशितेव स्यात्"[१] इत्यस्य पुरोनुवाक्या—इन्द्राणीमित्यनुष्टुप् ॥ इन्द्राणीमिन्द्रस्य पत्नीम् । 'इन्द्रवरुण' इति ङीप् । आसु नारिषु मध्ये । छान्दसं ह्रस्वत्वम् । सुपत्नीं शोभनपतिकाम् । 'विभाषा सपूर्वस्य' इति ङीप्, 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । अहमश्रवं श्रुतवानस्मि । शृणोतेर्लङि व्यत्ययेन शप् । लुग्वा शपः । अपरश्चन किञ्चन किञ्चान्यदित्यर्थः अयमस्या अन्यो विशेषः

---

*सं. १-६-१२.[१] सं. २-२-८.

ह्यस्या अपरं चन जरसा ॥ ४७ ॥
मरते पतिः । नाहमिन्द्राणि रार-
ण सख्युर्वृषाकपेर् ऋते । यस्येद-
मप्यꣳ हविः प्रियं देवेषु गच्छति ।

हि । अस्याः । अपरम् । चन । जरसा ॥ ४७ ॥
मरते । पतिः । न । अहम् । इन्द्राणि । रारण ।
सख्युः । वृषाकपेरिति वृषा–कपेः । ऋते । यस्य ।
इदम् । अप्यम् । हविः । प्रियम् । देवेषु । गच्छति ।

चनेति समुच्चये । न ह्यस्याः पतिः जरसा वयोहान्या मरते म्रियते । व्यत्ययेन शप्, 'हि च' इति निघातप्रतिषेधः । सैव महाभागा इन्द्राणी अस्मत्सेनामुत्साहवतीं करोत्वित्यर्थः ॥

तत्रैव याज्या—नाहमित्यनुष्टुप् ॥ हे इन्द्राणि तव सख्युः वृषाकपेः इन्द्रादृते वा मम सख्युः वृषाकपेः आदित्याद्विष्णोर्वा ऋते कश्चिदपि नाहं रारण न रणामि न कीर्तयामि ततोन्यं न नौमीत्यर्थः । ततोन्येन वा केन चिदपि न रमे । छान्दसो लिट् । तुजादित्वादभ्यासस्य दीर्घत्वम्, 'णलुत्तमो वा' इति वृद्ध्यभावः, रमतेरन्त्यविकारश्छान्दसः । आत्मानं विशिनष्टि—यस्य हविः मम सम्बन्धि हविः अप्यमद्भ्यो हितं, वृष्टिहेतुत्वात् । अप्सु वा भवं सोमपुरोडाशादिकं, तत्कारणत्वात् । छान्दसो यत् । प्रियमिष्टं भूत्वा देवेषु गच्छति सर्वान् देवान् प्राप्नोति । एवं सर्वदेवप्रीणनसमर्थोपि अहं वृषाकपेः ऋते न कश्चिद्रारण न वा केन चिद्रणे, सखित्वात् । सोहमिदानीं अनेन हविषाराधयामि, अतोस्मत्सेनां संशितां कुर्विति ॥

यो जात एव प्रथमो मनस्वान्दे-
वो देवान्क्रतुना पर्यभूपत् । यस्य
शुष्माद्रोदसी अभ्यसेतां नृम्णस्य
मह्ना स जनास इन्द्रः । आ ते मह

[5]यः । जातः । एव । प्रथमः । मनस्वान् । देवः ।
देवान् । क्रतुना । पर्यभूपदिति परि—अभूपत् । यस्य ।
शुष्मात् । रोदसी इति । अभ्यसेताम् । नृम्णस्य ।
मह्ना । सः । जनासः । इन्द्रः । [6]एति । ते । महः । इन्द्र ।

[5]'इन्द्राय मन्युमते मनस्वते पुरोडाशमेकादशकपालं निर्वपेत्सङ्ग्रामे संयत्ते'* इत्यस्य पुरोनुवाक्या—यो जात इति ॥ यो जात एव जातमात्र एव अन्येन संस्कारेण विनैव प्रथम देवानां प्रधानभूतः मनस्वान् मनस्वी तेजस्वी देवः दीप्तिमान् क्रतुना कर्मणा वृत्रवधादिना प्रज्ञया वा पर्यभूपत् अत्यक्रमत् पर्यगृह्णाद्वा स्वामित्वेन । भवतेर्लुङ्, व्यत्ययेन षसः, 'श्रुक किति' इतीट्प्रतिषेधः । यस्य शुष्मात् रोदसी द्यावापृथिव्यावपि किमुतान्यः । अभ्यसेतां अबिभीताम् । भ्यस भये, अनुदात्तेत् । हे जनासः जनाः । पूर्ववदसुक् । स तादृश इन्द्रः नृम्णस्य बलस्य मह्ना महत्त्वेन इत्थम्भूतस्तादृशो महाबलोऽन्यो नास्ति । तस्मान्मा भैष्ट जनाः दास्यत्यस्मभ्यमिन्द्रियं बलं चेति । महतेरौणादिको नप्रत्ययः, तृतीयैकवचनस्य 'सुपां सुलुक' इत्याकारः ॥

[6]तत्रैव याज्या—आ ते मह इति पुरस्ताज्ज्योतिस्त्रिष्टुप् ।

*सं. २-२-८;

इन्द्रोत्युग्र समन्यवो यत्समरन्त से-
नाः । पताति दिद्युन्नर्यस्य बाहुवो-
र्मा ते ॥ ४८ ॥ मनो विष्वद्रिय-

ऊती । उग्र । समन्यव इति स-मन्यवः । यत् ।
समरन्तेति सं-अरन्त । सेनाः । पताति । दिद्यु-
त् । नर्यस्य । बाहुवोः । मा । ते ॥ ४८ ॥ मनः ।
विष्वद्रियगिति विष्व-द्रियक् । वीति । चारीत् ।

---

त्रिष्टुबेव वा ; प्रथमः पादो दशाक्षरः कार्यः । बाह्वोरिति तृतीयपादान्तः ॥ हे इन्द्र उग्र उद्गीर्णायुध ते तव महः महती ऊती गतिः प्रभावः । 'ऊतियूति' इति क्तिन उदात्तत्वम् । प्रथमायाः पूर्वसवर्णदीर्घत्वम् । मह इत्यस्यान्तोदात्तत्वं मृग्यम् । यद्वा—ते तव महः महतः प्रभावस्य 'सावेकाचः' इति षष्ठ्या उदात्तत्वम् । ऊत्या प्राप्त्या । तृतीयायाः पूर्वसवर्णः । समन्यवः सामर्षास्सेनाः । सामर्थ्यात्परकीयाः यद्यस्मात् आसमरन्त सर्वास्सम्भूयागताः । 'समो गमृच्छि' इत्यात्मनेपदम्, 'सर्तिशास्त्यर्तिभ्यश्च' इत्यङ् । तस्य ते नर्यस्य नरीभ्यो हितस्य बाह्वोः दिद्युत् दीप्यमानः शत्रुः पताति पतेत् अग्नौ शलभ इव । लेट्याडागमः । यद्वा—दिद्युत् आयुधविशेषः तव बाह्वोस्सम्बन्धी इतश्चेतश्च पततु । किञ्च—ते तव मनः विष्वद्रियक् विष्वगतं स मा विचारीत् विचलितं मा भूत् असमञ्जयायैव भवतु 'विष्वग्देवयोश्च' इत्यद्र्यादेशः । अद्रिसन्ध्योरन्तोदात्तत्वनिपातनं स्वरनिवृत्त्यर्थमित्युक्तम् ॥

ग्वि चारीत् । मा नो मर्धीरा भरा
दुद्धि तन्नः प्र दाशुषे दातवे भूरि
यत्ते । नव्ये देष्णे शस्ते अस्मिन्त-

मा । नः । मर्धीः । एति । भर । दुद्धि । तत् ।
नः । प्रेति । दाशुषे । दातवे । भूरि । यत् । ते ।
नव्ये । देष्णे । शस्ते । अस्मिन्न् । ते । उक्थे ।

"इन्द्राय दात्रे पुरोडाशमेकादशकपालं निर्वपेद्यः कामयेत दानकामा मे प्रजास्स्युः'* इत्यस्य पुरोनुवाक्या—मा न इति त्रिष्टुप् ॥ हे इन्द्र नोस्मान् मा मर्धीः कलहिनो मा कार्षीः । किन्तु; नोस्मभ्यं आभर आहर । पूर्ववद्भत्वम् । 'द्व्यचोतस्तिङः' इति संहितायां दीर्घत्वम् । आहृत्य च तदस्मभ्यं प्रदद्धि प्रदेहि । व्यत्ययेन एत्वाभ्यासलोपाभावः । तदित्युक्तमित्याह—यत्ते तव सम्बन्धि भूरि बहु तत्तु 'दातवे' इति सन्निधेर्धनमिति गम्यते । प्रदातव इति वा समस्तमेव सम्बध्यते । दाशुषे पुरोडाशादीनि हवींषि दत्तवते यजमानाय 'दाश्वान्' इति निपात्यते । तस्मै दातवे दातुं दानार्थमेव यत्त्वया कल्पितं प्रभूतं धनमस्मभ्यं प्रदेहीति । 'तुमर्थे सेसेन्' इति तवेन्प्रत्ययः । यस्मात्त्वां स्तुवन्तो वयं प्रब्रवाम प्रकर्षेण ब्रूमः; देहि नो देहि न इति, तस्मात्तदाहृत्य ते वयमपि दाश्वांस इति । कदा दातव इत्याह—नव्ये अभिनवे देष्णे दानसमर्थे । औणादिके स्नप्रत्यये धातोरिकारान्तादेशः । यद्वा—देष्णे दात्रे तुभ्यम् । औणादिके कनिप्रत्यये धातोरेकारष्षुगागमश्च, उदात्त-

*सं. २-२-८.

उक्थे प्र ब्रवाम वयमिन्द्र स्तुवन्तः ।
आ तू भर माकिरेतत्परिष्ठा-
द्विद्मा हि त्वा वसुपतिं वसूनाम् ।
इन्द्र यत्ते माहिनं दत्रमस्त्यस्मभ्यं

प्रेति । ब्रवाम । वयम् । इन्द्र । स्तुवन्तः ।
[8]एति ।तु । भर । माकिः । एतत् । परीति । स्थात् ।
विद्म । हि । त्वा । वसुपतिमिति वसु-पतिम् ।
वसूनाम् । इन्द्र । यत् । ते । माहिनम् । दत्रम् ।
अस्ति । अस्मभ्यमित्यस्म-भ्यम् । तत् । हर्य-

निवृत्तिस्वरेण चतुर्थ्या उदात्तत्वम् । ते तव उक्थे स्तोत्रे अस्मिन् स्तोत्रस्थानीये शस्ते प्रशस्ते दाशुषे दातुं यत्तव भूरि तदस्मभ्यं देहीति । यद्वा—ईदृशे शस्ते उक्थे समाप्ते इदानीं यत्त्वां प्रब्रवाम तद्देहीति । ब्रूञो लोटि 'आडुत्तमस्य' इत्याडागमः । लेटि वा 'लेटोडाटौ' इत्याडागमः, 'छन्दस्युभयथा' इत्यार्धधातुकत्वाड्डित्वाभावः, सार्वधातुकत्वाद्वच्यादेशो न प्रवर्तते ॥

[8]तत्रैव याज्या—आ तू भरेति तृतीयपादान्तम्, तूइति पादपूरणार्थम् । हे इन्द्र आभर 'विद्मा हि त्वा वसुपतिम्' इति वक्ष्यमाणत्वात् वस्विति गम्यते । पूर्ववद्दत्वम् । एतद्वसु माकिः परिष्ठात् परत्र मास्थात् अस्मास्वेव तिष्ठतु । यद्वा—अस्मभ्यमाहृतं वसु त्वया एतत्परिष्ठितं समाप्तं मा भूत् अनुपक्षीणमस्तु । माकिरिति माशब्दपर्यायो निपातः, 'गातिस्था' इति सिचो लुक् । कस्मादेवमुच्यसे? इति चेत् हि यस्मात्त्वां सर्वेषां वसूनां

ग्वि चारीत् । मा नो मर्धीरा भरा
दद्धि तन्नः प्र दाशुषे दातवे भूरि
यत्ते । नव्ये देष्णे शस्ते अस्मिन्ते-

मा । नः । मर्धीः । एति । भर । दद्धि । तत् ।
नः । प्रेति । दाशुषे । दातवे । भूरि । यत् । ते ।
नव्ये । देष्णे । शस्ते । अस्मिन् । ते । उक्थे ।

"इन्द्राय दात्रे पुरोडाशमेकादशकपालं निर्वपेद्यः कामयेत दानकामा मे प्रजास्स्युः'* इत्यस्य पुरोनुवाक्या—मा न इति त्रिष्टुप् ॥ हे इन्द्र नोस्मान् मा मर्धीः कलहिनो मा कार्षीः । किन्तु; नोस्मभ्यं आभर आहर । पूर्ववद्भत्वम् । 'द्व्यचोत-स्तिङः' इति संहितायां दीर्घत्वम् । आहृत्य च तदस्मभ्यं प्रदद्धि प्रदेहि । व्यत्ययेन एत्वाभ्यासलोपाभावः । तदित्युक्तमि-त्याह—यत्ते तव सम्बन्धि भूरि बहु तत्तु 'दातवे' इति सन्नि-धेर्धनमिति गम्यते । प्रदातव इति वा समस्तमेव सम्बध्यते । दाशुषे पुरोडाशादीनि हवींषि दत्तवते यजमानाय 'दाश्वान्' इति निपात्यते । तस्मै दातवे दातुं दानार्थमेव यत्त्वया कल्पितं प्रभूतं धनमस्मभ्यं प्रदेहीति । 'तुमर्थे सेसेन्' इति तवेन्प्र-त्ययः । यस्मात्त्वां स्तुवन्तो वयं प्रब्रवाम प्रकर्षेण ब्रूमः; देहि नो देहि न इति, तस्मात्तदाहृत्य ते वयमपि दाश्वांस इति । कदा दातव इत्याह—नव्ये अभिनवे देष्णे दानसमर्थे । औणा-दिके स्नप्रत्यये धातोरिकारान्तादेशः । यद्वा—देष्णे दात्रे तुभ्यम् । औणादिके कनिप्रत्यये धातोरिकारष्पुगागमश्च, उदात्त-

*सं. २-२-८.

उक्थे प्र ब्रवाम वयमिन्द्र स्तुवन्तः ।
आ तू भर माकिरेतत्परिष्ठा-
द्विद्मा हि त्वा वसुपतिं वसूनाम् ।
इन्द्र यत्ते माहिनं दत्रमस्त्यस्मभ्यं

प्रेति । ब्रवाम । वयम् । इन्द्र । स्तुवन्तः ।
[8]एति । तु । भर । माकिः । एतत् । परीति । स्थात् ।
विद्म । हि । त्वा । वसुपतिमिति वसु–पतिम् ।
वसूनाम् । इन्द्र । यत् । ते । माहिनम् । दत्रम् ।
अस्ति । अस्मभ्यमित्यस्म–भ्यम् । तत् । हर्य-

निवृत्तिस्वरेण चतुर्थ्या उदात्तत्वम् । ते तव उक्थे स्तोत्रे अस्मिन् स्तोत्रस्थानीये शस्ते प्रशस्ते दाशुषे दातुं यत्तव भूरि तदस्मभ्यं देहीति । यद्वा—ईदृशे शस्ते उक्थे समाप्ते इदानीं यत्त्वां प्रब्रवाम तद्देहीति । ब्रूञो लोटि 'आडुत्तमस्य' इत्याडागमः । लेटि वा 'लेटोडाटौ' इत्याडागमः, 'छन्दस्युभयथा' इत्यार्धधातुकत्वाड्विलाभावः, सार्वधातुकत्वाद्वच्यादेशो न प्रवर्तते ॥

[8]तत्रैव याज्या—आ तू भरेति तृतीयपादान्तम्, तूइति पादपूरणार्थम् । हे इन्द्र आभर 'विद्मा हि त्वा वसुपतिम्' इति वक्ष्यमाणत्वात् वस्विति गम्यते । पूर्ववद्दत्वम् । एतद्वसु माकिः परिष्ठात् परत्र मास्थात् अस्मास्वेव तिष्ठतु । यद्वा—अस्मभ्यमादत्तं वसु त्वया एतत्परिष्ठितं समाप्तं मा भूत् अनुपक्षीणमस्तु। माकिरिति माशब्दपर्यायो निपातः, 'गातिस्था' इति सिचो लुक् । कस्मादेवमुच्यसे? इति चेत् हि यस्मात्त्वां सर्वेषां वसूनां

तर्ह्यर्यश्व ॥४१॥ प्र यन्धि । प्रदातारꣳ हवामह इन्द्रमा हविषा वयम् । उभा हि हस्ता वसुना पृणस्वेति हरि–अश्व ॥ ४१ ॥ प्रेति । यन्धि । प्रदातारमिति प्र–दातारम् । हवामहे । इन्द्रम् । एति । हविषा । वयम् । उभा । हि । हस्ता । वसुना । पृणस्व । आ । प्रेति । यच्छ । दक्षिणात् । एति ।

सम्बन्धिनं वसुपतिं • धनपतिं विद्म विजानीमः । 'द्व्यचोतस्तिङः' इति संहितायां दीर्घत्वम् । सर्ववसुपतित्वप्रतिपादनार्थं वसूनामित्युक्तम्, समासे सङ्ख्याविशेषाप्रतीतेः । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् । 'इन्द्रो दिव इन्द्र ईशे पृथिव्याः' *इत्यादिषु त्वामेव सर्ववसुपतिं शृणुमः, तस्मादुच्यते आ तू भरेति । किञ्च—हे इन्द्र यत्ते तव माहिनं महत् महनीयं वा हिरण्यादिकम् । महेरिनृ वृद्धिश्च । यद्वा—माहिनं महाप्रमाणम्, । माङ माने, स एव प्रत्ययः । दत्रं दातव्यम् । औणादिकस्त्रन्प्रत्ययः । ईदृशं यत्तव धनं अस्ति दानायैव कल्पितं, तदस्मभ्यं प्रयन्धि प्रयच्छ । छान्दसो विभावः, शपो लुक् । हे हर्यश्व हरिवाहन ॥

[९] इन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं निर्वपेद्यस्मै प्रत्तमिव सन्न प्रदीयेत †इत्यस्य पुरोनुवाक्या—प्रदातारमिति बृहती ॥ द्वाभ्यामष्टाक्षराभ्यां दशाक्षराभ्यां च बृहती । प्रदातारमिन्द्रमिति त्वामनेन हविषा वयं हवामहे आह्वयामहे । 'बहुलं छन्दसि'

*ऋ. सं. १०-८९-१०. †सं. २-२-८,

स्वा प्र य॑च्छ दक्षिणादोत स॒व्यात् । प्र॒दा॒ता व॒ज्री वृ॑ष॒भस्तु॑रा॒षाट्छु॒ष्मी राजा॑ वृ॒त्रहा सो॑म॒पावा॑ । अ॒स्मिन् य॒ज्ञे ब॒र्हिष्या नि॒षद्या॑था॒ भव॒ यज॑-

उ॒त । स॒व्यात् । [10]प्र॒दा॒तेति॑ प्र-दा॒ता । व॒ज्री । वृ॒ष॒भः । तु॒रा॒षाट् । शु॒ष्मी । राजा॑ । वृ॒त्रहेति॑ वृ॒त्र-हा । सो॒म॒पावेति॑ सोम-पावा॑ । अ॒स्मिन् । य॒ज्ञे । ब॒र्हिषि॑ । एति॑ । नि॒षद्येति॑ नि-सद्य॑ ।

---

इति सम्प्रसारणम् । स त्वमुभौ हस्तौ वसुना धनेन पृणस्व पूरय । पृण प्रीणने, तौदादिकः, व्यत्ययेनात्मनेपदम्, 'हि च' इति निघातप्रतिषेधः । पूरयित्वा चास्मभ्यं प्रयच्छ देहीति यावत् । आ दक्षिणादा च सव्यात्प्रसारिताद्धस्तात् ताभ्यां प्रसारिताभ्यां यावद्गृह्यते तावद्देहीति यावत् ॥

[10]तत्रैव याज्या—प्रदातेति त्रिष्टुप् ॥ प्रदाता प्रकर्षेण दाता वज्री वज्रवान् वृषभः वर्षिताभिमतानां धनानां तुराषाट् तूर्णमभिभविता शत्रूणाम् । तुर त्वरासम्भ्रमयोः, भिदादिलक्षणोङ्, 'छन्दसि सहः' इति ण्विः, 'सहेस्साडस्सः' इति षत्वम् । शुष्मी बलवान् राजा दीप्यमानः वृत्रहा वृत्रं हतवान् सोमपावा सोमस्य पाता । 'आतो मनिन्' इति वनिप् । ईदृशस्त्वमस्मिन् यज्ञे बर्हिषि सीदसि । आगत्य निषद्य आसित्वा, अथ अनन्तरं यजमानाय शं च योश्च भव रोगाणां

मानाय शं योः । इन्द्रस्सुत्रामा स्ववाꣳ अवोभिस्सुमृडीको भवतु विश्ववेदाः । बाधतां द्वेषो अभयं

अथ । भव । यजमानाय । शम् । योः । [11]इन्द्रः सुत्रामेति सु-त्रामा । स्ववानिति स्व-वान् । अवोभिरित्यवः-भिः । सुमृडीक इति सु-मृडीकः । भवतु । विश्ववेदा इति विश्व-वेदाः । बाधताम् । द्वेषः । अभयम् । कृणोतु । सुवीर्यस्येति

शमयिता भयानां च यावयिता । शाम्यतेर्यौतेश्च विच् । 'निपातस्य च' इति संहितायामथशब्दस्य दीर्घत्वम् ॥

[11]'इन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं निर्वपेदपरुद्धो वा परुद्ध्यमानो वा'* इत्यस्य पुरोनुवाक्या—इन्द्रस्सुत्रामेति त्रिष्टुप् । इन्द्रस्सुत्रामा सुष्ठु त्राता सर्वेषाम् । तेनैव मनिन् । स्ववा धनवान् । 'दीर्घादटि समानपादे' इति रुत्वम् । अवोभिः रक्षणैः सुमृडीकः सुसुखः सुष्ठु सुखयितास्माकं भवतु । 'मृडीकादयश्च' इति कन्, 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । विश्ववे 'गतिकारकयोरपि' इत्यसुन्, पूर्वपदप्रकृतिस्वरत्वश्च । सर्वधनो 'बहुव्रीहौ विश्वं संज्ञायाम्' इति विश्वशब्दस्यान्तोदात्त किञ्च—बाधतां नाशयतु द्वेषः द्वेष्टॄन् । 'अन्येभ्योपि दृश्य' इत्यसुनि वा जातावेकवचनम् । अभयं चास्माकं कृणोतु

*सं. २-२-८.

कृणोतु सुवीर्यस्य ॥ ५० ॥ पतय॑स्स्याम । तस्य॑ वयꣳ सुम॒तौ य॒ज्ञियस्यापि॑ भ॒द्रे सौ॑मन॒से स्या॑म । स सु॒त्रामा॒ स्ववा॒ꣳ इन्द्रो॑ अ॒स्मे

सु॒-वीर्य॑स्य ॥ ५० ॥ पत॑यः । स्या॒म॒ । [11]तस्य॑ । व॒यम् । सु॒म॒ताविति॑ सु॒-म॒तौ । य॒ज्ञिय॑स्य । अपीति॑ । भ॒द्रे । सौ॒म॑न॒से । स्या॒म॒ । सः । सु॒त्रामेति॑ सु॒-त्रामा॑ । स्ववा॒निति॒ स्व-वा॑न् । इन्द्रः॑ । अ॒स्मे इति॑ । आ॒रात् । चि॒त् । द्वेषः॑ । स॒नु॒तः ।

'धिन्विकृण्व्योरच' इत्युप्रत्ययः । सुवीर्यस्य सुसारस्य सर्वस्य वयं पतयस्स्याम भूयास्म । 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् ॥

[12]तत्रैव याज्या—तस्य वयमिति त्रिष्टुप् ॥ तस्येन्द्रस्य यज्ञियस्य यज्ञार्हस्य यज्ञसम्पादनार्हस्य । 'यज्ञर्त्विग्भ्यां घखञौ' । तस्य सुमतौ कल्याण्यां मतौ । 'मन्क्तिन्व्याख्यान' इत्युत्तरपदान्तोदात्तत्वम् । शोभनायां वा बुद्धौ । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । तत्र विषयत्वेन वयं स्याम, तस्येन्द्रस्य भद्रे भजनीये कल्याणे सौमनसे सौमनस्ये च स्याम । एतदुक्तं भवति—शुभयागसम्पादिनः तस्य सुमतौ स्याम यथा सर्वकालं यागकारिणो सोमयाम । अपि च—तस्य भद्रे सौमनसे सौमनस्ये च फलं ईदृशाम यथा सर्वकालाभिमतभाजः सर्वकालं मोदेमहीति । छान्दसित्वप्रत्ययः । इन्द्रस्सुत्रामा सुष्ठु त्राता स्ववान् धनवान् अस्मा-

आराच्चिद्द्वेषस्सनुतर्युयोतु । रेवती-
र्नस्सधमाद इन्द्रे सन्तु तुविवाजाः।
क्षुमन्तो याभिर्मदेम । प्रोष्वस्मै
युयोतु । [13]रेवतीः । नः । सधमाद इति सध-
मादः । इन्द्रे । सन्तु । तुविवाजा इति तुवि–वाजाः ।
क्षुमन्तः । याभिः । मदेम । [14]प्रो इति । स्विति ।

कं द्वेषो द्वेष्टॄन् सनुतः अन्तर्हितान् कृत्वा आराच्चिद्दूरादेव युयोतु यापयतु नाशयतु । व्यत्ययेन शपश्श्लुः । 'सुपां सुलुक्' इत्यस्मच्छब्दात्परस्याप्यष्ठ्याश्शे आदेशः, 'शे' इति प्रगृह्यत्वम् ॥

[13]'योलं श्रिये सन् सद्द्भ्मानैस्स्यात्तरमा एतमैन्द्रमेकादशकपालं निर्वपेत्'* इत्यस्य पुरोनुवाक्या—रेवतीर्न इति गायत्री ॥ 'रेवती पुरोनुवाक्या'* इति ब्राह्मणम् । रेवत्यः धनवत्यः सर्वधनसाधनभूताः । पूर्ववत्पूर्वसवर्णदीर्घत्वम् । नोस्माकं सधमादः अस्माभिस्सह माद्यन्तः । मद तृप्तियोगे, चुरादिः, ततो ण्यन्तात्क्विप्, 'सधमादस्थयोः' इति सहस्य सधादेशः । आपश्चोच्यन्ते । तुविवाजाः बह्वन्नं चरुपुरोडाशादिबह्वन्नसम्पादिन्यः अस्माकं इन्द्रे इन्द्रनिमित्तं सन्तु याभिर्विषयं क्षुमन्तः इन्द्रमेव स्तुवन्तो मदेम माद्येम । व्यत्ययेन शप् । क्षौतेः क्विपि छान्दसस्तुगभावः, 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् ॥

[14]तत्रैव याज्या—प्रोष्वस्मा इति शक्करी सप्तपदा ॥ 'शक्करी याज्या' [illegible] अस्मै इन्द्राय । षष्ठ्यर्थे

पुरोरथमिन्द्राय शूपमर्चत । अभीके चिदु लोककृत्सङ्गे समत्सु वृत्र-

अस्मै । पुरोरथमिति पुरः—रथम् । इन्द्राय । शूपम् । अर्चत । अभीके । चित् । उ । लोककृदिति लोक—कृत् । सङ्गे । समत्स्विति समत्—सु । वृत्र-

चतुर्थी । अस्येन्द्रस्य पुरोरथं रथस्य पुरस्तात् । 'पुरोऽव्ययम्' इति गतित्वम् । रथस्याग्रतो यथा शूपं बलं प्रोप्वर्चत प्रकर्षेण सुखेन च वाग्भिरभ्यर्चयत । प्रो इति निपातसमुदाय ओदन्तः, 'सुनः' इति सोप्पत्वम् । स चास्माभिरर्चितबलः अस्माकं बोधि अस्मद्बुध्यतां रक्ष्यत्वेन स्मरतु । 'अधीगर्थ' इति कर्मणि षष्ठी । बुधेश्छान्दसे लुङि 'दीपजनबुध' इति च्लेश्चिणादेशः, 'बहुलं छन्दस्यमाङ्योगेपि' इत्यडभावः । इन्द्रो विशेष्यते—अभीके चित् अभ्यर्णेपि परबले योद्धुं कामयमानोपि लोककृत् स्थानकृत् एवमेव वैमुख्यं भजते । केशाकेश्यवस्थायामपि परबलेनार्दितोपि युद्धभूमौ स्थितिमानेव भवतीति। केत्यत्राह—समत्सु सङ्ग्रामेषु सङ्गे सति यदा समत्सु सङ्गं करोति तदाभीके अन्तिकेपि लोककृदेव । वृत्रहा वृत्रं हतवान् खल्वसाविति । 'अनुकाभिकाभीकः कमिता' इति निपात्यते । सह माद्यन्त्यास्विति समदः । समानं माद्यन्ति वा, 'समानस्य सः' इति सभावः । स खल्विन्द्रश्चोदिता सर्वेषां धनानां दाता प्रेरयिता । चुद सञ्चोदने, ण्यन्तात्तृचि 'बहुलं संज्ञाच्छन्दसोः' इति णिलुक् । किञ्च—तस्येन्द्रस्य प्रसादेन अन्यकेषां परेषां याकाः । उभयत्रापि कुत्सायां प्रागिवीयः कः । अधिवक्त्

हा । अस्माकं बोधि चोदिता न-
भन्तामन्यकेषाम् । ज्याका अधि
धन्वसु ॥ ५१ ॥

हेति वृत्र-हा । अस्माकम् । बोधि । चोदिता ।
नभन्ताम् । अन्यकेषाम् । ज्याकाः । अधीति ।
धन्वस्विति धन्व-सु ॥ ५१ ॥

जरसा मा ते हर्यश्व सुवीर्यस्याध्येकं च ॥ १३ ॥

पाकयज्ञ२ सङ्श्रवाः परोक्षं बर्हिषोहं ध्रुवाम-
गन्मेत्याह देव सवितर्देवस्याहं क्षत्रस्योल्वं वाजं-
स्येममग्निरेकाक्षरेणोपयामगृहीतोस्यन्वह्न मासास्त्र-
योदश ॥ १३ ॥

पाकयज्ञं परोक्षं ध्रुवां वि सृजते च नस्सर्व-
वीरां पतंयस्स्यामेकपञ्चाशत्॥५१॥

पाकयज्ञं धन्वसु ॥
हरिः ॐ तत्सत् ॥

धनुष्यारोपिताः कुत्सिता ज्याः नभन्तां नश्यन्तु । नभ हिं-
सायाम्, व्यत्ययेन शप् ॥

इति श्रीभट्टभास्करमिश्रविरचिते ज्ञानयज्ञाख्ये यजुर्वेदभाष्ये
प्रथमकाण्डे सप्तमप्रपाठके त्रयोदशोनुवाकः.

समाप्तश्च प्रपाठकः

ओम्.

अनु॑म॒त्यै पु॒रो॒डाश॑म॒ष्टाक॑पालं॒ नि-

'अनु॑म॒त्या इ॒त्यनु॑-म॒त्यै । पु॒रो॒डाश॑म् । अ॒ष्टाक॑पाल॒मित्य॒ष्टा-क॒पा॒ल॒म् । निरिति ।

'अथ राजसूयब्राह्मणं वैश्वदेवं काण्डम् । ऋचो यजूंषि चात्र भवन्ति, प्रायिकत्वाद्ब्राह्मणमुच्यते । द्विविधं ब्राह्मणं, कर्मब्राह्मणं कल्पब्राह्मणं चेति । तत्र कर्मब्राह्मणं, यत्केवलानि कर्माणि विधत्ते, मन्त्रान्विनियुङ्क्ते, न प्रशंसां करोति न निन्दाम्, यथेदमेव—'अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति धेनुर्दक्षिणा' इत्यादि*। कल्पब्राह्मणं भवति, यथा—'संवत्सरमेतद्व्रतं चरेत् । द्वौ वा मासौ' इत्यादि†। कृतयः 'प्रजापतिः प्रजा असृजत'‡ इत्यादयः, तदपि कल्पब्राह्मणम् । गाथा इतिहासाः पुराकल्पाश्च ब्राह्मणान्येव । गाथा वैदिकाश्श्लोकाः अर्थप्रधानाः न प्रशंसानिन्दापराः 'स्मृतिः प्रत्यक्षमैतिह्यम् । अनुमानश्चतुष्टयम्'§ इत्याद्याः । इतिहासाः परकृतयः मनुष्यकृतयः 'विश्वरूपो वै त्वाष्ट्रः'¶ इत्येवमादयः । पुराकल्पाः प्रजापत्यादिकृतयः 'प्रजापतिः प्रजा असृजत'‡ इत्येवमादयः । सर्वाण्येतानि ब्राह्मणान्युच्यन्ते । एतदुक्तं भवति—कर्ममन्त्रचोदना ब्राह्मणम् । तत्त्वविषयमर्थवादादियुक्तं कर्मविधानं कल्पं ब्राह्मणमित्युच्यते । अतत्त्वविषयं कर्मविधानं कल्पब्राह्मणमेव, यथा—'सावित्रं जुहोति प्रसूत्यै' इत्यादि**. । आहुश्च—

क्वचिद्विधिः प्रशंसा च केषु निद्विधिरेव हि ।
केषु चित्स्तुतिरेव स्यात् एवं निन्दानिषेधयोः ॥ इति ।

*सं. १-८-१. †आ. १-३२. ‡सं. २-१-२.
§आ. १-२. ¶सं. २-५-१. **आ. ५-२.

वंपति धेनुर्दक्षिणा ये प्रत्यञ्चश्श-
म्याया अवशीयन्ते तं नैर्ऋतमेक-

वपति । धेनुः । दक्षिणा । ये । प्रत्यञ्चः । शम्यायाः । अवशीयन्त इत्यव–शीयन्ते । तम् । नैर्ऋतमिति नैः–ऋतम् । एककपालमित्येक–

तत्रास्मिन् प्रश्ने कर्माणि विधीयन्ते मन्त्राश्च केवलमाम्नायन्ते, न विनियुज्यन्ते । औपानुवाक्ये तु कर्माणि च विधीयन्ते मन्त्राश्चाम्नायन्ते तदानीमेव च ते विनियुज्यन्ते इति विशेषः । तत्र राजसूये पवित्रेमिष्टिमे पञ्चम्यां संस्थिते षष्ठीमारभ्यान्वहमनुमत्यादयोऽष्टौ यागास्सन्ति, तान्विदधाति—अनुमत्यै पुरोडाशमष्टाकपालं निर्वपतीत्यादि ॥ अनुब्राह्मणं च भवति 'अष्टावेतानि हवींषि भवन्ति'* इति । तत्र षष्ठचामानुमतमष्टाकपालं निर्वपति । या[यया] सर्वं क्रियते [ साऽनुमतिः ।] अनुमतिरिति 'इयमेवास्मै राज्यमनुमन्यते'* इत्यनुमत्यभिमानिनी वा काचिद्देवता पृथिवीत्वेन रूप्यते । 'तादौ च निति' इति गतेः प्रकृतिस्वरत्वम् । तस्यै पुरोडाशमष्टाकपालं निर्वपति तदुद्देशेन पृथक्करोति । अष्टसु कपालेषु संस्कृत इति तद्धितार्थे द्विगुः, 'द्विगोर्लुगनपत्ये' इति प्राग्दीव्यतीयस्य लुक्, 'अष्टनः कपाले हविष्युपसङ्ख्यानम्' इति पूर्वपदस्यात्वम्, 'इगन्तकालकपाल' इति पूर्वपदप्रकृतिस्वरत्वम् । तत्र धेनुः प्रत्यग्रप्रसवा गौर्दक्षिणा देया । 'दक्षिणस्यादिगाख्यायाम्' इत्याद्युदात्तत्वम् ॥

तथास्मिन्नेव नैर्ऋतं विधातुमाह—ये प्रत्यञ्च इत्यादि ॥ अत्र 'नैर्ऋतेन पूर्वेण प्रचरति'* इत्यनुब्राह्मणदर्शनादानुमतात्पूर्वमेव नैर्ऋतेन प्रचरितव्यं, तत्रानुमतस्य प्रथमाम्नानसामर्थ्यात्प्रथममानुमतमासाद्यते ।

*ब्रा. १–६–१,

कपालं कृष्णं वासः कृष्णतूषं द-
क्षिणा वीहि स्वाहाहुतिं जुषाण एष

कपालम् । कृष्णम् । वासः । कृष्णतूषमिति कृ-
ष्ण–तूषम् । दक्षिणा । [2]वीति । इहि । स्वाहा ।

प्रचरणन्तु नैर्ऋतयागात्पश्चादिति विवेकः । तत्रानुमतं पिषन् पश्चादुत्तरतश्च व्यवशातयति तण्डुलान्, तत्र ये शम्यायाः प्रत्यञ्चः प्रत्यग्गताः अवशीर्यन्ते अवपतन्ति तान् नैर्ऋतमेककपालं निर्वपेत्, निर्वपतीति प्रकृतत्वात् । निर्वपतिस्तु तूष्णीमुपचारादित्याहुः । निर्वपतिर्वा धात्वर्थसामान्ये करोत्यर्थे वर्तते । तान् प्रतीचीनांस्तण्डुलान् नैर्ऋतं कुर्यादित्यर्थः । तमित्येककपालापेक्षयैकवचनम् । पूर्ववत्समासादिः । विबाधन*पृथिव्येव निर्ऋतिः, पृथिव्येव विश्वमनुगृह्णाति निगृह्णाति च । ब्राह्मणं च भवति 'इयं निर्ऋतिः' इति† । देवतान्तरं वा पूर्ववत् । तत्र कृष्णं वासः कृष्णतूषं कृष्णदशान्तं दक्षिणा ॥

[3]तत्र नैर्ऋतेन प्रचरितुं दक्षिणमपरमवान्तरदेशं गमिष्यन् गार्हपत्ये जुहोति—वीहीति ॥ वीहि विगच्छ विगच्छद्भिरस्माभिः विश्लिष्टो भव मास्माननूत्थाय बाधिष्ट । हे गार्हपत्य तुभ्यं स्वाहा स्वाहुतं करोमीदमाज्यम् । तस्मादिमामाहुतिं जुषाणस्सेवमानः शान्तो भूत्वा इहैवास्स्वेत्यर्थः । स्वाहाकृतामिमामाहुतिं जुषाण इति वा । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । जुषेश्शानचि 'बहुलं छन्दसि' इति शपो लुक्, व्यत्ययेन

*क. घ. निबाधन. †ब्रा. १-६-१.

तें निर्ऋते भागो भूतें हविष्मत्यसि मुञ्चेममꣳहंसस्स्वाहा नमो य इदं चकारादित्यं चरुं निर्वपति वरो द-

आहुतिमित्या-हुतिम् । जुषाणः । एषः । ते । निर्ऋत इति निः-ऋते । भागः । भूतें । हविष्मती । असि । मुञ्च । इमम् । अꣳहसः । स्वाहा । नमः । यः । इदम् । चकार । आदित्यम् । चरुम् ।

सार्वधातुकत्वादनुदात्तत्वाभावः, ताच्छीलिको वा चानश् । 'यदहुत्वा गार्हपत्य ईयुः'* इत्यादि ब्राह्मणम् ॥

[4]नैर्ऋतं सर्वं जुहोति—एष त इति गायत्री । यजुरिति केचित् ॥ मुञ्चेति तिङः परत्वात्पादादित्वान्न निहन्यते । हे निर्ऋते एष ते भागः, त्वयेदं हविर्भुज्यताम् । कर्मणि घञ्, 'कर्षात्वतः' इत्यन्तोदात्तत्वम् । हे भूते भूतरूपे निरृतिभूते वा । यद्वा— सर्वेषां भूतिहेतो । ब्राह्मणं च भवति 'भूतिमेवोपावर्तते'* इति। पादादित्वान्न निहन्यते । यस्मादनेन हविषा हविष्मती त्वमसि, तस्मादिमं हविषोस्य दातारं यजमानं अंहसः पापान्मुञ्चेति । 'अंहस एवैनं मुञ्चति'* इति ब्राह्मणम् ॥

[5]पुनरेत्य गार्हपत्ये जुहोति—स्वाहा स्वाहुतमिदमाज्यमस्तु, नमः नमस्कारश्चास्तु । (कतमस्मै) कस्मै ? यो हवा इदमस्मत्प्रार्थितं चकार तथैव कृतवान्, निर्ऋतिं यष्टुं गच्छतोस्मान् सोढ्वा अननुत्थाय अत्रैव शान्तोवस्थित इति यावत् । यद्वा—इदं विश्वं चराचरं जगच्चकार॥

[6]श्वो भूते आदित्यं चरुं निर्वपति—अदितिः देवमाता पु-

*ब्रा. १-६-१.

क्षिणाग्नावैष्णवमेकादशकपालं वा-
मनो वही दक्षिणाग्नीषोमीयम्॥१॥
एकादशकपालꣳ हिरण्यं दक्षिणैन्द्र-

निरिति । वपति । वरः । दक्षिणा । [7]आग्नावैष्णवमित्याग्ना–वैष्णवम् । एकादशकपालमित्येकादश–कपालम् । वामनः । वही । दक्षिणा । [8]अग्नीषोमीयमित्यग्नी–सोमीयम् ॥ १ ॥ एकादशकपालमित्येकादश–कपालम् । हिरण्यम् । दक्षिणा । [9]ऐन्द्रम् । एकादशकपालमित्येकादश–कपालम् ।

थिवी वा, सा देवतास्य आदित्यः । 'दित्यदिति' इति ण्यः । 'उभयीष्वेव प्रजासु'* इत्यादि ब्राह्मणम् । तत्र वरो दक्षिणा, गौर्वरः ॥

[7]श्वो भूते आग्नावैष्णवमेकादशकपालं निर्वपति—'अग्निस्सर्वा देवताः'* इत्यादि ब्राह्मणम् । अत्र वामनो वही दक्षिणा। वामनो ह्रस्वाङ्गः, वही वहनदेशवान् । 'यद्वही । तेनाग्नेयः'* इत्यादि ब्राह्मणम् ॥

[8]श्वो भूते अग्नीषोमीयमेकादशकपालं निर्वपति—'अग्नीषोमाभ्यां वा इन्द्रः'* इत्यादि ब्राह्मणम् । 'द्यावापृथिवीशुनासीर' इति छः। तत्र हिरण्यं दक्षिणा 'हिरण्यं दक्षिणा समृद्ध्यै'* भवति॥

[9]श्वो भूते ऐन्द्रमेकादशकपालं निर्वपति—'इन्द्रो वृत्रं हत्वा' इति ब्राह्मणम्* । तत्र ऋषभो वही दक्षिणा । ऋषभस्सेक्ता

*ब्रा. १-६-१.

मेकादशकपालमृषभो वही दक्षि-
णाग्नेयमष्टाकपालमैन्द्रं दधृषभो
वही दक्षिणैन्द्राग्नं द्वादशकपालं वै-
श्वदेवं चरुं प्रथमजो वत्सो दक्षिणा

ऋषभः। वही। दक्षिणा। [10]आग्नेयम्। अष्टाकपालमित्यष्टा-कपालम्। ऐन्द्रम्। दधि। ऋषभः। वही। दक्षिणा। [11]ऐन्द्राग्नमित्यैन्द्र-अग्नम्। द्वादशकपालमिति द्वादश-कपालम्। वैश्वदेवमिति वैश्व-देवम्। चरुम्। प्रथमज इति प्रथम-जः। वत्सः। दक्षिणा। सौम्यम्। श्यामाकम्। चरुम्।

---

खेलगतिर्वा। अत्रायं पञ्चम ऐन्द्रो विधीयते, अनुब्राह्मणे तु ऐन्द्राग्नः, अत्र कथं भाव्यमिति भाव्यं; विकल्पो वा तुल्यबलत्वात्॥

[10]श्वो भूते आग्नेयमष्टाकपालं निर्वपति, ऐन्द्रं च दधि—द्विहविष्कोयं यागः। 'अग्निर्वै यज्ञमुखम्'* इत्यादि ब्राह्मणम्। ऋषभो वही दक्षिणा॥

[11]श्वो भूते ऐन्द्राग्नं द्वादशकपालं निर्वपति, वैश्वदेवं चरुं निर्वपति—'देवा वा ओषधीष्वाजिमयुः' इत्यादि ब्राह्मणम्*। अत्र प्रथमजः प्रथमजातो वत्सो दक्षिणा। अस्मिन् यागे सौम्यं श्यामाकं चरुं निर्वपति—'सोमो वा अकृष्टपच्यस्य राजा'* इत्यादि ब्राह्मणम्। श्यामाकशब्दाद्विकारे 'कोपधाच्च' इत्यण्। तत्र वासो दक्षिणा। 'सौम्यं हि देवतया वासः'*। त्रिहविष्कोयं यागः।

---

*ब्रा, १-६-१,

सौम्यꣳ श्यामाकं चरुं वासो दक्षि-
णा सरस्वत्यै चरुꣳ सरस्वते चरुं
मिथुनौ गावौ दक्षिणा ॥ २ ॥
आग्नेयमष्टाकपालं निर्वपति सौम्यं

वासः । दक्षिणा । [12]सरस्वत्यै । चरुम् । सरस्वते । चरुम् । मिथुनौ । गावौ । दक्षिणा ॥ २ ॥

अग्नीषोमीयं चतुस्त्रिꣳशच्च ॥ १ ॥

[1]आग्नेयम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपति । सौम्यम् । चरुम् । सावित्रम् ।

---

'अष्टावेतानि हवींषि '* इति ब्राह्मणानुसारेण व्याख्यायते वत्सवाससी दक्षिणा इति ॥

[12]श्वो भूते सरस्वत्यै चरुं निर्वपति, सरस्वते चरुम्—स्त्रीपुंसात्मके द्वे देवते । अयमपि द्विहविष्कः । मिथुनौ स्त्रीपुंसौ गावौ दक्षिणा ॥

इत्यष्टमे प्रथमोनुवाकः.

---

[1]सन्ति तावद्राजसूयान्तर्भावीनि चातुर्मास्यहवींषि; तत्र तावद्वैश्वदेवहवींषि विदधाति—आग्नेयमष्टाकपालं निर्वपतीत्यादि ॥ एतानि यथासमाम्नातमष्टौ हवींषि निर्वपति । अष्टहविष्कोयमेको यागः । एषां

*ब्रा. १-६-१.

चरुꣳ सावित्रं द्वादशकपालꣳ सा-
रस्वतं चरुं पौष्णं चरुं मारुतꣳ
सप्तकपालं वैश्वदेवीमामिक्षां द्यावा-
पृथिव्यमेककपालम् ॥ ३ ॥

द्वादशकपालमिति द्वादश-कपालम्। सारस्वतम्। चरुम्। पौष्णम्। चरुम्। मारुतम्। सप्तकपालमिति सप्त-कपालम्। वैश्वदेवीमिति वैश्व-देवीम्। आमिक्षाम्। द्यावापृथिव्यमिति द्यावा-पृथिव्यम्। एककपालमित्येक-कपालम् ॥ ३ ॥

आग्नेयꣳ सौम्यं मारुतमष्टादश ॥ २ ॥

---

च पौष्णान्तानि पञ्च सञ्चराणि वरुणप्रघासादिष्वप्युपयोक्ष्यन्ते। 'वैश्वदेवेन वै प्रजापतिः प्रजा असृजत'* इति ब्राह्मणम्, 'ते वा एते त्रिस्संवत्सरस्य प्रयुज्यन्ते'* इति च। 'अग्नेर्दक्'। सौम्यम्, पूर्ववल्लक्षण्। तप्ते पयसि दध्यानयति यत्संवर्तते सामिक्षा। द्यावापृथिव्यमिति। 'द्यावापृथिवीशुनासीर' इति यत्। सर्वेषां यागानामन्त्य एककपालः ॥

इत्यष्टमे, द्वितीयोनुवाकः.

---

*ब्रा, १-६-२.

ऐन्द्राग्नमेकादशकपालं मारुतीमा-
मिक्षां वारुणीमामिक्षां कायमेकं-
कपालं प्रघास्यान् हवामहे मरुतो

[1]ऐन्द्राग्नमित्यैन्द्र–अग्नम् । एकादशकपालमि-
त्येकादश–कपालम् । मारुतीम् । आमिक्षाम् ।
वारुणीम् । आमिक्षाम् । कायम् । एककपालमि-
त्येक–कपालम् । [2]प्रघास्यानिति प्र–घास्यान् ।
हवामहे । मरुतः । यज्ञवाहस इति यज्ञ–वाहसः ।

---

[1]अथ वरुणप्रघासहवींषि विदधाति—ऐन्द्राग्नमित्यादि ॥ एतानि चत्वारि हवींषि पञ्चसञ्चरातिरिक्तानि । 'एतद्ब्राह्मणान्येव पञ्च हवींषि । अथैष ऐन्द्राग्नो भवति'* इत्यादि ब्राह्मणम् । तेन सञ्चरैस्सह नव भवन्ति । को देवता अस्य कायम् । 'कस्येत्' इतीत्वम् । कः प्रजापतिः ॥

[2]गृहीतकरम्भपात्रां पत्नीमुदानयित्वा वाचयति प्रतिप्रस्थाता—प्रघास्यानिति । इयं गायत्री ॥ पूर्वपदलोपोऽत्र द्रष्टव्यः । यथा—देवदत्तो दत्तः, सत्यभामा भामेति । एवं वरुणप्रघासाः प्रघासाः; तत्र भवास्तेषां सम्बन्धिनो मरुतः प्रघास्याः । 'भवे छन्दसि' इति यः । मरुद्विशेषा वा प्रघास्यास्तान् हवामहे आह्वयामः यजामहे वा । 'बहुलं छन्दसि' इति सम्प्रसारणम् । [यज्ञं वहन्तीति यज्ञवाहसः] 'वहिहाधाञ्भ्यश्छन्दसि' इति विधीयमानोऽसुन् 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इति कारकपूर्वादपि भवति, णिदिति

---

*ब्रा. १-६-४.

यज्ञवाहसः करम्भेण सजोषसः ।
मो षू ण इन्द्र पृत्सु देवास्तु स्म
ते शुष्मिन्नवया। मही ह्यस्य मीढु-

करम्भेण । सजोषस इति स–जोषसः । मो इति ।
स्विति । नः । इन्द्र । पृत्स्विति पृत्–सु । देव ।
अस्तु । स्म । ते । शुष्मिन् । अवया । मही । हि ।
अस्य । मीढुषः । यव्या । हविष्मतः । मरुतः ।

तत्रानुवृत्तेर्वृद्धिः । दधिसर्पिर्मिश्रास्सक्तवः करम्भाः । जातविकवचनम् । तद्योगात्ताच्छब्द्यम् । करम्भपात्रैर्हेतुभिः सजोषसस्समानप्रीतीन् परस्परमस्माभिर्वा समीतीन् । 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् ॥

[3]यजमानः पुरोनुवाक्यामन्वाह—मो षूण इति ॥ पङ्क्तिमकारीयम् । पादादित्वादस्त्विति न निहन्यते । मो इति प्रतिषेधे । निपातसमुदायो वा । सामर्थ्याल्लभ्या क्रिया; तस्या एव निषेधसम्भवात्, अस्त्विति वक्ष्यमाणत्वाच्च । हे इन्द्र देवनादिगुणक अस्माकं पृत्सु सङ्ग्रामेषु प्रवृत्तिः (सु) मो मा भूदिति । सु सुष्ठु समीचीनमेव । सुष्ठु मा भूदिति वा । अस्मान् पृत्सु माकार्षीः शोभनमेतादिति । 'सुञः' इति षोप्त्वम्, 'अन्येषामपि दृश्यते' इति दीर्घत्वम् । 'नश्च धातुस्थोरुषुभ्यः' इति नसो णत्वम् । किञ्च—हे शुष्मिन् बलवन् ते तव प्रसादात् अवया करम्भपात्रयागोस्तु अवयजनमवया । 'अवे यजः' इति ण्विः, छा-

पो य॒व्या । ह॒विष्म॑न्तो म॒रुतो॑ व-
न्द॑ते॒ गीः । यद्ग्रा॒मे यदर॑ण्ये॒ यत्स॒-
भा॒यां यदि॑न्द्रि॒ये । यच्छू॒द्रे यद॒र्ये
एन॑श्चकृ॒मा व॒यम् । यदेक॒स्याधि॒

वन्द॑ते । गीः । ‘यत् । ग्रामे॑ । यत् । अर॑ण्ये । यत् । स॒भाया॑म् । यत् । इ॒न्द्रि॒ये । यत् । शू॒द्रे । यत् । अ॒र्ये । एनः॑ । च॒कृ॒म । व॒यम् । यत् । एक॑स्य । अधी॒ति॑ । धर्म॑णि । तस्य॑ । अ॒व॒यज॑न॒मित्य॑-

न्दसोन्त्यविकारः । सोर्वा डादेशः । वरुणपाशानामवयजनं विनाशहेतुरस्त्विति यावत् । कः पुनरस्य विशेष इति चेद्भ्रूमः— हे इन्द्र अस्य तव मीढुषः सेक्तुः सम्बन्धिनीयमिष्टिः मही पृथ्वी यस्माद्यव्या यवमात्रसदृशी अतिस्वल्पेति यावत् । शाखादित्वादिवार्थे यः। यद्वा—इयमेवेष्टिः तव प्रसादान्महती यव्या यावयित्री वरुणपाशानां पृथक्करणसमर्थेति यावत् । छान्दसो यः । अन्वादेशत्वादस्येति निहन्यते । दाश्वानादौ मीढ्वानिति निपातितः । किञ्च— हविष्मतश्चरुमतो मम गीर्वन्दते स्तौति ॥

‘दम्पती याज्यां ब्रूतः—यद्ग्राम इति । पङ्क्तिरा जगतीयम् ॥ *ग्रामे जनपदे गृहे प्रदेशे सभायां गृहे इन्द्रिये* चक्षुरादिके वागादिके च शूद्रे चतुर्थे । निकृष्टोपलक्षणम् । ‘अर्यस्स्वामिवैश्ययोः’ इति निपात्यते, निपातनसामर्थ्यादेवाभिमतस्य सिद्धिः । एषु ग्रामादिष्वाधारेषु एतेषु वा निमित्तेषु वयं यदेनः पापं चकृम बुद्धिपूर्वमबुद्धिपूर्वं वा सह कृतवन्तः । सांहितिकं दीर्घत्वम् ।

धर्मणि तस्यावयजनमसि स्वाहा । अक्रन्कर्म कर्मकृतस्सह वाचा मं-

व—यजनम् । असि । स्वाहा । [5]अक्रन् । कर्म । कर्मकृत इति कर्म—कृतः । सह । वाचा । मयो-

'अस्मदो द्वयोश्च' इति द्वयोर्बहुवचनं वयमिति । यच्च आवयोरेकस्यान्यतरस्य एनः पृथगेवानया मया वा कृतम्, अधिधर्मणि स्थानासनादिके क्रियमाणे तन्निमित्तं वा कृतं तस्य सर्वस्यावयजनं नाशनमसि हे करम्भपात्राणि । सामान्यविवक्षायामेकवचनं, करम्भेण नेति प्रक्रान्तत्वात् । स्वाहाकरोमि त्वामिति । 'यजमानदेवत्यो वा आहवनीयः'* इत्यादि ब्राह्मणम् ॥

[5]पृथग्गच्छन्तावनुमन्त्रयेते पत्नीयजमानौ—अक्रन्निति । अनुष्टुबेषा ॥ अक्रन् कृतवन्तः । बहुवचनेन द्वावुच्येते । कर्म करम्भपात्रहोमलक्षणं कृतवन्तः । 'मन्त्रे घस' इति च्लेर्लुक्, पुरुषव्यत्ययः, अकार्ष्मेति मध्यमतया विपरिणतिः, 'अस्तं प्रेत' इत्येकवाक्यत्वात् । कर्मकृतः एतस्य कर्मणः कर्तारः एतदेवाक्रन् । 'सुकर्मपाप' इति क्विप् । सह वाचा मन्त्रात्मिकया मयोभुवा मयसस्सुखस्य भावयित्र्या मन्त्रवदेव कर्म कृतवन्तः । भवतेर्ण्यन्तात्क्विप्, 'बहुलमन्यत्रापि' इति णिलुक्, उपपदसमासः । 'अन्तोदात्तादुत्तरपदात्' इति तृतीयाया उदात्तत्वं व्यत्ययेन नित्यसमासेपि । यद्वा—मयसां भूर्मयोभूरिति षष्ठीसमासः । 'सावेकाचः' इति वाचस्तृतीयाया उदात्तत्वम् । देवेभ्यो देवार्थं देवर्णानिरवदानार्थम् । ते यूयं सम्प्रति कर्म यथोक्तं कृत्वा अस्तं

*ब्रा. १-६-५.

योभुवा । देवेभ्यः कर्म कृत्वास्तं
प्रेतं सुदानवः ॥ ४ ॥
अग्नयेऽनीकवते पुरोडाशमष्टाकपा-
लं निर्वपति साकꣳ सूर्येणोद्यता

भुवेति मयः-भुवा। देवेभ्यः। कर्म। कृत्वा। अस्तम्। प्रेति। इत। सुदानव इति सु-दानवः ॥ ४ ॥
वयं यद्दिꣳशतिश्च ॥ ३ ॥

[1]अग्नये। अनीकवत इत्यनीक-वते। पुरोडाशम्। अष्टाकपालमित्यष्टा-कपालम्। निरिति। वपति। साकम्। सूर्येण। उद्यतेत्युत्-यता।

प्रेत स्वंस्वं स्थानं वियुक्ता गच्छत। हे सुदानवः कल्याणदानाः। कर्मसमाप्तिं वा अस्तमयत देवाः। 'देवानृणं निरवदाय'* इत्यादि ब्राह्मणम् ॥

इत्यष्टमे तृतीयोनुवाकः.

---

[1]अथ साकमेधहवींषि विधीयन्ते। तत्र प्रथमेहनि यानि भवन्ति तानि विदधाति—अग्नयेनीकवत इति ॥ 'देवासुरास्संयत्ता आसन्। सोग्निरब्रवीत्। ममेयमनीकवती तनूः'† इत्यादि ब्राह्मणम्। 'असौ वा आदित्योग्निरनीकवान्। तस्य रश्म-

*ब्रा. १-६-५. †ब्रा. १-६-६.

मरुद्भ्यस्सान्तपनेभ्यो मध्यन्दिने च-
रुं मरुद्भ्यो गृहमेधिभ्यस्सर्वासां दु-
ग्धे सायं चरुं पूर्णा दर्वि परा पत

मरुद्भ्य इति मरुत्-भ्यः । सान्तपनेभ्य इति सां-तपनेभ्यः । मध्यन्दिने । चरुम् । मरुद्भ्य इति मरुत्-भ्यः । गृहमेधिभ्य इति गृहमेधि-भ्यः । सर्वासाम् । दुग्धे । सायम् । चरुम् । पूर्णा । दर्वि । परेति । पत । सुपूर्णेति सु-पूर्णा । पुनः । एति ।

योऽनीकानि '* । यदा सूर्यश्चोदयं करोति, अध्वर्युश्च पुरोडाशं निर्वपति ; तदानीं सूर्येणोद्यता साकं निर्वपति तदा सूर्योदयकाले निर्वपतीत्यर्थः । ' राजसूय ' इत्यादौ सूर्यशब्दो निपातितः, ' शतुरनुमः ' इत्युद्यच्छब्दात्तृतीयाया उदात्तत्वम् । अथ मध्यन्दिने मरुद्भ्यस्सान्तपनेभ्यश्चरुं निर्वपति । अह्नो मध्यं मध्यंदिनम् । ' मध्यो मध्यं दिनश्चास्मात् ' इति दिनश्प्रत्ययः ? सम्यक्समन्ताच्च शोषणं सन्तपनं, तत्सम्बन्धिनस्सान्तपनाः सन्तापनसमर्थाश्शत्रूणाम् । ' तेऽसुराः पराजिता यन्तः '* इत्यादि ब्राह्मणम् । अथ सायमस्तकाले मरुद्भ्यो गृहमेधिभ्यः गृहमेधयद्भ्यः सर्वासां गवां यजमानसम्बन्धिनीनां दुग्धे चरुं निर्वपति । ' ते देवाश्श्वो विजयिनः '* इत्यादि ब्राह्मणम् ॥

[२]अभ्युदितायां रजन्यां पूर्णदर्व्येण चरन्ति शरनिष्कासस्य दर्वीं पूरयित्वा गार्हपत्ये जुहोति । तत्र पुरोनुवाक्या—पूर्णेत्यनुष्टुप् ॥

*ब्रा. १-६-६.

सुपूर्णा पुनरा पत । वस्नेव वि क्री-
णावहा इषमूर्ज॑ शतक्रतो । देहि
मे ददामि ते नि मे धेहि नि ते
दधे । निहारमिन्नि मे हरा निहा-

पत । वस्ना । इव । वीति । क्रीणावहै । इषम् ।
ऊर्जम् । शतक्रतो इति शत–क्रतो । [2]देहि । मे ।
ददामि । ते । नीति । मे । धेहि । नीति । ते ।
दधे । निहारमिति नि–हारम् । इत् । नीति ।

---

हे दर्वि पूर्णा शरनिष्कासस्य पूरिता । 'वा दान्तशान्त' इति ण्यन्तस्य निपात्यते । ईदृशी परापत इन्द्रं प्रति गच्छ । ततस्सुपूर्णा सुष्ठु धनस्य पूर्णा पुनरस्मान् प्रत्यापत आगच्छ । एवं वस्नेव वस्नेन मूल्येनेव । 'सुपां सुलुक्' इत्याकारः । क्रीणावहै इन्द्रश्चाहं च परस्परतः वणिग्वद्विनिमयं करवावहै । किं विक्रीणावहा इत्युच्यते—इषमूर्जमन्नं रसादिकं धनादिकं च; अतोत्रावयोस्त्वं गतागतकारिणी साधनभावमाचरेति । तदेवाह— हे शतक्रतो बहुविधकर्मकरणकुशले गतागतसमर्थे ॥

[3]अथ याज्या—देहीत्यनुष्टुप् ॥ देहि मे मह्यं अभिमतं धनं, अहमपि ते तुभ्यं ददामि । निधेहि स्थापय मे मदर्थं, अहमपि ते त्वदर्थं निदधे स्थापयामि । तथा निहारमित् निहारमेव निर्हृत्यनिर्हृत्येव मे मम निहर, अहमपि ते निहारं निर्हृत्यनिर्हृत्य निहरामि । नियमेन नितरां निर्हृत्य वा समुदा-

रम् ॥ ५ ॥ नि हरामि ते । मरुद्भ्यः क्रीडिभ्यः पुरोडाशꣳ सप्तकपालं निर्वपति साकꣳ सूर्येणोद्यताग्नेयमष्टाकपालं निर्वपति सौम्यं

मे । हर । निहारमिति नि-हारम् ॥ ५ ॥ नीति । हरामि । ते । [4]मरुद्भ्य इति मरुत्-भ्यः । क्रीडिभ्य इति क्रीडि-भ्यः । पुरोडाशम् । सप्तकपालमिति सप्त-कपालम् । निरिति । वपति । साकम् । सूर्येण । उद्यतेत्युत्-यता । [5]आग्नेयम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपति । सौम्यम् ।

याहरणं निहरणम् । आभीक्ष्ण्ये णमुल्, कृदुत्तरपदप्रकृतिस्वरत्वम्, लित्स्वरः । एवमुपकारप्रत्युपकारितया आवयोर्वृत्तिरस्त्विति लोकवृत्तान्तनिदर्शनम् ॥

[4]अथ द्वितीयेह्नि साकं सूर्येणोद्यता मरुद्भ्यः क्रीडिभ्यः पुरोडाशं सप्तकपालं निर्वपति ॥ क्रीडन्तीति क्रीडिनः, ग्रहादित्वाण्णिनिः । 'त एनमत्यक्रीडन् । तत्क्रीडिनां क्रीडित्वम्'* इति ब्राह्मणम् ॥

[5]अथ महाहविस्सम्बन्धीन्यष्टौ हवींषि विदधाति—आग्नेयमष्टाकपालमित्यादि ॥ तत्र पौष्णान्तानि पञ्च मन्त्राणि प्रागेवाम्नातान्यपि पुनः पठित्वा दर्शयति । ऐन्द्राग्नमपि वरुणप्रघासेषु

*ब्रा. १-६-७.

चुरुꣳ सावित्रं द्वादशकपालꣳ सार-
स्वतं चुरुं पौष्णं चुरुमैन्द्राग्नमेका-
दशकपालमैन्द्रं चुरुं वैश्वकर्मणमे-
ककपालम् ॥ ६ ॥

चुरुम् । सावित्रम् । द्वादशकपालमिति द्वादश-
कपालम् । सारस्वतम् । चुरुम् । पौष्णम् । चुरुम् ।
ऐन्द्राग्नमित्यैन्द्र-अग्नम् । एकादशकपालमित्येका-
दश-कपालम् । ऐन्द्रम् । चुरुम् । वैश्वकर्मणमिति
वैश्व-कर्मणम् । एककपालमित्येक-कपालम्॥६॥

इरा निहारं त्रिꣳशच्च ॥ ४ ॥

पष्ठतयाम्नातमेव पुनः पठति । ब्राह्मणं च भवति 'एतद्ब्राह्मणान्येव पञ्च हवींपि । एतद्ब्राह्मण ऐन्द्राग्नः'* इति । 'अथैष ऐन्द्रश्चरुर्भवति'* । ऐन्द्रस्यापूर्वं विधानम् । 'उद्धारं वा एतम्'* इत्यादि ब्राह्मणम् । वैश्वकर्मणस्यैककपालस्य चापूर्वं विधानम् ॥

इत्यष्टमे चतुर्थोनुवाकः.

---

*ब्रा. १-६-७.

सोमाय पितृमते पुरोडाशꣳ षट्क-
पालं निर्वपति पितृभ्यो बर्हिषद्भ्यो
धानाः पितृभ्योऽग्निष्वात्तेभ्योऽभिवा-
न्यायै दुग्धे मन्थमेतत्ते तत ये च

[1]सोमाय । पितृमत इति पितृ-मते । पुरोडाशम् । षट्कपालमिति षट्-कपालम् । निरिति वपति । पितृभ्य इति पितृ-भ्यः । बर्हिषद्भ्य इति बर्हिषत्-भ्यः । धानाः । पितृभ्य इति पितृ-भ्यः । अग्निष्वात्तेभ्य इत्यग्नि-स्वात्तेभ्यः । अभिवान्यांया इत्यभि-वान्यायै । दुग्धे । मन्थम् । [2]एतत् । ते । तत । ये । च । त्वाम् । अन्विति ।

[1]अथ पितृयज्ञहवींषि विदधाति—सोमाय पितृमते पुरोडाशमित्यादि ॥ 'संवत्सरो वै सोमः पितृमान्'* इत्यादि ब्राह्मणम् । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । बर्हिषि सीदन्तीति बर्हिषदः मासाः । अन्त्यलोपश्छान्दसः । तण्डुलभवा लाजा धानाः । अर्धमासाः पितरोऽग्निष्वात्ताः । 'आदितश्च' इति चकारादिडभावः, तृतीयासमासे 'संज्ञायामनाचितादीनाम्' इत्युत्तरपदान्तोदात्तत्वम् । अभिवान्या अन्यवत्सा[स]दोह्या, तस्या दुग्धे सक्तूनोप्य मन्थति स मन्थः । द्रवयुक्तास्सक्तवो मन्थाः । 'अर्ध उपमन्थति'* इत्यादि ब्राह्मणम् ॥

[2]हविश्शेषान् सम्प्रोक्ष्य पिण्डान् कृत्वा वेद्यास्तिसृषु स्रक्तिषु

*ब्रा. १-६-८.

त्वामन्वे॒तत्ते॒ पिता॑मह प्रपिता॑मह॒ ये च॒ त्वामन्वत्रे॒ पितरो॑ यथाभा॒गं मन्द॑ध्वꣳ सुस॒न्दृशं॑ त्वा व॒यं मघ॑-

ए॒तत् । ते॒ । पि॒ता॒म॒ह॒ । प्र॒पि॒ता॒म॒हेति॑ प्र-पि॒ता॒म॒ह॒ । ये । च॒ । त्वाम् । अन्विति॑ । अत्र॑ । पि॒त॒रः॒ । य॒था॒भा॒गमिति॑ यथा-भा॒गम् । म॒न्द॒ध्व॒म् । [3]सु॒स॒न्दृश॒मिति॑ सु-स॒न्दृश॑म् । त्वा॒ । व॒यम् । मघ॑व॒-

निदधाति पूर्वस्यां दक्षिणस्यां अपरस्यामिति—एतत्ते ततेत्यादि ॥ एनदन्नं ते तव भवतु हे तत तात । ये च त्वामनुगता आश्रिताः अन्ये, तेषाश्चैतदन्नं भवतु । एतत्ते अन्नं हे पितामह, ये च त्वामनुगताः तेषां च । पितुः पिता पितामहः । एवमेतत्ते अन्नं हे प्रपितामह, ये चान्ये त्वामनुगताः, तेषाश्च । पितामहस्य पिता प्रपितामहः । अधुना सर्वेपि सामान्येनोच्यन्ते । अत्र अस्मिन् कर्मणि हे पितरः पातारः पितृप्रभृतयो वा पितृपितामहप्रपितामहाः यथाभागं योयो यस्य भागः तेनतेन । 'यथाऽसादृश्ये' इत्यव्ययीभावः । यूयं मन्दध्वं मोदध्वम् । मदि स्तुतिमोदमदस्वप्नगतिषु ॥

[3]आहवनीयमुपतिष्ठते—सुसन्दृशमिति पञ्चपदया ऐन्द्रापङ्क्त्या ॥ इन्द्रात्मना स्तूयते । हे मघवन् इन्द्र सुसन्दृशं सुष्ठनुग्रहदृष्ट्या सर्वस्य द्रष्टारम् । यद्वा—शोभना सन्दृष्टिर्यस्य द्रष्टॄणां तादृशं त्वां वयं मन्दिषीमहि तर्पयामः । आमन्त्रितस्याविद्यमानवत्त्वान्निघाताभावः,

वन्मन्दिषीमहि । प्र नूनं पूर्णवन्धु-
रस्स्तुतो यासि वशाꣳ अनु । यो-
जा न्विन्द्र ते हरी ॥ ७ ॥ अक्ष-

न्निति मर्थ-वन्न् । मन्दिषीमहि । प्रेति । नूनम्
पूर्णवन्धुर इति पूर्ण-वन्धुरः । स्तुतः । यासि ।
वशान् । अनु । योजा । नु । इन्द्र । ते ।
हरी इति ॥ ७ ॥ अक्षन्न् । अमीमदन्त ।

'लिङ्याशिषि' इत्यार्धधातुकत्वाच्छसार्वधातुकानुदात्तत्वाभावः । त्वञ्च सन्तृप्तः पूर्णवन्धुरः अस्माभिर्दत्तैः हविर्भिः पूरितरथपृष्ठः स्तुतश्च अस्माभिरात्मीयैर्वा वन्दिभिः नूनं प्रयासि, इत्थं कृतकृत्यो यातुमारभसे इति तर्कयामि । पञ्चमो लकारः । प्रजायाः नूनं कृतकृत्य एव वशानिष्टान्देशाननुलक्षीकृत्य प्रयाहि अनुक्रमेण वा । कथं याहीत्याह—योजा योजयित्वा । निपातोयं योजयित्वेति समानार्थः । ते हरितावश्वौ । न्विति क्षिप्रनाम । पुराणवचनो वा, पुरातनी या तव पुराणप्रक्रियेति द्योत्यते । यद्वा—योजा योजनी योगकरी [योजनीयो गत्वरौ] क्षिप्रं वाहनार्थं रथे । ण्यन्तात्कर्मणि घञ्; 'सुपां सुलुक्' इत्याकारः । लोटि वा विकरणव्यत्ययेन शप्, वर्णव्यत्ययेन तस्याकारः । क्षिप्रं हरी यानार्थं योजयेत्यर्थः ॥

'गार्हपत्यमुपतिष्ठते—अक्षन्नमीमदन्तेति पञ्चपदया पङ्क्त्या । •इत्यन्तः प्रथमः पादः ॥ अक्षन् भुक्तवन्तः । अदेर्लुङि 'लुङ्सनोर्घस्लृ' इति घस्लादेशः, 'मन्त्रे घस' इत्यादिना च्लेर्लुक्, 'घसिभसोर्हलि च' इत्युपधालोपः, 'शासिवसिघसीनाञ्च' इति

न्नमीमदन्त ह्यव प्रिया अंधूपत ।
अस्तोंपत स्वभानवो विप्रा नवि-
ष्ठया मती । योजा न्विन्द्र ते हरीं।
अक्षंन्पितरोमीमदन्त पितरोतींतृप-

हि । अवेति । प्रियाः । अधूपत । अस्तोपत । स्वभानव इति स्व-भानवः । विप्राः । नविष्ठया । मती । योजा । नु । इन्द्र । ते । हरी इति । [5]अक्षन्न् । पितरः । अमीमदन्त । पितरः । अतीतृपन्त ।

पत्वम् । अमीमदन्त अतृप्यन् । मद तृप्तियोगे, चौरादिकः, तिङः परत्वान्न निहन्यते, हियोगाद्वा । किञ्च—प्रियाः तनूः अवाधूपत अकम्पयन् भोजनस्य साद्गुण्यमनुस्मृत्यैव । धूञ् कम्पने, सिचि व्यत्ययेन गुणाभावः । 'छन्दस्युभयथा' इति सार्वधातुकत्वेन सिचो ङित्त्वाद्वा । अपि च—विप्रा मेधाविनः विशेषज्ञाः स्वभानवः स्वायत्तदीप्तयः* अस्तोपत स्तुवन्ति भोजनं, अहो दत्तं मुहुश्श्रद्धया चेति । नविष्ठया नवतमया । णु स्तवने, तृजन्तात् 'तुश्छन्दसि' इतीष्ठन् प्रत्ययः, 'तुरिष्ठेमेयस्सु' इति तृलोपः । मती मत्या । 'सुपां सुलुक्' इति पूर्वसवर्णः, 'मन्त्रे वृष' इति क्तिन उदात्तत्वम् । 'योजा नु' इत्यादि गतम्† ॥

[5]अन्वाहार्यपचनमुपतिष्ठते—अक्षन् पितर इति ॥ अक्षन् भुक्तवन्तः पितरः पित्रादयः अमीमदन्त तृप्ताश्चाभूवन् । अतीतृपन्त

* म—सुदीप्तयः. † सं. १-८-५.३

न्त पितरोमीमृजन्त पितरः । परे-
त पितरस्सोम्या गम्भीरैः पथिभिः
पूर्व्यैः । अथा पितॄन्थ्सुविदत्राꣳ

पितरः । अमीमृजन्त । पितरः । परेति । इत । पितरः । सोम्याः । गम्भीरैः । पथिभिरिति पथि-भिः । पूर्व्यैः । अथ । पितॄन् । सुविदत्रानिति सु-विदत्रान् । अपीति । इत । यमेन । ये । सध-

अस्मांश्चातर्पयन् । ण्यन्ताल्लुङि च्लेश्चङि 'उरत्' इत्यत्वम् । अमीमृजन्त शोधितवन्तः अस्मान् ॥

[6]पितॄन् प्रवाहयति—परेतेति । पञ्चपदा बृहती ॥ हे पितरः ते यूयं परेत सम्प्रति गृहान् प्रति गच्छत । सोम्यास्सोमार्हाः । 'सोममर्हति' इति यः । गम्भीरैः सुलभान्ततोयैः पथिभिः मार्गैः पूर्व्यैः पूर्वकृतैः महत्तरैरित्यर्थः । 'पूर्वैः कृतमिनयौ च' इति यः । अथ तथा गत्वा ते यूयं पितॄन् अस्मत्पूर्वपुरुषान् सुविदत्रान् शोभनज्ञानान् कल्याणमतीनिति यावत् । सुष्ठु विन्दतीति सुविदत्राः । 'सुवि विदेः कत्रन्' इति कत्रन्प्रत्ययः, कृदुत्तरपदप्रकृतिस्वरत्वम्, 'दीर्घादटि समानपादे' इति संहितायां रुत्वम् । 'निपातस्य च' इत्यथेत्यस्य दीर्घत्वम् । तानपीत अनुप्राप्नुत एकीभवत । पुनश्च ते विशेष्यन्ते—यमेन ये सधमादं सहरथानस्थं मदं यथा तथा मदन्ति माद्यन्ति तेन सह मोदन्ते, तानपीतेति । 'सधमादस्थयोः' इति सधादेशः, गौरादिकान्मदेर्ण्यन्तात्क्विप्, क्रियाविशेषणत्वेपि व्यत्ययेन नपुंसकत्वाभावः, ण-

अर्पात यमेन ये संधमादं मदन्ति।
मनो न्वा हुवामहे नाराशंसेन
स्तोमेन पितृणां च मन्मभिः । आ
॥ ८ ॥ न एतु मनः पुनः क्रत्वे

मादमिति सध–मादम् । मदन्ति । मनः । नु । एति । हुवामहे । नाराशंसेन । स्तोमेन । पितृ-णाम् । च । मन्मभिरिति मन्म–भिः । एति ॥ ८ ॥ नः । एतु । मनः । पुनः । क्रत्वे । दक्षाय ।

मुलन्तो वा । यमेन सहाभीक्ष्णं मदन्तीति माद्यतेर्व्यत्ययेन शप् । मादयतेर्वा व्यत्ययेन परस्मैपदम्, 'छन्दस्युभयथा' इति सार्वधातुकत्वाण्णिलोपः ॥

[7]अथ तैस्सह तं देशं गतमिव कृत्वा मन आह्वयति—मन इति तिसृभिर्गायत्रीभिः ॥ मनः आहुवामहे आह्वयामः । पूर्ववत्सम्प्रसारणम् । नु क्षिप्रं पूर्ववदिति वा । नाराशंसेन नराणां सर्वेषामपि शंसनीयेन मनोहरेण स्तोमेन स्तोत्रेण शस्यन्ते स्तूयन्ते तेन वाचिकेन स्तोमेन मानसेन पितृणाञ्च मन्मभिः मननीयैरिष्टतमैः स्वधादिभिः पदैर्युक्तेन स्तोमेनाह्वयामहे ॥

[8]अथ द्वितीया ॥ तस्मान्नः अस्मान् पुनरैतु । किं प्रयोजनं ? क्रत्वे कर्मणे. कर्मानुष्ठानार्थम् । 'जसादिषु वा वचनं प्राङ्णौ चङ्युपधायाः' इति गुणाभावः । दक्षाय क्रियानुष्ठानसामर्थ्याय । तदपि किमर्थं ? इत्याह—जीवसे जीवितुं दीर्घमायुर्यथा स्यात् । 'तुमर्थे सेसेन्' इति सेप्रत्ययः । किमेतावदेव प्रयोजनम् ? ज्योक्

दक्षाय जीवसे । ज्योक् सूर्यं दृशे ।
पुनर्नः पितरो मनो ददातु दैव्यो
जनः । जीवं व्रातꣳ सचेमहि ।
यदन्तरिक्षं पृथिवीमुत द्यां यन्मा-

जीवसे । ज्योक् । च । सूर्यम् । दृशे । [9]पुनः । नः
पितरः । मनः । ददातु । दैव्यः । जनः । जीवम्
व्रातम् । सचेमहि । [10]यत् । अन्तरिक्षम् । पृथि-
वीम् । उत । द्याम् । यत् । मातरम् । पितरम् ।

---

चिरं सूर्यं दृशे द्रष्टुं मोक्षार्थश्चेत्यर्थः । स ह्यात्मेत्युक्तं, आत्म दर्शनाच्च मोक्ष इति, यथा—'आत्मा वा अरे द्रष्टव्यः'* इति । 'दृशे विख्ये च' इति केमत्ययान्तो निपात्यते ॥

[9]अथ तृतीया ॥ पुनः नः अस्माकं मनः हे पितरः सर्वेषां पातारः । व्यत्ययेन निघाताभावः । युष्मत्प्रसादेन दैव्यः दिवि भवः जनो ददातु । 'देवाद्यञञौ' इति यञ् । वचनव्यत्ययो वा । पितरो ददातु । ततश्च वयं त्वत्प्रसादेन जीवं जीवितं व्रातं सङ्घातात्मानं वर्षशतप्रमाणं सचेमहि सेवेमहि, तादृशजीवितं लभेमहीति ॥

[10]गार्हपत्यसमीपं गच्छन् जपति—यदन्तरिक्षमिति पङ्क्तिः शाक्वरी । केचित् पङ्क्तिमाहुः ॥ यत् यस्मिन् कर्मणि येन मतिपिद्धकरणेन कर्मलोपेन वा यदन्तरिक्षं पृथिवीं अपि च द्यां द्युलोकश्च जि हिंसिम, येन वा मातरं पितरं वा जिहिंसिम हिंसितवन्तः हिंसि-

*बृ. उ. ६-५-६.

तरं पितरं वा जिहिꣳसिम । अग्नि-
र्मा तस्मादेनसो गार्हपत्यः प्र मुं-
श्चतु दुरिता यानि चकृम करोतु
मामनेनसम् ॥ १ ॥

वा । जिहिꣳसिम । अग्निः । मा । तस्मात् ।
एनसः । गार्हपत्य इति गार्ह—पत्यः । प्रेति ।
मुञ्चतु । दुरितेति दुः—इता । यानि । चकृम ।
करोतु । माम् । अनेनसम् ॥ १ ॥

हरी मन्मभिरा चतुश्चत्वारिꣳशच्च ॥ ५ ॥

---

तारस्तेषां सम्भवेम । छान्दसो लिट् । अयमग्निर्गार्हपत्यः तस्मात्तन्निमित्तादेनसः पापात्प्रमुञ्चतु । आत्माधीनत्वात्सर्वासामात्मन्येक* वचनम् । यानि चान्यानि अज्ञातस्वरूपाणि दुश्चरितानि दुःखादिसाधनानि पापानि वयं चकृम यैर्वयं सर्वस्य लोकस्य हिंसितारस्सम्भवाम; तस्माच्चेनसो मामग्निः प्रमुञ्चत्वेव । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । एवं सर्वप्रकाराणां मया मदीयैश्च कृतानां पापानां विमोचनेन मामनेनसं करोत्वयमग्निरिति ॥

इत्यष्टमे पञ्चमोनुवाकः.

---

*म—...त्सर्वसामान्येनैक.

प्रतिपूरुषमेकंकपालान्निर्वपत्येकमतिरिक्तं यावन्तो गृह्यास्स्मस्तेभ्यः कमकरं पशूनाꣳ शर्मासि शर्म

[1]प्रतिपूरुषमिति प्रति-पूरुषम्। एकंकपालानित्येकं-कपालान्। निरिति। वपति। एकम्। अतिरिक्तमित्यति-रिक्तम्। [2]यावन्तः। गृह्याः। स्मः। तेभ्यः। कम्। अकरम्। पशूनाम्। शर्म। अ-

---

[1]अथ त्र्यम्बकान्विदधाति—प्रतिपूरुषमेककपालान्निर्वपतीति ॥ 'अथोपधय इमं देवं त्र्यम्बकैरयजन्त'* इत्यादि ब्राह्मणम्। पूरुषं पूरुषं प्रतिपूरुषं, पुरुषशब्दपर्यायः पूरुषशब्दः। उपलक्षणत्वात् स्त्रियोपि गृह्यन्ते। यजमानस्य यावन्तोमात्यास्सस्त्रीकाः तावतः एककपालान्निर्वपति; एकमतिरिक्तं सङ्ख्या निर्वपेत्। 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम्। 'जाता एव प्रजा रुद्रान्निर वदयते'† इत्यादि ब्राह्मणम् ॥

[2]त्र्यम्बकानादाय गार्हपत्यमुपतिष्ठते—यावन्त इति ॥ गृहे भवा गृह्याः। व्यत्ययेनाद्युदात्तत्वाभावः। यावन्तः यत्परिमाणा वयं गृह्याः पुमांसस्त्रियश्च स्मो भवामः; तेभ्यस्सर्वेभ्योस्मभ्यं कं सुखमेभिस्त्र्यम्बकैरकरं करोमि। यद्वा—सर्वेभ्यस्सुखकरं त्र्यम्बकयागाख्यमेतत्कर्म करोमीति। छान्दसो लुङ्। 'मन्त्रे घस' इति च्लेर्लुक्। पुरुषव्यत्ययो वा, कं कुर्वीतेति। कस्मादेव-

---

*ब्रा. १-४-१०. †ब्रा. १-६-१०.

यजमानस्य शर्म मे यच्छैक एव
रुद्रो न द्वितीयाय तस्थ आखुस्ते
रुद्र पशुस्तं जुषस्वैष ते रुद्र भाग-

सि । शर्म । यजमानस्य । शर्म । मे । यच्छ । [3]एकः । एव । रुद्रः । न । द्वितीयाय । तस्थे । आ-खुः । ते । रुद्र । पशुः । तम् । जुषस्व । एषः । ते । रुद्र । भागः । सह । स्वस्रा । अम्बिकया ।

---

मुच्यसे ? इति चेत्—पशूनां सर्वेषां शर्मासि शर्म सुखं शरणं वा त्वमसि । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् । किञ्च—यजमानस्य च शर्मासि स त्वं मम च शर्म यच्छ देहि ॥

[3]त्र्यम्बकान् सकृत्सकृदवदाय जुहोति—एक एवेति ॥ असहाय एव ऐश्वर्येण रुद्रः तुल्योत्कृष्टरहितः; परस्मिन् पदे स्थितत्वात् । तदेव स्पष्टयति—न द्वितीयाय स्वव्यतिरिक्ताय कस्मैचिदपि तस्थे तिष्ठते आत्मानं प्रकाशयति । यथा द्वितीयेन स्वप्रभावो न परिच्छिद्यते तथैव सर्वदा भवति । तस्मात्सर्वदोत्कृष्टरहितत्वादेक एवेति । 'श्लाघह्नुङ्स्थाशपाम्' इति सम्प्रदानत्वम् । 'प्रकाशनस्थेयाख्ययोश्च' इत्यात्मनेपदम् । यद्वा—एक एव रुद्र इति निस्सामान्यमैश्वर्यं प्रतिपादयति । यस्मादेवं तस्मादेष देवः कदाचिदपि द्वितीयाय सहायाय न तस्थे सहायार्थं न तिष्ठतीति सहायापेक्षी न क्वचिदपि कार्येषु भवतीति। हे रुद्र आखुः मूषकः पशुः भागभूतः । श्रुतिप्रामाण्यादवग-

स्सह स्वस्राम्बिकया तं जुषस्व भेषजं गवेऽश्वाय पुरुषाय भेषजमथो अस्मभ्यं भेषजꣳ सुभेषजम्॥१०॥

तम् । जुषस्व । भेषजम् । गवे । अश्वाय । पुरुषाय । भेषजम् । अथो इति । अस्मभ्यमित्यस्म—भ्यम् । भेषजम् । सुभेषजमिति सु—भेषजम्॥ ॥ १० ॥ यथा । असति । सुगमिति सु—गम् ।

म्यते । यद्वा—आखुः उत्करस्थः पुरोडाशः तव पशुः पशुवत्प्रीतिहेतुः । यथोक्तम्—'आखूत्कर एकं पुरोडाशमुपवपति '* इति । यद्वा—आखुस्थानीयस्तव पशुः द्विपाच्चतुष्पाच्च सर्वः ; तस्मात्तमाखूत्करस्थं पुरोडाशं जुषस्व । अपि च—हे रुद्र स एवाखूत्करस्थस्तव भागः सर्वस्त्रैयम्बकादानात्मकः ; तस्मात्तमपि भगवत्याम्बिकया देव्या सह जुषस्व । लक्षितलक्षणया स्वस्रा भगिनी लक्ष्यते । भगिन्या भगवत्या । यद्वा—स्वसृत्वेन सहत्वं लक्ष्यते तेन नाविनाभावः । यद्वा—स्वमात्मानं सरति भजत इति स्वसा देहार्धभूता । पृषोदरादिः । सुष्ठु वात्मना अस्यते प्राप्यते इति स्वसा । असु गत्यादिषु, तस्मात् 'सुन्यसेरृन्' इति ऋन्प्रत्ययः, व्युत्पत्त्यनवधारणान्नावगृह्यते ॥

ततश्च त्वत्प्रसादादस्माकमित्थमस्त्वित्याशास्ते—भेषजं गव इति पङ्क्त्या पञ्चपदया ॥ भेषजं गवेऽश्वायेति प्रथमः पादः । सर्वत्र जातावेकवचनम् । गोभ्योऽश्वेभ्यः पुरुषेभ्यश्च भेषजमौषधं यथा

यथासंति । सुगं मेषाय मेष्यै अ-
वाम्ब रुद्रमदिमह्यव देवं त्र्यम्ब-
कम् । यथा नश्श्रेयसः करद्यथा नो

मेषाय । मेष्यै । अवेति । अम्ब । रुद्रम् । अदिमहि । अवेति । देवम् । त्र्यम्बकमिति त्रि-अम्बकम् । यथा । नः । श्रेयसः । करत् । यथा । नः । वस्यसः । करत् । यथा । नः । पशुमत इति

---

असति भवेत्; तथा जुषस्व । अथो अपि च अस्मभ्यं यथा भेषजं रोगशमनं च भवेत्, सुभेषजं च शरीरसिद्ध्यादिकारणं यथा भवेत्, सुगं सुष्ठुगम्यं सेव्यं यथा भवेत् । सुष्ठु वा गम्यतेऽनेन सर्वमभिमतं यथा तथा तं जुषस्व । किञ्च— मेषेभ्यो मेषीभ्यश्च भेषजं यथा स्यात् तथा जुषस्व । अस्तेर्लेटि शपो लुकि 'लेटोडाटौ' इत्यडागमः । गोशब्दात् 'सावेकाचः' इति प्राप्तं विभक्त्युदात्तत्वं 'न गोश्वन्' इति प्रतिषिध्यते ॥

इदानीमारोग्यानन्तरं धनसमृद्ध्यादिकमाशास्ते—अवाम्बेति षट्पदा जगतीयम् ॥ अत्र देवी प्रत्याशास्ते । हे अम्ब जगतां मातः देवं (अम्ब) वयमवादिमहि अवदानैस्तोषयामः । अवदानसाध्या देवतातृप्तिरवदानेन लक्ष्यते । छान्दसो लुङ्, व्यत्ययेनात्मनेपदम्, 'स्थाघ्वोरिच्च' इतीत्वकित्त्वे, 'ह्रस्वादङ्गात्' इति सिचो लुक् । त्र्यम्बकश्च देवमवादिमहीत्येव । आदरार्थं द्वितीयं ब्रवी-

वस्यसः करद्यथा नः पशुमतः क-
रद्यथा नो व्यवसाययात्। त्र्यम्ब-

पशु—मतः। करत्। यथा। नः। व्यवसायया-
दिति वि—अवसाययात्। त्र्यम्बकमिति त्रि—अ-

ति गुणान्तरख्यापनार्थं वा। त्र्यम्बकमिति त्रीणि अम्बकानि लोचनानि यस्य। यद्वा—अबि शब्दे, अम्बका वेदाः त्र्यम्बकः वेदत्रयीप्रतिपाद्यः। अथ वा—अम गत्यादिषु, अमनहेतवोम्बाः द्यौरापः पृथिवी चेति, तदाराधनीयत्वात्। त्रयो वा अग्नयः तिस्रो वा गतयः त्रीणि वा ज्योतींषि। छान्दस इयङादेशः। तस्मादेवं महानुभावं देवं त्र्यम्बकमवादिमहि। किमर्थम्? यथा नोस्मान् श्रेयसः विद्याधनपुत्रादिभिः प्रशस्यतरान् करत् कुर्यात् तदर्थमित्यर्थः। पूर्ववल्लेटि शपो लुक्। यथा नोस्मान् वस्यसः वसीयसः वसुमत्तरान् कुर्यात्। वसुमच्छब्दादीयसुनि 'विन्मतोर्लुक्' टिलोपः, छान्दसः ईकारलोपः। वसुशब्दाद्वा 'तुश्छन्दसि' इतीयसुन्, अतिशयेन वसून, यथा चास्मान् पशुमतः बहुपशुकान् कुर्यात् 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम्। यथा च नोस्मान् व्यवसाययात् व्यवसितकर्मणः कुर्यात् अविघ्नेनेदं कर्म समापयेत्। व्यवपूर्वात्स्यतेर्णिचि 'शाच्छासाह्वा' इति युगागमः, लेटचाडागमः॥

[1]त्रिः प्रदक्षिणं परियन्ति—त्र्यम्बकमिति। अनुष्टुबेषा॥ इदानीं मृत्युञ्जयमाशास्ते। त्र्यम्बकं व्याख्यातम्*। सुगन्धिं

*पृ. १–८–६[5].

कं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय
मामृतात् । एष ते रुद्र भागस्तं जुं-

म्बकम् । यजामहे । सुगन्धिमिति सु—गन्धिम् । पुष्टिवर्धनमिति पुष्टि—वर्धनम् । उर्वारुकम् । इव । बन्धनात् । मृत्योः । मुक्षीय । मा । अमृतात् । 'एषः । ते । रुद्र । भागः । तम् । जुषस्व । तेन ।

---

नित्यशोभनं यशोगन्धि, सर्वसुकृतमयत्वात् । 'गन्धस्येत्वे तदेकान्तग्रहणम्' इतीत्वम् । पुष्टिवर्धनं गोभूमिवित्तविद्यादिपुष्टिहेतुं ईदृशं देवं यजामहे । किमर्थम् ? यथा उर्वारुकं फलं बन्धनात्प्रसवबन्धनात् पक्वं स्वयं मुच्यते, एवमहमपि मृत्योरनेन मुक्षीय मुक्तो भूयासं, मामृतान्मुक्षीय अमरणो भूयासम् । मुचेराशिषि लिङि सीयुटि 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वम् । बहुव्रीहौ 'नञो जरमर' इत्युत्तरपदाद्युदात्तत्वम्, भावप्रधानो द्रष्टव्यः । नपुंसमुर्वारुकमिति केचित् । हिम*मित्यन्ये । अन्य आहुः—पुरुषेण वाह्यात्काष्ठादिभारात् यद्भारातिरिक्तं तदुर्वारुकमिति तद्यथा बन्धनव्यवसायान्मुच्यते न वाहकवशं भवति एवमहं मृत्योर्मुक्षीय मृत्युवशं मा गां मां मृत्युर्मा गात् इति । उरोर्भाराद्वारणीयमुर्वारुकमिति ॥

'शुष्के स्थाणौ तान्बध्नाति—एष त इति ॥ हे भगवन् रुद्र एष तव भागः, तं जुषस्व गृहाण ! तेनानेनावसेन पथामवनेन

---

*म-घ-भिट.

पस्व तेनावसेन परो मूजवतोती-
ह्यवततधन्वा पिनाकहस्तः कृत्ति-
वासाः ॥ ११ ॥

अवसेन । परः । मूजवत इति मूज-वतः । अती-
तीति । इहि । अवततधन्वेत्यवतत-धन्वा । पिना-
कहस्त इति पिनाक-हस्तः । कृत्तिवासा इति
कृत्ति-वासाः ॥ ११ ॥

सुभेषजामिहि त्रीणि च ॥ ६ ॥

पथः येन अवते । गत्यर्थादौणादिकोऽस्वप्रत्ययः । परः परस्तात् । मूजवान्नाम पर्वतः उच्छ्रिततया प्रसिद्धः; तस्यापि परस्तात् अतीहि अतिक्रम्य गच्छ । यद्वा—मूड् बन्धने, बन्धनसंसारो मूजः तद्वतः प्रपश्चादतीहि । परशब्दाच्छान्दसोऽसिच्प्रत्ययः । अवततधन्वा अवतारितज्याकरवत्तादृशं धनुर्यस्य इति बहुव्रीहौ 'धनुपश्च' इत्यानङ्, 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । पिनाकहस्तः पिनाकाख्यं धनुर्दण्डं हस्ते अलङ्कारार्थं वहन्न हि ते निरायुधस्यापि चोरादिभयमस्ति । कृत्तिवासाः वैयाघ्रनागचर्ममात्रं वसानः । कवचादि नेति भावः । ईदृशो दूरतः गन्तुमर्हति । देव वयं न बिभीमः प्रसादादृते कस्त्वां पश्यन् बिभेतीति । साकमेधास्समाप्ताः ॥

इत्यष्टमे षष्ठोऽनुवाकः.

ऐन्द्राग्नं द्वादशकपालं वैश्वदेवं चरु-
मिन्द्राय शुनासीराय पुरोडाशं द्वा-
दशकपालं वायव्यं पयस्सौर्यमेक-
कपालं द्वादशगवꣳ सीरं दक्षिणा-

[1]ऐन्द्राग्नमित्यैन्द्र—अग्नम् । द्वादशकपालमिति द्वादश—कपालम् । वैश्वदेवमिति वैश्व—देवम् । चरुम् । इन्द्राय । शुनासीराय । पुरोडाशम् । द्वादशकपालमिति द्वादश—कपालम् । वायव्यम् । पयः । सौर्यम् । एककपालमित्येक—कपालम् । द्वादशगवमिति द्वादश—गवम् । सीरम् । दक्षिणा ।

---

[1]अथ शुनासीरीयं हविर्दिदधाति—ऐन्द्राग्नं द्वादशकपालमिति ॥ तानि पञ्च हवींषि पञ्चसञ्चरव्यतिरिक्तानि, तेन दश हवींषीति केचित् । अन्ये तु 'एतद्ब्राह्मणान्येव पञ्च हवींषि'* इत्युक्त्वा 'अथेन्द्राय शुनासीराय'* इति त्रयाणामनुब्राह्मणे विधानादष्टावित्याहुः । तदानीमैन्द्राग्नवैश्वदेवयोर्विकल्पार्थमाम्नानम् । शुनो वायुः, सीर आदित्यः, तद्वानिन्द्र इहोच्यते, अभेदात्मत्वात् । मत्वर्थीयो वा लुप्यते । 'देवताद्वन्द्वे च' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् । वायव्यम् । 'वाय्वृतुपित्रुषसो यत्' इति यत् । एवं सर्वे एककपालानां यागाः । द्वादशगवं, द्वादश गावस्समाहृताः, तद्युक्तं सीरं लाङ्गलं च दक्षिणा । 'गोरतद्धितलुकि' इति अच् । राजसूयान्तर्भाविताश्चातुर्मास्ययागास्समाप्ताः ॥

---

*ब्रा. १-७-१.

ग्नेयमष्टाकपालं निर्वपति रौद्रं गा-
वीधुकं चरुमैन्द्रं दधि वारुणं यव-
मयं चरुं वहिनी धेनुर्दक्षिणा ये दे-
वाः पुरस्सदोऽग्निनेत्रा दक्षिणसदो
यमनेत्राः पश्चात्सदस्सवितृनेत्रा उ-

[2]आग्नेयम्। अष्टाकपालमित्यष्टा–कपालम्। निरिति। वपति। रौद्रम्। गावीधुकम्। चरुम्। ऐन्द्रम्। दधि। वारुणम्। यवमयमिति यव–मयम्। चरुम्। वहिनी। धेनुः। दक्षिणा। [3]ये। देवाः। पुरस्सद इति पुरः–सदः। अग्निनेत्रा इत्यग्नि–नेत्राः। [4]दक्षिणसद इति दक्षिण–सदः। यमनेत्रा इति यम–नेत्राः। [5]पश्चात्सद इति पश्चात्–सदः। सवितृनेत्रा इति सवितृ–नेत्राः। [6]उत्तरसद इत्यु-

[2]एवं संवत्सरमिष्ट्वा तदन्ते आगामिन्यां पौर्णमास्यामिन्द्रतुरीयेण चतुर्हविषा यजेत, तं विदधाति—आग्नेयमष्टाकपालं निर्वपतीत्यादि॥ गावीधुको रौद्रश्चरुर्द्वितीयः। गवीधुकाः तृणतण्डुलाः। ऐन्द्रं दधि तृतीयम्। वारुणो यवमयश्चरुश्चतुर्थः। 'द्व्यचश्छन्दसि' इति मयट्। तत्र वहिनी धेनुर्दक्षिणा। गतम्। 'देवासुरास्संयत्ता आसन्। ते देवा अग्निमब्रुवन्। त्वया वीरेणासुरानभिभवामेति। सोऽब्रवीत्। त्रेधाऽहमात्मानम्'* इत्यादि ब्राह्मणम्॥

*ब्रा. १-७-१.

त्तरसदो वरुणनेत्रा उपरिषदो बृह-
स्पतिनेत्रा रक्षोहणस्ते नः पान्तु ते
नोवन्तु तेभ्यः ॥ १२ ॥ नमस्ते-

त्तर–सदः । वरुणनेत्रा इति वरुण–नेत्राः । [7]उप-
रिषद इत्युपरि–सदः । बृहस्पतिनेत्रा इति बृहस्प-
ति–नेत्राः । रक्षोहण इति रक्षः–हनः । ते । नः ।
पान्तु । ते । नः । अवन्तु । तेभ्यः ॥१२॥ नमः ।

[5-7]यस्मिन्नहनीन्द्रतुरीयं कर्म क्रियते तस्यां रात्र्यां पञ्चेध्मीयेन यजेत, आहवनीयधिष्ण्य एव चतुर्धाहवनीयं प्रतिदिशं व्युद्धृत्य मध्ये पञ्चमं कृत्वा पञ्चगृहीतेनाज्येन यथालिङ्गं जुहोति । आज्येनैतान्व्याघारयतीति केचित्—ये देवाः पुरस्सद इत्यादिभिः ॥ तत्र ये देवा इति पदद्वयं रक्षोहण इत्यादि च पूर्वत्र परत्र च पञ्चस्वप्यनुपज्यते । ये देवाः पुरस्सदः पूर्वस्यां दिशि सीदन्तीति । 'पूर्वापराधराणाम्' इत्यसिप्रत्ययः । अग्निनेत्राः अग्निप्रधानाः । 'छन्दसि नेतुरुपसङ्ख्यानम्' इत्यप्रत्ययः, 'ऋतश्छन्दसि' इति कबभावः । रक्षोहणः रक्षसां हन्तारः, ते नोस्मान्पान्तु, ते नोस्मानवन्तु प्रीणयन्तु, तेभ्यो नमः नमस्कुर्मः, तेभ्यस्स्वाहा स्वाहुतमस्तु । एवं ये देवाः दक्षिणसदः यमनेत्रा रक्षोहणः ते नः पान्तु ते नोवन्त्वित्यादि । तथा ये देवाः पश्चात्सदः सवितृनेत्राः रक्षोहण इत्यादि । ये देवा उत्तरसदो वरुणनेत्राः रक्षोहण इत्यादि । ये देवा उपरिषदो बृहस्पतिनेत्राः

भ्युस्स्वाहा समूढꣳ रक्षस्सन्दग्धꣳ रक्ष इदमहꣳ रक्षोभि सं दहाम्यग्नये रक्षोघ्ने स्वाहा यमाय सवित्रे वरुणाय बृहस्पतये दुवस्वते रक्षो-

तेभ्यः । स्वाहा । [8]समूढमिति सं-ऊढम् । रक्षः । संदग्धमिति सं-दग्धम् । रक्षः । इदम् । अहम् । रक्षः । अभि । समिति । दहामि । [9]अग्नये । रक्षोघ्न इति रक्षः-घ्ने । स्वाहा । [10]यमाय । [11]सवित्रे । [12]वरुणाय । [13]बृहस्पतये । दुवस्वते । रक्षोघ्न

---

रक्षोहण इत्यादि । वनस्पत्यादित्वात् बृहस्पतिशब्दे पूर्वोत्तरयोः पदयोर्युगपत्प्रकृतिस्वरत्वम् ॥

[8]उद्वेपेण सर्वानाहवनीयाङ्गारान्मध्ये एकयोपसमूहति—समूढमिति ॥ समूढमेकीकृत्य नाशितमस्तु रक्षः अनेनाङ्गारसमूहेन, तथा सन्दग्धं एकीकृत्य दग्धमस्तु । उभयत्रापि पूर्वपदप्रकृतिस्वरत्वं 'गतिरनन्तरः' इति । तस्मादहं रक्षः इदमहमभिसन्दहामि आभिमुख्येन चैकीकृत्य चानेन दहामि । इदमिति क्रियाविशेषणम् ॥

[9–13]अपरं पञ्चगृहीतं गृहीत्वा पञ्च स्रुवाहुतीरभिजुहोति—अग्नये रक्षोघ्ने स्वाहेति ॥ यमादिष्वपि चतुर्ष्वनुषज्यते । दुवस्वते इति विकल्पार्थ इति केचित् । बृहस्पतिविशेषणमित्यन्ये ।

म्ने स्वाहा॑ प्रष्टिवा॒ही रथो॒ दक्षि॑णा
दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे॑ऽश्विनो॑-
र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्या॒ꣳ रक्ष॑सो

इति॑ रक्षः—म्ने । स्वाहा॑ । प्र॒ष्टि॒वा॒हीति॑ प्रष्टि—वा॒ही । रथः॑ । दक्षि॑णा । [14]दे॒वस्य॑ । त्वा॒ । स॒वि॒तुः । प्र॒स॒व इति॑ प्र—स॒वे । अ॒श्विनोः॑ । बा॒हुभ्या॒मिति॑ बा॒हु—भ्या॒म् । पू॒ष्णः । हस्ता॑भ्याम् । रक्ष॑सः । व॒धम् ।

---

दुवस्वते परिनिर्यावते बृहस्पतय इति । सर्वे निगदसिद्धाः । रक्षोघ्ने रक्षसां हन्त्रे । उदात्तनिवृत्तिस्वरेण चतुर्थ्या उदात्तत्वम् । सवित्रे इति 'उदात्तयणः' इति विभक्त्युदात्तत्वम् । बृहस्पति-रुक्तस्वरः ॥

अत्र *प्रष्टिवाही रथो दक्षिणा । प्रष्टिः त्रिपादाधारविशेषः ।* यो रथस्त्रिभिरश्वैर्युक्तः प्रष्टिवद्वहति स प्रष्टिवाही । 'उपमानं शब्दार्थप्रकृतावेव' इति नियमात् पूर्वपदाद्युदात्तत्वाभावे कृदुत्तरप-दप्रकृतिस्वरत्वमेव भवति । 'प्रजापतिरग्निमसृजत । तं सृष्टं रक्षांस्यजिघांसन् । स एताः प्रजापतिरात्मनो देवता निरमिमी-त'* इत्यादि ब्राह्मणम् ॥

यो रक्षोभ्यो बिभियात्पिशाचेभ्यो वा सोनेन यजेतेत्ययज्ञ-संयुक्तं केचिदाहुः ॥

[15]अथ व्युष्टायां पुनर[पुरा]ग्निहोत्रात् अपामार्गसक्तून् जुहोति—

---

*ब्रा. १-७-१.

वधं जुहोमि हत᳚ रक्षोऽवधिष्म

रक्षो यद्वस्ते तद्दक्षिणा ॥ १३ ॥

धात्रे पुरोडाशं द्वादशकपालं निर्व-

पत्यनुमत्यै चरु᳚ राकायै चरु᳚ सिं-

जुहोमि । [15]हतम् । रक्षः । [16]अवधिष्म । रक्षः ।

[17]यत् । वस्ते । तत् । दक्षिणा ॥ १३ ॥

तेभ्यः पञ्चचत्वारि᳚शच्च ॥ ७ ॥

[1]धात्रे । पुरोडाशम् । द्वादशकपालमिति द्वाद-श–कपालम् । निरिति । वपति । अनुमत्या इत्य-नु–मत्यै । चरुम् । राकायै । चरुम् । सिनीवाल्यै ।

---

देवस्येति ॥ व्याख्यातम्* । रक्षसो वधं वधहेतूनिमान् जुहोमीति ॥

[15]स्त्रुवं प्रहरति—हतं रक्ष इति ॥

[16]उत्तिष्ठति—अवधिष्म रक्ष इति ॥ हतवन्तो वयं रक्षः, तत्किमिदानीमास्म इत्युत्तिष्ठति ॥

[17]अत्र राजा यद्वस्ते परिधत्ते तद्दक्षिणा अध्वर्यवे वस्त्रं देयम् ॥

इत्यष्टमे सप्तमोऽनुवाकः.

---

[1]अथाग्निहोत्रं हुत्वा देविकाहवींषि निर्वपति । तानि विदधाति—धात्र इत्यादि ॥ पञ्चेमानि हवींषि । 'संवत्सरो वै धाता'† इत्यादि ब्राह्मणम् । अनुमत्यादीनि नामानि । अनुमतिरूनचन्द्रा पञ्चदशी,

---

*सं. १-१-४६. †ब्रा. १-७-२.

नीवाल्यै चरुं कुह्वै चरुं मिथुनौ गा-
वौ दक्षिणाग्नावैष्णवमेकादशकपालं
निर्वपत्यैन्द्रावैष्णवमेकादशकपालं
वैष्णवं त्रिकपालं वामनो वही दक्षि-

चरुम् । कुह्वै । चरुम् । मिथुनौ । गावौ । दक्षिणा । [2]आग्नावैष्णवमित्याग्ना—वैष्णवम् । एकादशकपालमित्येकादश—कपालम् । निरिति । वपति । ऐन्द्रावैष्णवमित्यैन्द्रा—वैष्णवम् । एकादशकपालमित्येकादश—कपालम् । वैष्णवम् । त्रिकपालमिति त्रि—कपालम् । वामनः । वही । दक्षिणा ।

पूर्णचन्द्रा राकेति, किञ्चिद्दृष्टचन्द्रा पञ्चदशी सिनीवाली, नष्टचन्द्रा कुहूः । धात्रे । 'उदात्तयणः' इति विभक्त्युदात्तत्वम् । अनुमत्यै । 'तादौ च निति' इति गतेः प्रकृतिस्वरत्वम् । सिनीवाल्यै । पूर्ववद्विभक्त्युदात्तत्वम् । जुहोतेर्ह्वयतेर्वाऽपि कुहूः । 'नोङ्धात्वोः' इति विभक्तेरुदात्तत्वे प्रतिषिद्धे 'उदात्तस्वरितयोर्यणः' इति विभक्तिस्स्वर्यते । मिथुनौ स्त्रीपुंसौ गावौ दक्षिणा ॥

[2]अथ त्रिहविष्काणि त्रीणि कर्माणि भवन्ति, तानि विदधाति—आग्नावैष्णवमेकादशकपालं निर्वपतीत्यादि ॥ आग्नावैष्णवमैन्द्रावैष्णवमिति 'देवताद्वन्द्वे च' इत्यानङ्, उभयपदवृद्धिश्च । वैष्णवस्त्रिकपालस्तृतीयः । 'वीर्यं वा अग्निः'* इत्यादि ब्राह्मणम् । अत्र वामनो वही दक्षिणा अनुब्राह्मणवशात् ऋषभ इति गम्यते ॥

*ब्रा. १-७-२.

णाऽग्नीषोमीयमेकादशकपालं नि-
र्वपतीन्द्रासोमीयमेकादशकपालꣳ
सौम्यं चरुं बभ्रुर्दक्षिणा सोमापौष्णं
चरुं निर्वपत्यैन्द्रापौष्णं चरुं पौष्णं
चरुꣳ श्यामो दक्षिणा वैश्वानरं द्वा-

[3]अग्नीषोमीयमित्यग्नी—सोमीयम् । एकादशकपालमित्येकादश—कपालम् । निरिति । वपति । इन्द्रासोमीयमितीन्द्रा—सोमीयम् । एकादशकपालमित्येकादश—कपालम् । सौम्यम् । चरुम् । बभ्रुः । दक्षिणा । [4]सोमापौष्णमिति सोमा—पौष्णम् । चरुम् । निरिति । वपति । ऐन्द्रापौष्णमित्यैन्द्रा—पौष्णम् । चरुम् । पौष्णम् । चरुम् । श्यामः । दक्षिणा । [5]वैश्वा-

[3]अथ द्वितीयम्—अग्नीषोमीयमित्यादि ॥ 'ईदग्नेस्सोमवरुणयोः' इतीकारः, 'अग्नेस्तुत्स्तोमसोमाः' इति षत्वम्, 'द्यावापृथिवी-शुनासीर-' इति छः । इन्द्रासोमीयम् । छान्दसश्छः, पूर्ववदानङ् । सौम्यश्चरुस्तृतीयः । 'सोमाट्ट्यण्' । 'अग्निः प्रजानां प्रजनयिता'* इत्यादि ब्राह्मणम् । बभ्रुः श्यामकपिलो गौर्दक्षिणा ॥

[4]अथ तृतीयम्—सोमापौष्णमित्यादि ॥ पूर्ववदानङ्, उभयपदवृद्धिश्च । पौष्णश्चरुस्तृतीयः । अत्र श्यामो गौर्दक्षिणा ॥

[5]अथ तदानीमेव कर्तव्यं यागं विदधाति—वैश्वानरं द्वादश-

*ब्रा. १-७-२.

दशकपालं निर्वपति हिरण्यं दक्षि-
णा वारुणं यवमयं चरुमश्वो द-
क्षिणा ॥ १४ ॥

वार्हस्पत्यं चरुं निर्वपति ब्रह्मणो

नरम् । द्वादशकपालमिति द्वादश–कपालम् । निरिति । वपति । हिरण्यम् । दक्षिणा । वारुणम् । यवमयमिति यव–मयम् । चरुम् । अश्वः । दक्षिणा ॥ १४ ॥

वैश्वानरं द्वादशकपालं निरष्टौ च ॥ ८ ॥

[1]वार्हस्पत्यम् । चरुम् । निरिति । वपति । ब्रह्मणः । गृहे । शितिपृष्ठ इति शिति–पृष्ठः ।

---

कपालमिति ॥ तत्र हिरण्यं दक्षिणा ॥

[6]अथ तदानीमेव वारुणं यवमयं चरुं निर्वपति । अत्राश्वो दक्षिणा ॥*

इत्यष्टमे अष्टमोनुवाकः.

---

[1]अथ रत्निनां हवींषि द्वादश भवन्ति अन्वहं कर्तव्यानि, तानि विदधाति 'रत्निनामेतानि हवींषि भवन्ति'† इत्यादि ब्राह्मणम् । अग्नीन् समारोप्य ब्रह्मणो महर्त्विजो गृहं गत्वा

---

*'युक्त इति निर्णिक्तम् इत्यर्थः' इत्यधिकः पाठः सर्वेषु कोशेषु दृश्यते.

†ब्रा. १-७-३.

गृहे शितिपृष्ठो दक्षिणैन्द्रमेकादश-
कपालꣳ राजन्यस्य गृह ऋषभो
दक्षिणादित्यं चरुं महिष्यै गृहे धे-
नुर्दक्षिणा नैरृतं चरुं परिवृक्त्यै
गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नं

दक्षिणा । ऐन्द्रम् । एकादशकपालमित्येकादश–कपालम् । राजन्यस्य । गृहे । ऋषभः । दक्षिणा । [3]आदित्यम् । चरुम् । महिष्यै । गृहे । धेनुः । दक्षिणा । [4]नैरृतमिति नैः–ऋतम् । चरुम् । परिवृक्त्या इति परि–वृक्त्यै । गृहे । कृष्णानाम् । व्रीहीणाम् । नखनिर्भिन्नमिति नख–निर्भिन्नम् ।

---

बार्हस्पत्यं चरुं निर्वपति । पत्युत्तरपदलक्षणो ण्यः । तत्र शितिपृष्ठः श्वेतपृष्ठो गौर्दक्षिणा ॥

[2]श्वो भूते राजन्यस्य गृहं गत्वा तत्रैन्द्रमेकादशकपालं निर्वपति । तत्र ऋषभो दक्षिणा ॥

[3]श्वो भूते महिष्याः प्रथमाया राज्ञः पत्न्या गृहं गत्वा तत्रादित्यं चरुं निर्वपति । अङ्गुष्ठमात्रः पुरोडाशः इत्येके ॥

[4]श्वो भूते परिवृक्त्या राज्ञो मध्यमपत्न्याः । परिपूर्वात् वृणक्तेः 'क्तिचि क्तौ च संज्ञायाम्' इति क्तिच्, 'उदात्तयणः' इति विभक्तेरुदात्तत्वं बाधित्वा 'उदात्तस्वरितयोर्यणः' इति व्यत्ययेन स्वरितत्वम् । कृष्णानां व्रीहीणां पत्न्या नखैर्निर्भिन्नं नखनिर्भिन्नं तण्डुलैश्चरुं कुर्यात् । 'तृतीया कर्मणि' इति पूर्वपदप्रकृति-

कृष्णा कूटा दक्षिणाग्नेयमष्टाकपा-
लꣳ सेनान्यो गृहे हिरण्यं दक्षिणा
वारुणं दशकपालꣳ सूतस्य गृहे
महानिरष्टो दक्षिणा मारुतꣳ स-

कृष्णा । कूटा । दक्षिणा । [5]आग्नेयम् । अष्टाकपालमित्यष्टा–कपालम् । सेनान्य इति सेना–न्यः । गृहे । हिरण्यम् । दक्षिणा । [6]वारुणम् । दशकपालमिति दश–कपालम् । सूतस्य । गृहे । महानिरष्ट इति महा–निरष्टः । दक्षिणा । [7]मारुतम् । सप्तकपालमिति सप्त–कपालम् । ग्रामण्य इति

स्वरत्वम् । नखेपूलूखलधर्मान् मुसलधर्मांश्च करोति । तत्र कृष्णा कूटा भग्नशृङ्गा गौर्दक्षिणा ॥

[5]श्वो भूते सेनान्यः सेनापतेः गृहं गत्वा तत्राग्नेयमष्टाकपालं निर्वपति । 'नोङ्धात्वोः' इति विभक्तेरुदात्तत्वे प्रतिषिद्धे पूर्वस्वरितत्वम् । तत्र हिरण्यं दक्षिणा ॥

[6]श्वो भूते सूतस्य सारथेः । ब्राह्मण्यां क्षत्रियेण जातस्येत्येके । तस्य गृहं गत्वा वारुणं दशकपालं निर्वपति । महानिरष्टः पीडितवृषणो गौर्दक्षिणा देया । अश्नोतेर्निष्ठायां 'यस्य विभाषा' इतीट्प्रतिषेधः, महांश्चासौ निरष्टश्च । वृषणपीडनेन महानभूत् । दासीभारादिर्द्रष्टव्यः, बहुव्रीहिर्वा ॥

[7]श्वो भूते ग्रामण्यः ग्रामस्य यो नेता तस्य गृहे मारुतं

सर्कपालं ग्रामण्यो गृहे पृश्निर्द-
क्षिणा सावित्रं द्वादशकपालम्॥१५॥
क्षत्तुर्गृह उपध्वस्तो दक्षिणाश्विनं
द्विकपालꣳ संग्रहीतुर्गृहे संवात्यौ

ग्राम–न्यः। गृहे। पृश्निः। दक्षिणा। [8]सावित्रम्।
द्वादशकपालमिति द्वादश–कपालम् ॥ १५ ॥
क्षत्तुः। गृहे। उपध्वस्त इत्युप–ध्वस्तः। दक्षिणा।
[9]आश्विनम्। द्विकपालमिति द्वि–कपालम्।
सङ्ग्रहीतुरिति सं–ग्रहीतुः। गृहे। सवात्याविति

सप्तकपालं निर्वपति। तत्र पृश्निः शुक्लो गौर्दक्षिणा। कुरटाख्यो गोविशेष इत्यन्ये॥

[8]श्वो भूते क्षत्तुर्मन्त्रिणः। अन्तःपुराध्यक्षस्येत्येके। तस्य गृहं गत्वा तत्र सावित्रं द्वादशकपालं निर्वपति। तत्र उपध्वस्तोऽन्येन वर्णेन परिभूतनिजवर्णो गौर्दक्षिणा। 'संज्ञायामनाचितादीनाम्' इत्युत्तरपदाद्युदात्तत्वम्॥

[9]श्वो भूते सङ्ग्रहीतुस्सारथेः रश्मिग्राहिणो गृहं गत्वा आश्विनं द्विकपालं निर्वपति। रज्जुभिर्नियन्ता कुमाराध्यक्ष इत्यन्ये। सवात्यौ समानमातृकवत्सौ समाने वाते भवौ सवात्यौ सोदर्यौ। 'भवे छन्दसि' इति यः। वत्सान्तरेण दोह्या मृतवत्सा च तदीया च मातेत्यन्ये॥

दक्षिणा पौष्णं चरुं भागदुघस्य गृ-
हे श्यामो दक्षिणा रौद्रं गावीधुकं
चरुमक्षावापस्य गृहे शवल उद्वारो
दक्षिणेन्द्राय सुत्राम्णे पुरोडाशमे-
कादशकपालं प्रति निर्वपतीन्द्राया॰-

स—वात्यौ । दक्षिणा । [10]पौष्णम् । चरुम् । भाग-
दुघस्येति भाग—दुघस्य । गृहे । श्यामः । दक्षि-
णा । [11]रौद्रम् । गावीधुकम् । चरुम् । अक्षावाप-
स्येत्यक्ष—आवापस्य । गृहे । शवलः । उद्वार
इत्युत्—वारः । दक्षिणा । [12]इन्द्राय । सुत्राम्ण इति सु-
त्राम्णे । पुरोडाशम् । एकादशकपालमित्येकादश—
कपालम् । प्रति । निरिति । वपति । इन्द्राय ।

[10]श्वो भूते भागदुघस्य यो राज्ञष्षड्भागं गृह्णाति तस्य गृहं गत्वा पौष्णं चरुं निर्वपति । 'दुहः कब्घश्च' इति कप्, छान्दसमन्तोदात्तत्वम् । तत्र श्यामो गौर्दक्षिणा ॥

[11]श्वो भूते अक्षावापस्य, यस्सहायो द्यूतकर्मणि अक्षावापनस्य कर्ता तस्य गृहं गत्वा रौद्रं गावीधुकं चरुं निर्वपति । तत्र शबलः उद्वारः उद्गतवालो गौर्दक्षिणा । केचित् पौष्णरौद्रयोर्मध्ये तक्षरथकारयोर्गृहे वैष्णवं त्रिकपालं सर्वायसदक्षिणमाहुः ॥

[12]अथ रत्निनां हविष्षु संस्थितेषु अग्नीन् परिसमारोप्य यजमानस्य गृहं गत्वा ऐन्द्रं कर्म द्विहविष्कं करोति, तद्विदधाति—इन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं प्रति निर्वपति, इन्द्रायां-

होमुचेयं नो राजा वृत्रहा राजा
भूत्वा वृत्रं वध्यान्मैत्राबार्हस्पत्यं
भवति श्वेतायै श्वेतवत्सायै दुग्धे

अꣳहोमुच इत्यꣳहः-मुचे । [13]अयम् । नः । राजा । वृत्रहेति वृत्र-हा । राजा । भूत्वा । वृत्रम् । वध्यात् । [14]मैत्राबार्हस्पत्यमिति मैत्रा-बार्हस्पत्यम् । भवति । श्वेतायै । श्वेतवत्साया इति श्वेत-वत्सायै । दुग्धे । स्वयम्मूर्त इति स्वयं-मूर्ते । स्वय-

होमुचे पुरोडाशमेकादशकपालं प्रति निर्वपति । प्रतिनिर्वाप्ये एते । केचिदृषभं दक्षिणामाहुः ॥

[13]पुरस्तात्स्विष्टकृतोध्वर्युर्जपति—अयं न इति ॥ रत्निनां गृहेभ्यः प्रव्रजतोनुमन्त्रणमनेनेति केचिदाहुः । अयं नोस्माकं राजा वृत्रहा शत्रुहा भूत्वा राजा दीप्यमानश्च भूत्वा वृत्रं शत्रून् वध्यात् नाशयेदित्याशास्महे । जातविकवचनम् । यद्वा—वृत्रहा राजा इन्द्रः यो वृत्रं हत्वा अधिकार्य* राजा स एव भूत्वा वृत्रं वध्यादिति ॥

[14]अथेन्द्रकर्मणि समाप्ते श्वो भूते अभिषेचनीयोक्ष्ये प्रक्रान्ते द्विहविष्कां दीक्षणीयामिष्टिं विदधाति—मैत्राबार्हस्पत्यं भवतीति ॥ मैत्रश्च बार्हस्पत्यश्च मैत्राबार्हस्पत्यं, समाहारद्वन्द्वः । मैत्रश्च बार्हस्पत्यश्च द्वौ चरू कर्तव्यौ भवत इत्यर्थः । समासान्तोदात्तत्वं, छान्दस आनङ् । तत्र बार्हस्पत्यस्य प्राथम्येपि

*क,म,प—अधिकर्यं.

स्वयम्मूर्ते स्वयम्मथित आज्य आश्वत्थे ॥ १६ ॥ पात्रे चतुस्स्रक्तौ स्वयमवपन्नायै शाखायै क-

म्मथित इति स्वयं—मथिते । आज्ये । आश्व-त्थे ॥ १६ ॥ पात्रे । चतुस्स्रक्ताविति चतुः—स्र-क्तौ । स्वयमवपन्नाया इति स्वयं—अवपन्नायै । शाखायै. । [15]कर्णान् । च । अकर्णान् । च । तण्डु-

---

अल्पाच्तरत्वान्मैत्रशब्दस्य पूर्वनिपातः । अधुना तयोर्बार्हस्पत्यस्य लक्षणमाह—श्वेताया इति षष्ठ्यर्थे चतुर्थी । श्वेतायाश्श्वेतवत्साया गोर्दुग्धे बार्हस्पत्यः कर्तव्यः । मैत्रस्याह—स्वयम्मूर्त इत्यादि । तामेव श्वेतवत्सां गां आस्त्ये [आन्नस्य?]* दृतौ दुहन्ति दोग्धि, तत्स्वयमेवानातक्तमेव मूर्तं कठिनं भवति । 'स्वयंक्तेन' इति समासः । तदेव मूर्तं बद्ला[रा]दिसंयोगेन परिबद्धं दृतिस्थमेव स्वयम्मथितं भवति । तन्नवनीतं दृतेरुद्धृत्य आतपे स्थापितं तत्स्वयंविलीनमाज्यं भवति । आज्य इत्यत्रापि स्वयमित्यपेक्ष्यते । ईदृश आज्ये मैत्रः कर्तव्य इत्यर्थः । अधुना मैत्रपात्रस्य लक्षणमाह—आश्वत्थ इत्यादि । स्वयमवपन्नायास्स्वयमेव भग्नायाः अश्वत्थशाखाया एकदेशेन क्लृप्ते आश्वत्थे अश्वत्थविकारे पात्रे चतुस्स्रक्तौ चतुरश्रे मैत्रश्चरुः कर्तव्यः । अश्वत्थशब्दात् 'अनुदात्तादेरञ्' इत्यञ्प्रत्ययः ॥

[15]अधुना तयोर्विधानान्तरं विदधाति—कर्णाश्चेति ॥ कर्णा-

---

*म—आस्ये.

णांश्चाकर्णांश्च तण्डुलान् वि चिं-
नुयाद्ये कृणास्स पयसि वार्हस्प-
त्यो येऽकर्णास्स आज्ये मैत्रस्स्वं-
यङ्कृता वेदिर्भवति स्वयन्दिनं वर्-

लान् । वीति । चिनुयात् । ये । कृणाः । सः
पयसि । वार्हस्पत्यः । ये । अकर्णाः । सः
आज्ये । मैत्रः । [16]स्वयङ्कृतेति स्वयं-कृता
वेदिः । भवति । स्वयन्दिनमिति स्वयं-दिनम्
वर्हिः । स्वयङ्कृत इति स्वयं-कृतः । इध्मः । सा ।

छिन्नाश्छिन्नाः अकर्णाः निष्फलीकृताः तन्दुलाः । कर्णांश्चाकर्णांश्च विचिनुयात् 'यथाभागं व्यावर्तेथाम्' इति मन्त्रेण पृथक्कुर्यात् । ततः किमित्याह—ये इत्यादि । तत्र ये कर्णाः छिन्नाः, स पयसि पूर्वोक्ते बार्हस्पत्यश्चरुः कार्यः । ये त्वकर्णाः स आज्ये पूर्वोक्ते मैत्रश्चरुः कार्यः ॥

[16]अत्र स्वयङ्कृता वेदिर्भवति । 'देवस्य त्वा'* इति स्फ्यादानादि 'धा असि'† इत्यन्तं न क्रियते । तथा स्वयन्दिनं स्वयमेव लूनं बर्हिर्भवति असिदादिना न छिनत्ति स्वयम्मग्नान् दर्भानाहरति । दा लवने, इत्वनत्वे छान्दसे । तथा स्वयङ्कृत इध्मः, न वृश्चति । उभयत्र सन्नहनादिकर्म न क्रियते । अत्र यस्या दुग्धे आज्ये चरुः कृतः सैव श्वेता श्वेतवत्सा दक्षिणा देया ।

*सं. २-६-४. †ब्रा. १-७-४.

हिरस्वयङ्कृत इध्मस्सैव श्वेता श्वेत-
वत्सा दक्षिणा ॥ १७ ॥
अग्नये गृहपतये पुरोडाशमष्टाक-
पालं निर्वपति कृष्णानां व्रीहीणाꣳ

एव । श्वेता । श्वेतवत्सेति श्वेत—वत्सा । दक्षि-
णा ॥ १७ ॥

द्वादशकपालमाश्वत्थे त्रयस्त्रिꣳशच्च ॥ ९ ॥

'अग्नये । गृहपतय इति गृह—पतये । पुरोडा-
शम् । अष्टाकपालमित्यष्टा—कपालम् । निरिति ।
वपति । कृष्णानाम् । व्रीहीणाम् । सोमाय । वन-

अथ शितिपृष्ठो गौर्बार्हस्पत्यस्य दक्षिणा, मैत्रस्याश्व इत्यन्ये अनुब्राह्मणदर्शनादिच्छन्ति पूर्वोक्तश्च ॥

इत्यष्टमे नवमोनुवाकः.

---

'अथाभिषेचनीये अग्नीषोमीयस्य पशुपुरोडाशस्यानुनिर्वाप्याण्यष्टौ देवसुवां हवींषि सन्ति, तानि विदधाति—अग्नये गृहपतये इत्यादि ॥ 'देवसुवामेतानि हवींषि भवन्ति'* इत्यादि ब्राह्मणम् । देवस्य यजमानस्यानुज्ञातारोग्न्यादयो देवसुवः । गृहाणां पति-

*ब्रा. १-७-४.

सोमाय वनस्पतये श्यामाकं चरुꣳ सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालमाशूनां व्रीहीणाꣳ रुद्राय पशुपतये गावीधुकं चरुं बृहस्पतये

स्पतये । श्यामाकम् । चरुम् । सवित्रे । सत्यप्रसवायेति सत्य-प्रसवाय । पुरोडाशम् । द्वादशकपालमिति द्वादश-कपालम् । आशूनाम् । व्रीहीणाम् । रुद्राय । पशुपतय इति पशु-पतये । गावीधुकम् । चरुम् । बृहस्पतये । वाचः । पतये ।

---

स्वामी गृहपतिः । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् । कृष्णव्रीह्यादयो वाक्यशेषात्प्रायशः प्रसिद्धाः कृष्णवर्णाः, कृष्णाः । व्रीहीणामित्यादौ 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् । वनानां पतिस्स्वामी वनस्पतिः । पारस्करादित्वात्सुट्, 'उभे वनस्पत्यादिषु' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् । श्यामाकाः श्यामाकाख्याः । सवित्रे 'उदात्तयणः' इति विभक्तिरुदात्ता । सत्यप्रसवायामोघाभ्यनुज्ञाय । आशवष्षाष्टिका इत्येके । त्रिपक्षपच्या इत्यन्ये । पशूनां पतिस्स्वामी पशुपतिः । 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । गावीधुकास्तृणतण्डुलाः । बृहतां पतिः बृहस्पतिः । वनस्पतिवत्सुट्स्वरौ । वाचस्पतये । 'सावेकाचः' इति षष्ठ्या उदात्तत्वम्, 'षष्ठ्याः पतिपुत्र' इति संहितायां सत्वम् । 'षष्ठीयुक्तच्छन्दसि वा' इति पत्युर्घित्वम् ।

वाचस्पतये नैवारं चरुमिन्द्राय ज्ये-
ष्ठाय पुरोडाशमेकादशकपालं महा-
व्रीहीणां मित्राय सत्यायाम्वानां च-
रुं वरुणाय धर्मपतये यवमयं चरुꣳ
सविता त्वा प्रसवानाꣳ सुवताम्-

नैवारम् । चरुम् । इन्द्राय । ज्येष्ठाय । पुरोडाशम् । एकादशकपालमित्येकादश–कपालम् । महाव्रीहीणामिति महा–व्रीहीणाम् । मित्राय । सत्याय । आम्वानाम् । चरुम् । वरुणाय । धर्मपतय इति धर्म–पतये । यवमयमिति यव–मयम् । चरुम् । [2]सविता । त्वा । प्रसवानामिति प्र–सवानाम् । सुवताम् । अग्निः । गृहपतीनामि-

नीवाराश्शुष्कजलाशयोत्थिताः । ज्येष्ठाय प्रशस्यतमाय । महाव्रीहयश्शालय इति केचित् । स्वयं विशीर्णव्रीहिभ्यस्स्वयमुत्पन्ना व्रीहय इत्यन्ये । सत्यस्वरूपाय मित्राय* । धर्मपतिः धर्मस्य पाता । पूर्ववत्स्वरः । यवमयं 'द्व्यचश्छन्दसि' मयट् ॥

[2]अथ पुरोडाशस्विष्टकृतः पुरस्तात् ब्रह्मा यजमानस्य हस्तं गृह्णाति—सवितेत्यादि ॥ अत्र प्रसवस्य प्राधान्यात् तृतीयस्सविता प्रथम आसीत् । सर्वत्र तादर्थ्ये चतुर्थ्याप्षष्ठी । प्रसवानां प्रसवार्थं सर्वासु प्रवृत्तिष्वनुज्ञानार्थं सविता त्वां सुवतां प्रेरयतु । पू प्रेरणे,

*आम्वाः धान्य विशेषाः इति माधवीयम्.

ग्निर्गृहपतीना५ँ सोमो वनस्पतीना५ँ रुद्रः पशूनाम् ॥ १८ ॥ बृहस्पतिर्वाचामिन्द्रो ज्येष्ठानां मित्रस्सत्यानां वरुणो धर्मपतीनां ये देवा देवसुवस्स्थ त इममामुष्याय-

ति गृह-पतीनाम् । सोमः । वनस्पतीनाम् । रुद्रः पशूनाम् ॥ १८ ॥ बृहस्पतिः । वाचम् । इन्द्रः । ज्येष्ठानाम् । मित्रः । सत्यानाम् । वरुणः । धर्मपतीनामिति धर्म-पतीनाम् । ये । देवाः । देवसुव इति देव-सुवः । स्थ । ते । इमम् । आमुष्या-

---

प्रेरणमनुज्ञैव । सर्वत्रानुज्ञातो भवेत्यर्थः । थाथादिना प्रसवशब्दोऽन्तोदात्तः । गृहपतीनामिति । भावप्रधानो निर्देशः । यानि गृहपतित्वानि बहुविधानि तदर्थं सुवताम्, सोमस्त्वां वनस्पत्यर्थं सुवताम्, रुद्रः पशूनां पतिः त्वां पश्वर्थं सुवतां, वागर्थं बृहस्पतिस्सुवताम्, ज्येष्ठानां ज्येष्ठत्वाय इन्द्रस्सुवताम्, सत्यत्वाय मित्रस्सुवताम्, धर्मपतित्वार्थं वरुणस्सुवताम् । हे देवा अग्न्यादयो वरुणान्ताः ये यूयं देवसुवस्स्थ देवस्य दानादिगुणयुक्तस्य यजमानस्य सवितारः प्रेरकास्स्थ ते यूयं यस्मादेवं प्रसवादीनामनुज्ञातारः तस्मादिममामुष्यायणं सिंहवर्मणः पुत्रं नन्दिवर्माणं अनमित्रायानमित्रत्वाय अविद्यमानशत्रुत्वाय सुवध्वम् । अनुजानीत अशत्रुमेनं कुरुतेत्यर्थः । इममामुष्यायणमिति सर्वनामद्वयं विशेषार्थमुपादीयते । अमुष्यश-

णमन॑मि॒त्राय॑ सुवध्वं॑ मह॒ते क्ष॒त्राय॑
मह॒त आधि॑पत्याय मह॒ते जान॑रा-
ज्यायै॒ष वो॑ भर॒ता रा॒जा सोमो॒-

य॒णम् । अ॒न॒मि॒त्राय॑ । सु॒व॒ध्व॒म् । म॒ह॒ते । क्ष॒त्राय॑ । म॒ह॒ते । आधि॑पत्या॒येत्याधि॑-प॒त्या॒य । म॒ह॒ते । जान॑राज्या॒येति॒ जान॑-रा॒ज्या॒य । [3]ए॒षः । व॒ः । भ॒र॒ताः । रा॒जा । [4]सोम॑ः । अ॒स्माक॑म् । ब्रा॒ह्म॒णा-

---

व्दान्नडादित्वात्फक् । किञ्च—महते च क्षत्राय बलाय महते चाधिपत्याय स्वामित्वाय महते अविच्छिन्नाय च जानराज्याय जनानां राजा जनराजः तद्भावाय । उभयत्रापि गुणवचनत्वात् ष्यञ् । इममामुष्यायणं सुवध्वमित्येव । 'बृहन्महतोरुपसङ्ख्यानम्' इति महतो विभक्तेरुदात्तत्वम् ॥

[3]यजमानायतने तिष्ठन् रत्निभ्यो जानपदेभ्योऽध्वर्युरावेदयते—एष व इति ॥ भरतानां निवासो जनपदो भरताः । 'जनपदे लुप्' । भरतानां राजानोऽपि भरताः । 'तस्य राजन्यपत्यवत्' इति 'जनपदशब्दात् क्षत्रियादञ्', 'यञिञोश्च' इति बहुषु लुक् । हे भरताः एष वो युष्माकं राजा, येषं राजत्वेन यजते । एवमयं व्याख्यातिगतो भवति, राज्यं चास्मिन् प्रति-हितम् । यद्यसौ भरतानामेव राजा तदानीमेवं, सम्पदः । यथा-जनपदमिति केचित् ॥

[4]ब्रह्मा जपति—सोम इति ॥ अस्माकं ब्राह्मणानां क्षेत्रे

स्माकं ब्राह्मणाना᳚ राजा प्रति
त्यन्नाम राज्यमधायि स्वां तनुवं
वरुणो अशिश्रेच्छुचेर्मित्रस्य व्रत्या

नाम॑ । राजा॑ । ⁵प्रतीति॑ । त्यत् । नाम॑ । राज्य॑म् । अधायि । स्वाम् । तनुव॑म् । वरु॑णः । अशिश्रेत् । शुचे॑ः । मित्रस्य॑ । व्रत्याः॑ । अभूम । अम॑न्महि ।

राजा, अधुना अयञ्चेति । सर्वदा सराजका एव वयमित्यभिप्रायः ॥

⁵यजमानो मुखं विमृष्टे—प्रति त्यदिति द्वाभ्यां वारुणीभ्यां त्रिष्टुब्भ्याम् ॥ 'महत ऋतस्य नाम' इति प्रथमाया अन्तः । इ अप्यनवसाने । त्यत् एतद्राज्यं नाम नमनीयं प्रत्यधायि मयि प्रतिहितं प्रतिष्ठितमभूत् । यद्वा—छान्दसो लुङ् । प्रतिधीयताम् । 'राज्यमेवास्मिन् प्रतिदधाति'* इति ब्राह्मणम् । हेतुमाह—स्वामात्मीयां तनुवं शरीरं अनुज्ञातृस्वभावत्वं यस्माद्वरुणोशिश्रेत् आश्रितवानासीत् मम धर्मपतित्वाभ्यनुज्ञानं कृतवान् । तेन राज्यं प्रत्यधायीति । 'वरुणसवमेवावरुन्धे'* इत्यादि ब्राह्मणम् । उदाहरणमात्रं वरुणग्रहणं सवित्रादीनां सर्वेषामपि देवसुवां यथा प्रसूतं राज्यं प्रत्यधायीति वेदितव्यम् । श्रयतेर्लुङि 'बहुलं छन्दसि' इति शपश्श्लुः । किञ्च; शुचेर्मित्रस्य व्रत्याः कर्मयोग्याः अभूम । 'तत्र साधुः' इति यत् । अत एव महत ऋतस्य च सत्यस्य यज्ञस्य वा नाम नमनं अमन्महि ज्ञातवन्तः ।

*ब्रा. १-७-४.

अभूमामन्महि महत ऋतस्य नाम
सर्वे व्राता वरुणस्याभूवन्वि मित्र
एवैरराँतिमतारीदसूपुदन्त यज्ञियाः

महतः । ऋतस्यं । नामं । सर्वे । व्राताः । वरुण-स्य । अभूवन् । वीति । मित्रः । एवैः । अरातिम् । अतारीत् । असूपुदन्त । यज्ञियाः । ऋतेनं । वीति ।

---

मनुतेर्लङि, शपो लुक् । यद्वा—न केवलं मित्रस्य प्रत्ता अभूम; अपि तु ऋतस्य च नामामन्महीति ॥

अथ द्वितीया । किम्बहुना सर्वे ऋत्विजः वरुणस्य व्राताः कर्मयोग्या अभूवन् । छान्दसोऽड् । मित्र एवैरागमनैः अस्माकमरातिमदानशीलं शत्रुं व्यतारीत् वितारयतु दातारं करोतु । छान्दसो लुङ् । यद्वा विपूर्वस्तरतिः विप्लवे वर्तते, विनाशो विप्लवः, चुरादिः, विनाशयत्वित्यर्थः । रातेः क्तिचि रातिः, न रातिः अरातिः । यद्वा—अरातिं शत्रुं विशेषेण तारयतु अतिक्रामयतु । किञ्च; यज्ञियाः यज्ञसम्पादनार्हाः ऋत्विजः अस्मानृतेन यज्ञेनासूपुदन्त सूदयन्तु । षूद क्षरणे । रसास्वादनेन सूदयन्तु । 'यज्ञर्त्विग्भ्यां घखञौ' । किञ्च; उ इति समुच्चये । त्रितोऽग्निः त्रिभ्यो लोकेभ्य उत्पन्नः, त्रिभ्यो वातिवातेभ्यः, त्रिभिर्वा ब्राह्मणादिभिः, लौकिकैर्वा कृतमाप्तिः । स त्रितः अस्माकं जरिमाणं स्तोत्रम् । जीर्यतेरौणादिक इमनिच् । जनित्रशब्दाद्वा भावे छान्दस इमनिच्, 'तुरिष्ठेमेयस्सु' इति तृशब्दलोपः । जरिमा स्तोतृत्वं तत् अग्निः व्यानट् व्याप्नोतु अस्माकं स्तुतिं

ऋतेन व्युं त्रितो जरिमाणं न आ-
नड्विष्णोः क्रमोऽसि विष्णोः क्रान्त-
मसि विष्णोर्विक्रान्तमसि ॥ १९ ॥

उ । त्रितः । जरिमाणम् । नः । आनट् । विष्णोः । क्रमः । असि । विष्णोः । क्रान्तम् । असि । विष्णोः । विक्रान्तमिति वि-क्रान्तम् । असि ॥ १९ ॥

पशूनां व्राताः पञ्चविंशतिश्च ॥ १० ॥

गृहीत्वा स्तोत्रफलं ददात्वित्यर्थः । अश्नोतेर्लिङि व्यत्ययेन परस्मैपदं, विकरणव्यत्ययेन श्नम् । नशेर्वा गत्यर्थाल्लुङि 'मन्त्रे घस' इति च्लेर्लुक्, 'छन्दस्यपि दृश्यते' इत्याडागमः । यद्वा— उक्तं ऋतेनास्मानसूपुदन्तेति तदिदमस्माकं जरिमाणं जरां दीर्घायुष्ट्वं व्यानड्व्यापयतु । अन्तर्भावितण्यर्थाल्लुङ् । कियच्चिरमित्याह— उ इत्यप्यर्थे । त्रितोपि त्रिभ्योपि वयोभ्यः पुरस्तात् जरिमाणं नः प्रापयतु सर्वमायुर्जीवयत्वित्यर्थः ॥

[7-9]त्रीन्विष्णुक्रमान् प्राचः क्रामति—विष्णोः क्रमोसीति ॥ व्याख्यातम्* ॥

इत्यष्टमे दशमोनुवाकः.

*सं—१-६-५.

अ॒र्थेत॑स्स्था॒पां पति॑रसि॒ वृ॒षास्यू॒-
¹अ॒र्थेत॒ इत्य॑र्थ-इ॒तः । स्थ॒ । ²अ॒पाम् । पतिः ।

¹*अभिषेकार्थं षोडश सप्तदश वा वायव्यैर्गृह्णाति—अर्थेतस्थे* त्येतैर्मन्त्रैः ॥ एतास्वप्सु प्रथममाज्येन हुत्वा ग्रहान् गृह्णाति। यस्मिन्नेव जुहोति, तस्मिन्नेव जले तेनैव मन्त्रेण ग्रहं गृह्णाति। तत्र 'आपो देवीः' इत्यादिका त्रिष्टुप् सर्वत्रानुषज्यते। 'राष्ट्रदास्स्थ राष्ट्रं दत्त स्वाहा' इत्यन्तेन होमः, 'राष्ट्रदास्स्थ राष्ट्रममुष्मै दत्त' इत्यन्तेन ग्रहणम्। अमुष्मा इत्यत्र चतुर्थ्यन्तं विशेषवाचिपदमुपादीयते, यथा राजसिंहवर्मणे दत्तेति। 'अपां ग्रहान् गृह्णात्येतद्वाव राजसूयम्'* इत्यग्निकाण्डे ब्राह्मणं भवति। तत्रायं प्रयोगक्रमः—'अर्थेतस्थापो देवीर्मधुमतीरगृह्णन्' इत्यारभ्य 'राष्ट्रं दत्त स्वाहा' इति सारस्वतीष्वप्सु प्रागेवानीतासु वहन्तीनां वा जले आज्येन जुहोति, पुनश्च 'अर्थेतस्स्थापो देवीः' इत्यारभ्य, 'राष्ट्रं राजेन्द्रवर्मणे दत्त' इति तस्मिन्नेव जले वायव्यैः पर्णमयेन गृह्णाति। पर्णमयेन स्रुवेणेति केचित्। एवमुत्तरत्रापि होमग्रहणे सर्वत्र समानमन्त्रे कर्तव्ये। मन्त्रार्थस्तु—अर्थेतस्स्थ हे आपः अर्थमरणीयं स्थानान्तरं यन्ति गच्छन्तीति अर्थेतः। एतेः क्विप्। तादृशीर्वै आपः व्यापनस्वभावाः देवीः दीप्तिमतीः मधुमतीः मधुरसवतीः अगृह्णन्देवाः, ऋत्विजो वा। ऊर्जस्वतीः बलवतीः राजसूयाय राजसूयार्थं राजसूये अभिषेकार्थमगृह्णन् चितानाः चिन्तयन्तीः राजसूयाभिनिष्पत्त्युपायचिन्ताव्यापृताः। यद्वा—राजसूयाय चिताना देवा अगृह्णन्। राजेह सूयते राजा वानेन सूयते इति राजसूयः क्रतुः, 'राजसूयसूर्य' इति क्यपि निपात्यते। चिती

*सं—५-६-२.

र्मिर्वृ॑षसे॒नो॑सि व्र॒जक्षि॑त॒स्स्थ॒ म॒रु-

अ॒सि॒ । [3]वृषा॑ । अ॒सि॒ । ऊ॒र्मिः॑ । [4]वृ॒ष॒से॒न॒ इति॑

सञ्चेतने, चुरादिरनुदात्तेत्, 'बहुलमन्यत्रापि' इति णिलुक्, 'बहुलं छन्दसि' इति शपो लुक्, लसार्वधातुकानुदात्तत्वे धातुस्वरः । याभिर्युष्माभिर्मित्रावरुणौ कर्मस्वभ्यषिञ्चन्देवाः, याभिश्च युष्माभिरिन्द्रमभ्यषिञ्चन् देवाः, अरातीश्चात्यनयन् इन्द्रं सर्वान् शत्रूनतीत्योपरीन्द्रं स्थापितवन्तः; ता यूयं राष्ट्रदास्स्थ राष्ट्रस्य दात्र्यस्स्थ, अद्भिर्हि राष्ट्रं भवति । ता यूयमस्मै राष्ट्रं दत्त, स्वाहा स्वाहुतमिदमाज्यमस्तु इति होमे । ग्रहणे तु यस्माद्राष्ट्रदास्स्थ, तस्मादमुष्मै राजेन्द्रवर्मणे राष्ट्रं दत्त; ता वो गृह्णामीति ।

[2]पुन्नदस्य शोणादेर्वा जलं—अपाम्पतिरसीति ॥ अपाम्पति स्समुद्रः तदीया आप उच्यन्ते; विकारे प्रकृतिशब्दात् । समुदायशब्दादेकवचनम् । शोणादीनां पुंस्त्वेन अपांपतित्वम् । 'ऊडिदम्' इति षष्ठ्या उदात्तत्वम् ॥

[3]अथ नद्यां पुरुषे पशौ वा तिष्ठति प्रतीपमन्य ऊर्मिर्युद्ध्यति अन्वीपमन्यः; तयोः प्रतिस्रोता य ऊर्मिर्भवति, तज्जलं गृह्णाति—वृषास्यूर्मिरिति ॥ वृषा वर्षिता वृष्टिहेतुत्वात् । प्रधाने[धाने] वा सङ्घातरूपत्वात् । ऊर्मिस्सङ्घातार्था अरणशीला वा ॥

[4]अथानुस्रोता य ऊर्मिस्तज्जलं गृह्णाति—वृषसेनोसीति ॥ सेक्त्री सेना यस्य संघातत्वेन महत्त्वात् सेकसामर्थ्याच्च । छान्दसमन्तोदात्तत्वम् । केचित्तु—वृषास्यूर्मिरित्येतावता ऊर्मिजलं गृह्णाति वृषसेनोसीति पल्वल्यमिति ॥

तामोर्जस्स्थ सूर्यवर्चसस्स्थ सूर्य-
त्वचसस्स्थ मान्दास्स्थ वाशास्स्थ

वृष-सेनः । असि । [5]व्रजक्षित इति व्रज-क्षितः । स्थ । [6]मरुताम् । ओर्जः । स्थ । [7]सूर्यवर्चस इति सूर्य-वर्चसः । स्थ । [8]सूर्यत्वचस इति सूर्य-त्वचसः । स्थ । [9]मान्दाः । स्थ । [10]वाशाः । स्थ ।

---

[5]अथ कूप्या गृह्णाति—व्रजक्षितस्स्थ इति ॥ व्रजे वेष्टितेवकाशे क्षियन्ति निवसन्तीति व्रजक्षितः । क्षि निवासगत्योः ॥

[6]प्रतीपोदकमावर्तमलं गृह्णाति—मरुतामोजस्स्थेति ॥ मरुतां वायूनामोजः बलं स्थ; तेन निर्वृत्तत्वात् ॥

[7]आदित्ये दृश्यमाने यदा वर्षति तज्जलं गृह्णाति—सूर्यवर्चसस्स्थे ॥ सूर्यं वर्चयन्ति भृशं दीपयन्ति । 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वञ्च' इत्यसुन् । सातपेहि वर्षे भृशमादित्यो दीप्यते । बहुव्रीहिर्वा सूर्यस्येव वर्चो येषामिति । सूर्यरश्मिसंयोगेन वर्चस्वित्वात् ॥

[8]यत्र कुत्र चित्प्रसन्नं जलं गृह्णाति—सूर्यत्वचसस्स्थेति ॥ त्वच संवरणे, सूर्यं त्वचन्ति संवृण्वन्ति । पूर्ववदसुन् । यासु खलु निर्मलास्वप्सु रूपाणि परिदृश्यन्ते ताः खलु सर्वरूपप्रकाशनं सूर्यमपि स्वमहिम्ना संवृण्वन्ति ॥

[9]स्थावराणां गृह्णाति, ह्रादीर्वा—मान्दास्स्थेति ॥ मन्दस्वभावाः । मां दत्तदेवेभ्य इति ह्रादं कुर्वाणाः, अशोष्या इत्यन्ये ॥

[10]अवश्यायोदकं गृह्णाति—[वाशास्स्थेति ॥ वाशा वश्याः नीहारो

शक्करीस्स्थ विश्वभृतस्स्थ जन-
भृतस्स्थाग्नेस्तेजस्यास्स्थापामोषधी-
नाꣳ रसस्स्थापो देवीर्मधुमती-

[11]शक्करीः । स्थ । [12]विश्वभृत इति विश्व-भृतः । स्थ । [13]जनभृत इति जन-भृतः । स्थ । [14]अग्नेः । तेजस्याः । स्थ । [15-16]अपाम् । ओषधीनाम् । रसः । स्थ । अपः । देवीः । मधुमतीरिति मधु-मतीः । अगृह्णन् । ऊर्जस्वतीः । राजसूयायेति

हि नदीप्रवाहवन्मनुष्यगतिं न प्रतिबध्नाति; ततो वश्यत्वम् ॥

[11]गोरुल्व्याः गोगर्भवेष्टनगता आपो गृह्णाति—]*शक्करीस्स्थेति । गर्भसंरक्षणे शक्ताश्शक्कर्यः । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् ॥

[12]पयो गृह्णाति—विश्वभृतस्स्थेति ॥ विश्वं बिभ्रति धारयन्ति वा पोषयन्ति वा विश्वभृतः, तद्रूपेण विवक्षितत्वात् बहुवचनं स्त्रीत्वं च ॥

[13]दधि गृह्णाति—जनभृतस्स्थेति ॥ जनं बिभ्रतीति जनभृतः ॥

[14]घृतं गृह्णाति—अग्नेस्तेजस्यास्स्थेति ॥ अग्नेस्तेजसा सहिता स्तेजस्याः गवादिद्रव्यः । तेजसो वा निमित्तभूतास्तेजस्याः । 'गो द्व्यचः' इति यत् । तेजसि वा भवाः; तदर्थं व्याप्तत्वात् ॥

*अत्र सकलेष्वप्युपलब्धेषु कोशेषु ग्रन्थपातदर्शनात् माधवीयानुसारात् [ ] एतदन्तो ग्रन्थोऽत्र योजितः.

रगृह्णन्नूर्जस्वती राजसूयाय चितां-
नाः । याभिर्मित्रावरुणावभ्यषिञ्चन्
याभिरिन्द्रमनयन्नत्यरातीः । राष्ट्र-
दास्स्थ राष्ट्रं दत्त स्वाहा राष्ट्रदास्स्थ
राष्ट्रममुष्मै दत्त ॥ २० ॥

देवीरापस्सं मधुमतीर्मधुमतीभि-

-राज-सूयाय । चितानाः । याभिः । मित्रावरुणाविति मित्रा-वरुणौ । अभ्यषिञ्चन्नित्यभि-असिञ्चन् । याभिः । इन्द्रम् । अनयन् । अतीति । अरातीः । राष्ट्रदा इति राष्ट्र-दाः । स्थ । राष्ट्रम् । दत्त । स्वाहा । राष्ट्रदा इति राष्ट्र-दाः । स्थ । राष्ट्रम् । अमुष्मै । दत्त ॥ २० ॥

अत्येकादश च ॥ ११ ॥

[1] देवीः । आपः । समिति । मधुमतीरिति म-

[13–16] मधु गृह्णाति—अपामोषधीनां रसस्थेति ॥ अद्भ्यश्च ओषधीभ्यश्च निष्पत्तेः ॥

इत्यष्टमे एकादशोनुवाकः.

---

[1] एवं गृहीत्वाथ वैतसे द्रोणकलशे ग्रहान् समवनयति—देवी-

स्सृज्यध्वं महि वर्चः क्षत्रियाय वन्वा
ना अनाधृष्टास्सीदतोर्जस्वतीर्महि
वर्चः क्षत्रियाय दधतीरनिभृष्टमसि

धु-मतीः । मधुमतीभिरिति मधु-मतीभिः ।
सृज्यध्वम् । महि । वर्चः । क्षत्रियाय । वन्वानाः ।
[2]अनाधृष्टा इत्यना-धृष्टाः । सीदत । ऊर्जस्वतीः ।
महि । वर्चः । क्षत्रियाय । दधतीः । [3]अनिभृष्टमि-
त्यनि-भृष्टम् । असि । वाचः । बन्धुः । तपोजा

---

राप इति ॥ हे देवीरापः मधुमतीः मधुमत्यः मधुरसवत्यः मधुमतीभिस्संसृज्यध्वं परस्परमेकीभवत । महि महत् वर्चः क्षत्रियायास्मै वन्वानाः याचमानाः । वनु याचने शानच् ॥

[[2]अन्तराहोतुर्धिष्ण्यं ब्राह्मणाच्छंसिनश्च सादयति—अनाधृष्टा इति ॥ हे आपः अनाधृष्टाः केनाप्यतिरस्कृताः ऊर्जस्वतीः बलवत्यः महि महत् वर्चः क्षत्रियायास्मै]* दधतीः दधत्यः धारयन्त्यः ददत्यो वा । एवम्भूतास्सत्यः अत्र सीदतेति ॥

[3]शतमानं हिरण्यं मध्नाति—अनिभृष्टमिति ॥ अनिभृष्टमसन्तसमसि रक्षोभिः । वाचो बन्धुः हिरण्यवतां हि वाक् सर्वानभिभवति, वाच उत्कर्षहेतुश्च । तपोजाः अग्नेर्जातत्वात् । [4]जन-

---

*भत्रोपलब्धेषु सर्वेष्वेव कोशेषु ग्रन्थो गलितः, अतोऽत्र [ ] चिह्नमध्ये माधवीयानुसाराद्ग्रन्थो योजितः.

वाचो बन्धुस्तपोजास्सोमस्य दात्रमसि शुक्रावश्शुक्रेणोत्पुनामि चन्द्राश्चन्द्रेणामृता अमृतेन स्वाहा राजसूयाय चितानाः । सधमादो

इति तपः—जाः । [4]सोमस्य । दात्रम् । असि । [5]शुक्राः । वः । शुक्रेण । उदिति । पुनामि । चन्द्राः । चन्द्रेण । अमृताः । अमृतेन । स्वाहा । राजसूयायेति राज—सूयाय । चितानाः । [6]सध-

सनखनक्रमगमो विट् ' ' विड्वनोरनुनासिकस्यात् ' इत्यात्वं, लिङ्गव्यत्ययः ॥

[4]तद्देतस अवदधाति—सोमस्येति ॥ सोमस्य दात्रं देयं त्वमसि दक्षिणारूपत्वात् ॥

[5]हिरण्येनोत्पुनाति—शुक्रा व इति । शुक्राः निर्मलाः वः युष्मान् शुक्रेण पुनामि । चन्द्राः कान्ताः आह्लादनीर्वा चन्द्रेण तादृशेन हिरण्येन । अमृता अमरणाः अमरणहेतुभूताः तादृशेनानेन जीवनहेतुना व उत्पुनामि । स्वाहा एवं कर्तव्यमिति सैव वागाह । राजसूयाय चिताना इति व्याख्यातम्* । केचित्तु—त्रिभिरुत्पवनमाहुः । तदा ' शुक्रा वश्शुक्रेणोत्पुनामि स्वाहा राजसूयाय चितानाः ' इति ' चन्द्राश्चन्द्रेणोत्पुनामि स्वाहा राजसूयाय चितानाः ' इति ' अमृता अमृतेनोत्पुनामि स्वाहा राजसूयाय चितानाः ' इति प्रयोगाः ॥

[6]अथ पालाशादिषु पात्रेषु गृह्णाति—सधमाद इति त्रिष्टुभा ॥

*सं. १-८-११.

द्युम्निनीरूर्जं एता अनिभृष्टा अपस्युवो वसानः । पस्त्यासु चक्रे वरुणस्सधस्थमपाꣳ शिशुः ॥ २१ ॥ मातृतमास्वन्तः । क्षत्रस्योल्वमसि

माद इति सध–मादः । द्युम्निनीः । ऊर्जः । एताः । अनिभृष्टा इत्यनि–भृष्टाः । अपस्युवः । वसानः । पस्त्यासु । चक्रे । वरुणः । सधस्थमिति सध–स्थम् । अपाम् । शिशुः ॥२१ ॥ मातृतमास्विति मातृ–तमासु । अन्तः ।[7] क्षत्रस्य । उल्वम् ।

सहैकस्मिन् पात्रे मादयन्त इति सधमादः । मद तृप्तियोगे, चौरादिकः, क्विपि णिलोपः, 'सधमाधस्थयोश्छन्दसि' इति सधादेशः । द्युम्निनीर्धनवतीः दीप्तिमतीर्वा । ऊर्जः ऊर्जयित्रीः । ऊर्जयतेः कर्तरि क्विप् । बलहेतुभूताः । अनिभृष्टाः अक्लिष्टाः अपस्युवः अपांसि कर्माणीच्छन्तीः । छान्दस उवङ् । एवम्भूता एता अपः वसानः आच्छादयन् एताभिरात्मानं छादयित्वा पस्त्यासु गृहभूतास्वेतासु सधस्थमेताभिस्सहस्थानं वरुणश्चक्रे करोति । अपामासां शिशुश्शिशुरिव मातृतमासु अतिशयेन जगतो निर्मात्रीषु पस्त्यासु भूतासु अन्तः मध्ये वरुणः सधस्थं करोति यथा मातृणामुदरे शिशुस्सहवासं करोति । ता एवम्महानुभावा अस्याभिषेकाय गृह्णामीति ॥

[7]ताप्यं परिधापयति—क्षत्रस्योल्वमिति ॥ व्याख्यातं वाजपेये* घृताक्तं ताप्यम् ॥

*सं. १-७-९.

क्षत्रस्य योनिरस्याविन्नो अग्निर्गृह-
पतिराविन्न इन्द्रो वृद्धश्रवा आविन्नः
पूषा विश्ववेदा आविन्नौ मित्रावरु-
णावृतावृधावाविन्ने द्यावापृथिवी धृ-
तव्रते आविन्ना देव्यदितिर्विश्वरू-
प्याविन्नोऽयमसावामुष्यायणोऽस्यां

अस्ति। [8]क्षत्रस्य। योनिः। अस्ति। [9]आविन्नः। अग्निः। गृहपतिरिति गृह-पतिः। [10]आविन्नः। इन्द्रः। वृद्धश्रवा इति वृद्ध-श्रवाः। [11]आविन्नः। पूषा। विश्ववेदा इति विश्व-वेदाः। [12]आविन्नौ। मित्रावरुणाविति मित्रा-वरुणौ। ऋतावृधावित्यृत-वृधौ। [13]आविन्ने इति। द्यावापृथिवी इति द्यावा-पृथिवी। धृतव्रते इति धृत-व्रते। [14]आविन्ना। देवी। अदितिः। विश्वरूपीति विश्व-रूपी। [15]आविन्नः। अयम्। असौ। आमुष्यायणः।

---

[8]पाण्डुरं वासः परिधत्ते—क्षत्रस्य योनिरसीति ॥ क्षत्रस्य बलस्य राजन्यस्य वा योनिः कारणमसीति। अस्मिन् कर्मणि (यद्वा) स जातो भवतीति हि स्तुतिः ॥

[9-15]आविन्नो यजमानं वाचयन् बर्हिरुदानयति—आविन्नो अग्निरित्यादि ॥ अग्निरिदानीमनेन मुख्येन कर्मणा गृहपतिराविन्नः

विश्यस्मिन्राष्ट्रे महते क्षत्राय महत आधिपत्याय महते जानराज्यायै

अस्याम् । विशि । अस्मिन् । राष्ट्रे । महते । क्षत्राय । महते । आधिपत्यायेत्याधि–पत्याय । महते ।

लब्धात्मा, परिनिष्पन्नात्मा वा । विन्दतेर्विद्यतेर्वा निष्ठा । अग्नेर्गृहपतित्वमिदानीं परिनिष्पन्नमिति । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्, कर्तरि निष्ठायां तु व्यत्ययेन । इन्द्रश्चेदानीं वृद्धश्रवाः प्रवृद्धकीर्तिः आविन्नः । पूषा चेदानीं विश्ववेदाः विश्वस्य वेदिता आविन्नः । 'गतिकारकयोरपि' इत्यसुन् । विश्वधनो वा । मित्रावरुणौ चेदानीमृतावृधौ ऋतस्य यज्ञस्य सत्यस्य वा वर्धयितारौ आविन्नौ । 'अन्येषामपि दृश्यते' इति दीर्घत्वम् । 'देवताद्वन्द्वे च' इति मित्रावरुणशब्दे पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् । द्यावापृथिवी द्यावापृथिव्यौ च धृतव्रते धृतकर्मणावाविन्ने । 'दिवो द्यावा' इति द्यावादेशः, पूर्ववत्प्रकृतिस्वरत्वम् । अदितिर्देवमाता पृथिवी वा । देवी दीप्तिमती । इदानीं विश्वरूपैस्सर्वैर्विकाररूपैस्तद्वती आविन्ना । गौरादित्वात् ङीप् । तथाऽयं च यजमानः असौ नरसिंहवर्मा आमुष्यायणः राजेन्द्रवर्मणोपत्यमिति युवप्रत्ययान्तं पितुर्नाम गृह्यते; राजेन्द्रायण इति यथा । अमुष्यशब्दान्नडादित्वात्फक् । अस्यां विशि । जातावेकवचनम् । कुटुम्बभूतासु प्रजासु अस्मिन्राष्ट्रे सर्वजनपदे आ विन्नः । महते क्षत्रायेति व्याख्यातम्* ॥

*सं. १-८-१०.

प वो भरता राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजेन्द्रस्य ॥२२॥ वज्रोऽसि वार्त्रघ्नस्त्वयायं वृत्रं वध्याच्छत्रुबाधनास्स्थ पात मा प्रत्यञ्चं पात

जानराज्यायेति जान–राज्याय । [16]एषः । वः । भरताः । राजा । [17]सोमः । अस्माकम् । ब्राह्मणानाम् । राजा । [18]इन्द्रस्य ॥ २२ ॥ वज्रः । असि । वार्त्रघ्न इति वार्त्र–घ्नः । त्वया । अयम् । वृत्रम् । वध्यात् । [19]शत्रुबाधना इति शत्रु–बाधनाः । स्थ । [20]पात । मा । प्रत्यञ्चम् । पात । मा । तिर्यञ्चम् ।

---

[16]यजमानायतने तिष्ठन्तं प्राह—एष व इति ॥ व्याख्यातमेव* ॥

[17]सोमोऽस्माकमिति ॥ ब्राह्मणश्च जपो व्याख्यातः* ॥

[18]यजमानाय धनुः प्रयच्छति—इन्द्रस्येति ॥ व्याख्यातं वाजपेये† ॥

[19]इषून् प्रयच्छति—शत्रुबाधनास्स्थेति ॥ शत्रवो बाध्यन्ते यैस्तादृशास्स्थेति ॥

[20]प्रतिगृह्णाति—पात मेति ॥ हे इषवः मा पात रक्षत प्रत्यञ्चं प्रत्यग्गमनं युष्माकमभिमुखमागच्छन्तं शत्रोर्वा । तथा पात मा तिर्यञ्चं

*सं. १-८-१०. †सं. १-७-७.

मा॒ ति॒र्यञ्च॒म॒न्वञ्चं॒ मा पा॑त दि॒ग्भ्यो मा॒
पा॑त॒ विश्वा॑भ्यो मा ना॒ष्ट्राभ्यः॑ पात॒
हिर॑ण्यवर्णा॒वु॒षसा॒ं वि॒रो॒केऽयः॑स्थू-
णा॒वुदि॑तौ॒ सूर्य॒स्या रो॑हतं॒ वरुण

अ॒न्वञ्च॑म् । मा॒ । पा॒त॒ । दि॒ग्भ्य इति॑ दिक्-भ्यः॑ ।
मा॒ । पा॒त॒ । विश्वा॑भ्यः । मा॒ । ना॒ष्ट्राभ्यः॑ । पा॒त॒ ।
[21]हिर॑ण्यवर्णा॒विति॒ हिर॑ण्य-व॒र्णौ॒ । उ॒षसा॒म् ।
वि॒रो॒क इति॑ वि-रो॒के । अयः॑स्थूणा॒वित्ययः॑-स्थू॒-
णौ॒ । उदि॑ता॒वित्यु॒त्-इ॒तौ॒ । सूर्य॑स्य । एति॑ ।

तिरश्चीनगमनं पार्श्वयोश्चरन्तम् । तथा पात मान्वञ्चं अन्वगमनं पृष्ठतो गच्छन्तम् । ऋत्विगादिना क्विन् । किं बहुना; दिग्भ्यस्सर्वाभ्यो मा पात सर्वासु दिक्षु स्थितं, सर्वदिगवस्थितशत्रुपीडाभ्यो वा । अपि च—विश्वाभ्योपि भौमान्तरिक्षद्युभवाभ्योपि नाष्ट्राभ्यः नाशहेतुभ्यः पात माम् । नशेरौणादिकस्त्रप्रत्ययः, वृद्धिश्च ॥

[21]बाहू उद्गृह्णाति—हिरण्यवर्णाविति त्रिष्टुभा ॥ हे हिरण्यवर्णौ हिरण्मयाभरणसन्नद्धौ हिरण्यवदुज्ज्वलवर्णौ वा । हे ईदृशौ बाहू । अयस्स्थूणौ वा । अयस्स्थूणसदृशौ अप्रधृष्यौ । 'इवे प्रतिकृतौ' इति कनो 'देवपथादिभ्यश्च' इति लुप्, 'स्फिगन्तस्योपमेयनामधेयस्य' इत्याद्युदात्तत्वम् । अतश्च बाहू एकैकेनामन्त्र्येते—हे वरुण शत्रूणां वारक हे मित्र तेषां प्रमापक अस्माकं वा हिंसापरित्रायक ईदृशौ युवां गर्तं एतं रथस्थं आकाशोदरं वा

मित्र गर्तं ततंश्चक्षाथामदितिं दितिं
च ॥ २३ ॥
समिधमा तिष्ठ गायत्री त्वा छन्दं-
रोहतम् । वरुण । मित्र । गर्तम् । ततः । चक्षा-
थाम् । अदितिम् । दितिम् । च ॥ २३ ॥
शिशुरिन्द्रस्यैकचत्वारिꣳशच्च ॥ १२ ॥
'समिधमिति सं–इधम् । एतिं । तिष्ठ । गाय-

---

आरोहतं उपसां विरोके व्युष्टौ । पूजनार्थमेकस्मिन् बहुवचनम् । उपसो व्युष्टिकाले । एतस्या लक्षणमाह—सूर्यस्येति । उदितावुदये । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । तत आरोहणानन्तरं चक्षाथां पश्यतं अदितिमखण्डितं स्वजनं दितिं च खण्डितं शत्रुजनं च तदुचितेन चक्षुषा सानुग्रहेण सनिग्रहेण च स्वीकुरुतमित्यर्थः । यद्वा—अखण्डनं खण्डनं च स्वेषां परेषां च पश्यतमुत्पादयतम् ॥

इत्यष्टमे द्वादशोनुवाकः.

---

'अथ यजमानमध्वर्युर्दिशो व्यास्थापयति, मध्ये पश्चिमेन समिधमातिष्ठति पञ्चभिः । तत्र प्राचीं—समिधमिति ॥ समिध्यतेऽस्यामादित्य इति समित् प्राचीदिक् उपर्युपरि समिद्धा भवतीति । तामातिष्ठाधितिष्ठ स्वीकुरु । गायत्री चतुर्विंशत्यक्षरा छन्दसामध्ये प्राच्यां दिशि स्थिता त्वामवतु । त्रिवृदाख्यस्तोमश्च त्वामवत्विलेव । स्तोमानामध्य इति गम्यते । त्रयोनवयवास्तिस्रो वृत्तयो

सामवतु त्रिवृथ्स्तोमो रथन्तर१ सामाग्निर्देवता ब्रह्म द्रविणमुग्रामा तिष्ठ त्रिष्टुप्त्वा छन्दसामवतु पञ्चदशस्तोमो बृहत्सामेन्द्रो देवता क्षत्रं द्रविणं विराजमा तिष्ठ जगती त्वा

त्री । त्वा । छन्दसाम् । अवतु । त्रिवृदिति त्रि-वृत् । स्तोमः । रथन्तरमिति रथं-तरम् । साम । अग्निः । देवता । ब्रह्म । द्रविणम् । [2]उग्राम् । एति । तिष्ठ । त्रिष्टुप् । त्वा । छन्दसाम् । अवतु । पञ्चदश इति पञ्च-दशः । स्तोमः । बृहत् । साम । इन्द्रः । देवता । क्षत्रम् । द्रविणम् । [3]विराजमिति

यस्य स त्रिवृत् नवस्तोत्रीयः । 'त्रिचक्रादीनां छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । रथन्तरं च साम त्वामवतु साम्नाम्मध्ये । 'संज्ञायां भृतृवृजि' इत्यादिना खच् । अग्निर्देवता त्वामवतु देवतानां मध्ये । ब्रह्म ब्राह्मणः द्रविणं प्रशस्तं धनं त्वामवतु द्रविणानां मध्ये ॥

[2]दक्षिणां—उग्रामिति ॥ उग्रां पितृसम्बन्धाद्दक्षिणामातिष्ठ । त्रिष्टुप् चतुश्चत्वारिंशदक्षरा । पञ्चदशस्तोमः पञ्चदशस्तोत्रीयः परिमाणमस्य 'स्तोमे डविधिः पञ्चदशाद्यर्थे' इति डः । बृहत्साम इन्द्रश्च क्षत्रं क्षत्रियाः । गतमन्यत् ॥

[3]प्रतीचीं—विराजमिति ॥ जगती विराट् उपर्युपरि शान्ता

छन्दसामवतु सप्तदशस्स्तोमो वैरू-
पꣳ साम मरुतो देवता विड्ड्रविण-
मुदीचीमा तिष्ठानुष्टुप्त्वा ॥ २४ ॥
छन्दसामवत्वेकविꣳशस्स्तोमो वै-
राजꣳ साम मित्रावरुणौ देवता व-

वि–राजम् । एति । तिष्ठ । जगती । त्वा । छन्दसाम् । अवतु । सप्तदश इति सप्त–दशः । स्तोमः । वैरूपम् । साम । मरुतः । देवता । विट् । द्रविणम् । [1]उदीचीम् । एति । तिष्ठ । अनुष्टुबित्यनु–स्तुप् । त्वा ॥ २४ ॥ छन्दसाम् । अवतु । एकविꣳश इत्येक–विꣳशः । स्तोमः । वैराजम् । साम । मित्रावरुणाविति मित्रा–वरुणौ । देवता ।

---

भवतीति । अष्टाचत्वारिंशदक्षरा जगती । सप्तदशस्स्तोमः सप्तदशस्तोत्रीयः । वैरूपाख्यं साम । मरुतो देवता । विट् वैश्याः ॥

[1]उत्तरां—उदीचीमिति ॥ उत्क्रम्याञ्चति भूगोळमित्युदीची ; यत्र गच्छन्नादित्यो न दृश्यते । 'अनिगन्तोञ्चतौ' इति प्रकृतिस्वरत्वम् । अनुष्टुब्द्वात्रिंशदक्षरा । एकविंशः एकविंशतिस्तोत्रीयः । वैराजाख्यं साम । मित्रावरुणौ देवता । समुदायस्य देवतात्वादेकवचनं, देवतात्वमात्रस्य विवक्षितत्वात् ; श्रुतयः प्रमाणमिति यथा । 'देवताद्वन्द्वे च' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् ॥

लं द्रविणमूर्ध्वामा तिष्ठ पङ्क्तिस्त्वा छन्दसामवतु त्रिणवत्रयस्त्रिꣳशौ स्तोमौ शाक्वररैवते सामनी बृहस्पतिर्देवता वर्चो द्रविणमीदृङ्चान्यादृ-

वलम् । द्रविणम् । [5]ऊर्ध्वाम् । एति । तिष्ठ । पङ्क्तिः । त्वा । छन्दसाम् । अवतु । त्रिणवत्रयस्त्रिꣳशाविति त्रिणव-त्रयस्त्रिꣳशौ । स्तोमौ । शाक्वर-रैवते इति शाक्वर-रैवते । सामनी इति । बृहस्पतिः । देवता । वर्चः । द्रविणम् । [6]ईदृङ् । च । [7]अन्यादृङ् । च । [8]एतादृङ् । च । [9]प्रतिदृङिति प्रति-

[5]मध्ये—ऊर्ध्वामिति ॥ पङ्क्तिः पञ्चपदा चत्वारिंशदक्षरा । त्रिणवत्रयस्त्रिंशौ स्तोमौ त्रिणवस्सप्तविंशस्तोत्रीयः त्रयस्त्रिंशस्त्रयस्त्रिंशस्तोत्रीयः । शाक्वरं रैवतं च सामद्वयम् । बृहस्पतिर्देवता । वनस्पत्यादित्वाद्द्वयोर्युगपत्प्रकृतिस्वरत्वम् । वर्चो दीप्तिः । निगदसिद्धमन्यत् ॥

[6—10]अत्र मारुत एकविंशतिकपालोऽस्ति, तत्र मध्यमानि सप्तकपालानि 'शुक्रज्योतिश्च चित्रज्योतिश्च'* इत्यारण्येनानुवाक्येनोपधीयन्ते । अन्यानि चतुर्दश, एताभ्यां गणाभ्यामुपदधाति—ईदृङ्ङित्यादिना ॥

*तै. आ. ४—२४.

ईदृङ् च प्रतिदृङ् च मितश्च सम्मितश्च सभराः । शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योति-

दृङ् । च । [10]मितः । च । [11]सम्मित इति सं–मितः । च । [12]सभरा इति स–भराः । [13]शुक्रज्योतिरिति शुक्र–ज्योतिः । च । [14]चित्रज्योतिरिति चित्र–ज्योतिः । च । [15]सत्यज्योतिरिति सत्य–ज्योतिः । च । [16]ज्योतिष्मान् । च । [17]सत्यः । च ।

---

शुक्रज्योतिश्चेत्यादिना च ॥ एते चतुर्दश मरुद्विशेषाः । तादर्थ्यात्किपालेषु ताच्छब्द्यम् । इदमिव पश्यतीदृङ् । 'त्यदादिषु दृशः' इति क्विन्, 'इदङ्किमोरीश्की' इतीशादेशः, 'दृक्स्ववस्स्वतवसां छन्दसि' इति नुम्, 'क्विन्प्रत्ययस्य कुः' इति कुत्वम् । अन्य इव पश्यति अन्यादृङ् । 'आ सर्वनाम्नः' इत्यात्वम् । एष इव पश्यति एतादृङ् । परत्र सन्निहितमेतच्छब्द आह, आत्मनि सन्निहितमिदंशब्दः । प्रतिकूलं पश्यतीति प्रतिदृङ् । छान्दसः क्विन् । मितः निभृतः । सम्मितः संहतरूपः । 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् । सह बिभर्तीति सभराः । छान्दसोऽसुन् । भरसा सह वर्तत इति वा सभराः, भरो वेगः । शुक्रज्योतिः येन ज्योतींषि शुक्राणि क्रियन्ते । चित्राणि पूजनीयानि ज्योतींषि येन क्रियन्ते स चित्रज्योतिः । सत्सु साधूनि सत्यानि ज्योतींषि येन स सत्यज्योतिः । ज्योतिष्मान् ब्रह्मज्यो-

ष्मा॑ऽश्च स॒त्यश्च॑र्त॒पाश्च॑ ॥ २५ ॥
अत्य॑ꣳहाः । अ॒ग्नये॒ स्वाहा॒ सोमा॑-
य॒ स्वाहा॑ सवि॒त्रे स्वाहा॒ सर॑स्व-
त्यै॒ स्वाहा॑ पू॒ष्णे स्वाहा॒ बृह॒स्पत॑-
ये॒ स्वाहेन्द्रा॑य॒ स्वाहा॒ घोषा॑य॒ स्वा-
हा॒ श्लोका॑य॒ स्वाहाꣳशा॑य॒ स्वाहा॒
भगा॑य॒ स्वाहा॒ क्षेत्र॑स्य॒ पत॑ये॒ स्वा-

[18]ऋ॒त॒पा इत्यृ॑त-पाः । च॒ ॥ २५ ॥ [19]अत्य॑ꣳहा॒ इत्यति॑-अ॒ꣳहाः । [20]अ॒ग्नये॑ । स्वाहा॑ । [21]सोमा॑य । स्वाहा॑ । [22]स॒वि॒त्रे । स्वाहा॑ । [23]सर॑स्वत्यै । स्वाहा॑ । [24]पू॒ष्णे । स्वाहा॑ । [25]बृ॒ह॒स्पत॑ये । स्वाहा॑ । [26]इन्द्रा॑य । स्वाहा॑ । [27]घोषा॑य । स्वाहा॑ । [28]श्लोका॑य । स्वाहा॑ । [29]अꣳशा॑य । स्वाहा॑ । [30]भगा॑य । स्वाहा॑ [31]क्षेत्र॑स्य । पत॑ये । स्वाहा॑ । [32]पृ॒थि॒व्यै । स्वाहा॑ ।

तिः । सत्यस्सति साधुः । छान्दसमन्तोदात्तत्वम् । ऋतस्य यज्ञस्य पाता रक्षकः ऋतपाः । अत्यंहाः अंहोतिक्रान्तवान् अत्यर्थं वा गच्छतीत्यत्यंहाः । 'गतिकारकयोरपि' इत्यंहेरसुन् ।

[20–25]पञ्चार्थिवानि वारुणानि पुरस्तादभिषेकस्य जुहोति—अग्नये स्वाहेत्यादीनि बृहस्पत्यन्तानि ॥

[26–31]षड्पपरिष्टात्—इन्द्राय स्वाहेत्यादीनि क्षेत्रस्य पतये स्वाहेत्यन्तानि । सर्वाणि निगदसिद्धानि ॥

हां पृथिव्यै स्वाहान्तरिक्षाय स्वाहां दिवे स्वाहा सूर्याय स्वाहां चन्द्रमसे स्वाहा नक्षत्रेभ्यस्स्वाहाद्भ्यस्स्वाहौषधीभ्यस्स्वाहा वनस्पतिभ्यस्स्वाहां चराचरेभ्यस्स्वाहां परिप्लवेभ्यस्स्वाहां सरीसृपेभ्यस्स्वाहां ॥ २६ ॥

[33]अन्तरिक्षाय । स्वाहां । [34]दिवे । स्वाहां । [35]सूर्याय । स्वाहां । [36]चन्द्रमसे । स्वाहां । [37]नक्षत्रेभ्यः । स्वाहां । [38]अद्भ्य इत्यत्–भ्यः । स्वाहां । [39]ओषधीभ्य इत्योषधि–भ्यः । स्वाहां । [40]वनस्पतिभ्य इति–वनस्पति–भ्यः । स्वाहां । [41]चराचरेभ्यः । स्वाहां । [42]परिप्लवेभ्य इति परि–प्लवेभ्यः । स्वाहां । [43]सरीसृपेभ्यः । स्वाहां ॥ २६ ॥

अनुष्टुप्र्तपार्श्वं सरीसृपेभ्यस्स्वाहां ॥ १३ ॥

---

[33–37]पञ्चपुरस्ताद्भूतानामवेष्टीर्जुहोति—पृथिव्यै स्वाहेत्याद्यानि नक्षत्रेभ्यस्स्वाहेत्यन्तानि ॥ पृथिव्यादिभ्यः मृत्युरवेष्टो भवति विनाशितो भवति ॥

[33–41]षडुपरिष्टादङ्गचरस्वाहेत्याद्याः सरीसृपेभ्यस्स्वाहेत्यन्ताः । सर्वा

सोमस्य त्विषिरसि तवेव मे त्वि-
षिर्भूयादमृतमसि मृत्योर्मा पाहि

[1]सोमस्य । त्विषिः । असि । तव । इव । मे ।
त्विषिः । भूयात् । अमृतम् । असि । मृत्योः ।

निगदसिद्धाः । चरणशीलाश्चराचराः । चरेर्यङ्लुगन्तात्पचाद्यचि अभ्यासस्याडागमः । परितः प्लवनशीलाः परिप्लवाः । स एवाच् । सर्पणशीलाससरीसृपाः । सृपेर्यङ्लुगन्तात्पचाद्यचि अभ्यासस्य रीगागमः, 'न धातुलोप आर्धधातुके' इति गुणाभावः ॥

इत्यष्टमे त्रयोदशोनुवाकः.

---

[1]यजमानायतने शार्दूलचर्मोपस्तृणाति—सोमस्य त्विषिरसीति ॥ सोमस्य या त्विषिर्दीप्तिः सैव त्वमसि दीप्तत्वात् व्यापित्वाच्छान्तत्वाच्च । तवेव मे ममापि त्विषिर्भूयात् दीप्ता व्यापिनी शान्ता चेत्याशास्ते ॥

[2]चर्मणोधस्ताद्रजतमुपास्यति—अमृतमिति ॥ अमृतममरणहेतुरसीति । मृत्योर्मा पाहि । 'मृत्योर्वा एष वर्णः । यच्छार्दूलः'* इति शार्दूलचर्मणोधस्तादन्तर्धानकरणेन मृत्योरन्तर्धानकरणमाशास्ते ॥

*ब्रा. १-७-८.

दि॒द्योन्मा॑ पा॒ह्यवे॑ष्टा दन्द॒शूका॒ नि-
र॑स्तं॒ नमु॑चे॒श्शिरः॑ । सोमो॒ राजा॒

मा॒ । पा॒हि॒ । [3]दि॒द्योत् । मा॒ । पा॒हि॒ । [4]अवे॑ष्टा॒ इत्यव॑-इ॒ष्टाः । द॒न्द॒शूकाः॑ । [5]निर॑स्त॒मिति॒ निः-अ॒स्त॒म् । नमु॑चेः । शिरः॑ । [6]सोमः॑ । राजा॑ ।

---

[3]उपरिष्टात्सुवर्णमधिनिदधाति—दिद्योदिति ॥ दिद्युत् आयुधमुच्यते । द्युतेः क्विपि द्विर्वचनं, 'द्युतिस्वाप्योस्सम्प्रसारणम्' अत्रापि भवति । ततो मां पाहि । 'सुपां सुलुक्' इति पञ्चम्या लुक्, वर्णव्यत्ययेन उकारस्योकारः । यद्वा—द्युतेर्विचि द्विर्वचने गुणे दिद्योदिति । शब्दान्तरं दितेर्दिद्युत् अवखण्डनकृदिति केचित् । सुवर्णविशेषणं वा । हे सुवर्ण दिद्योत् द्योतमान मा पाहीति ॥

[4]क्लीबं सीसेन विध्यति—अवेष्टा इति ॥ अवेष्टाः विनाशिताः । अवपूर्वो यजिर्विनाशने । दन्दशूकाः दशनशीलास्सर्पादयः । 'यजजपदशां यङः' इत्यूकप्रत्ययः ॥

[5]लोहितायसं पादेन निरस्यति—निरस्तमिति गायत्र्यैकपदया ॥ निरस्तं निष्कृष्यास्तं नमुचेश्शिरः न मुञ्चति पुरुषमिति नमुचिः अधर्मः । न मुञ्चत्यधर्ममिति वा नमुचिरसुरः बाधकः, तस्य शिरो निरस्तमनेन लोहितायसेन ॥

[6]अभिषेकानवेक्षते—सोम इति पङ्क्त्या त्रिष्टुभा ॥ सोमो राजा वरुणश्च देवाश्चान्ये ये धर्मसुवः धर्मस्यानुज्ञातार उत्पादयितारो

वरुणो देवा धर्मसुवश्च ये । ते ते वाचः सुवन्तां ते ते प्राणः सुवन्तां ते ते चक्षुस्सुवन्तां ते ते श्रोत्रः सुवन्ताः सोमस्य त्वा द्युम्नेनाभिषिञ्चाम्यग्नेः ॥ २७ ॥ तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेण मित्रावरु-

वरुणः । देवाः । धर्मसुव इति धर्म-सुवः । च । ये । ते । ते । वाचम् । सुवन्ताम् । ते । ते । प्राणमिति प्र-अनम् । सुवन्ताम् । ते । ते । चक्षुः । सुवन्ताम् । ते । ते । श्रोत्रम् । सुवन्ताम् । [7]सोमस्य । त्वा । द्युम्नेन । अभीति । सिञ्चामि । अग्नेः ॥ २७ ॥ तेजसा । सूर्यस्य । वर्चसा । इन्द्रस्य । इन्द्रियेण । मित्रावरुणयोरिति मित्रा-वरुणयोः । वीर्येण । मरुताम् । ओजसा । क्षत्रा-

---

वा । तेते वाचं सुवन्तां प्रेरयन्तु । तेते प्राणं सुवन्तामित्यादि स्पष्टम् ॥

[7]अध्वर्युरभिषिञ्चति—सोमस्येति ॥ सोमस्य द्युम्नेन दीप्त्या सह यशसा वा त्वामभिषिञ्चामि अस्योपरि क्षारयामि त्वाम् । अग्नेस्तेजसाभिषिञ्चामि त्वामित्येव । एवं मरुतामोजसेत्यादि निगदसिद्धम् । क्षत्राणां बलानां सर्वेषामपि क्षत्रपतिरसि त्वं, न पुन-

णयोर्वीर्येण मरुतामोजसा क्षत्राणां
क्षत्रपतिरस्यति दिवस्पाहि समाव-
वृत्रन्नधरागुदीचीरहिं बुध्नियमनु स-
ञ्चरन्तीस्ताः पर्वतस्य वृषभस्य पृष्ठे

णाम् । क्षत्रपतिरिति क्षत्र–पतिः । असि । अतीति । दिवः । पाहि । [8]समावंवृत्रन्निति सं–आवंवृत्रन् । अधराक् । उदींचीः । अहिम् । बुध्नियम् । अन्विति । सञ्चरन्तीरिति सं–चरन्तीः । ताः । पर्वतस्य । वृषभस्य । पृष्ठे । नावः । चरन्ति ।

---

रेकस्य पतित्वादित्यसमासेन प्रतिपाद्यते; 'गवामसि गोपतिः'* इति यथा । स त्वं दिवः द्युमतस्सर्वान्सोमादीन् द्युलोकवासिनो वा सोमादीनतिक्रम्य एनं यजमानं पाहि । यद्वा—यजमान एवोच्यते, हे यजमान त्वामभिषिञ्चामीति । क्षत्राणां क्षत्रपतिरसि त्वं दीप्तिमतोतिक्रम्य लोकान् पाहि, दिवो वा उपरि पाहि । 'पातौ च बहुलम्' इति सत्वम् । कस्कादिर्वा द्रष्टव्यः ॥

[8]ऊर्ध्वं धारासमुन्मार्ष्टि—समाववृत्रन्निति त्रिष्टुभा ॥ एकीभूत्वा समन्ताद्वर्तन्ताम् । अधराक् अधस्तात् गताः । उदीचीः ऊर्ध्वगाः उपलक्षणं नैतत्; सर्वं देहं व्याप्य वर्तन्तामनेनोन्मार्जनेन । वृतेर्लुङि व्यत्ययेन च्लेश्शङ्, 'द्युद्भ्यो लुङि' इति परस्मैपदं, 'बहुलं छन्दसि' इति रुट् । अहिं स्थिराणि स्थानानि बुध्नियं

---

* तै. ब्रा-२-८-२.

नावंश्चरन्ति स्वसिचं इयानाः ।
रुद्र यत्ते क्रयी परं नाम तस्मै हु-

स्वसिच इति स्व-सिचः । इयानाः । रुद्र । यत् । ते । क्रयि । परम् । नाम । तस्मै । हुतम् । असि ।

---

सुषिराणि चानुसञ्चरन्तीरनुक्रमेण सञ्चरन्त्यः । अहिं बुध्नियं वानुप्राप्य सञ्चरन्तीस्ताः । पर्वतस्य पर्ववतः । 'पर्वमरुद्भ्यस्तः' इति मत्वर्थीयस्तः । वृषभस्य प्रधानस्य वर्षितुर्वा यजमानस्य पृष्ठे देहस्योपरि नावः नाव्या इवापश्चरन्ति प्रभूताः प्रवर्तन्ते स्वसिचः स्वयमेव सर्वमङ्गं सिञ्चन्त्यः इयानाः सर्वमङ्गं व्याप्नुवन्त्यः । लिटः कानजादेशः । यद्वा—समाववृत्रन् संहत्य समन्तात् वर्तन्ताम् । अधरादुपरिष्टाच्च सर्वास्वपि दिक्षु अहिं मेघं बुध्नियमन्तरिक्षं चानुसञ्चरन्त्यः मेघमनुप्राप्यान्तरिक्षे वर्तमानाः । वर्षकाले पर्वतस्य पर्ववतो वृषभस्य वर्षितुर्मेघस्य पृष्ठे नाव्या आप इव प्रभूतास्सञ्चरन्ति ओषधिनिष्पत्तये । स्वसिचस्स्वयमेव विश्वं सिञ्चन्त्यः इयाना दिगन्तं व्याप्नुवन्त्यः इति । नौभिः कार्याभिः कारणभूताः आपो लक्ष्यन्ते ॥

[7]आग्नीध्रे प्रत्येकं जुहोति—रुद्र यत्त इति ॥ हे रुद्र यत्ते तव रुद्रेत्यादिकं नामधेयं परमुत्कृष्टं क्रयि क्रीणात्यात्मसात्करोति विश्वमिति क्रयि । छान्दस इप्रत्ययः, छान्दसं सांहितिकं दीर्घत्वम् । करोत्यर्थे वा क्रीणातिः । अन्य आह—करोतेः कर्मणि छान्दसः क्तेन्प्रत्ययः । क्रे इति कर्मनाम; सप्तम्येकवचने अयादेशः, 'सावेकाचः' इति व्यत्ययेन न प्रवर्तते । क्रयि कर्मणि-

तमसि यमेष्टमसि । प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्त-

यमेष्टमिति यम-इष्टम् । असि । [10]प्रजापत इति प्रजा-पते । न । त्वत् । एतानि । अन्यः । विश्वा । जातानि । परीति । ता । बभूव । यत्कामा इति यत्-कामाः । ते । जुहुमः । तत् । नः ।

---

कर्मणि यदुपादीयते शिवो रुद्रः त्र्यम्बकः कृत्तिवासा विरूपाक्ष इत्यादि तत्र नाम परं प्रशस्तं तस्मै इदं हुतं तदिदमिति त्वमेवासि । यमेष्टं यद्यमेनापीष्टं पूजितं तच्छ्रुत्वा मृत्युरपि बिभेति, तेन च मनसा तत्पूजितमिति भावः । तदिदं त्वमेवासि । यजतेर्निष्ठा, 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । तस्मात्तव नाम्ने इदमुदकाख्यं हविर्जुहोमीति शेषः । यद्वा—लिङर्थे आशिषि लोट्, पुरुषव्यत्ययः । तस्मादिदं हुतमसि हुतं भूयादित्यर्थः यमेष्टं चास्त्विति ॥

[10]युवराजस्य प्रतिहितस्य गृहे जुहोति—प्रजापत इति त्रिष्टुभा ॥ हे प्रजापते त्वत्तोन्यः कश्चिदपि तान्येतानि विश्वा विश्वानि जातानि जन्मवन्ति वस्तूनि परिबभूव परिभवति वाप्नोति परिगृह्णाति वा । यद्वा—त्वदेतानि त्वत्तो जातानि विश्वानि वस्तूनि कश्चिदन्यः परिबभूव न त्वमेव परिभवसि, तस्मादेवं तावन्महानुभावस्त्वम् । न च मया किञ्चिदज्ञातमस्ति; अतो यत्कामा

न्नो अस्तु वयꣳ स्याम पतयो रयी-
णाम् ॥ २८ ॥
इन्द्रस्य वज्रोसि वार्त्रघ्नस्त्वयाऽयं वृ-
त्रं वध्यान्मित्रावरुणयोस्त्वा प्रशा-

अस्तु । वयम् । स्याम । पतयः । रयीणाम् ॥२८॥
अग्नेस्तैकादश च ॥ १४ ॥

[1]इन्द्रस्य । वज्रः । असि । वार्त्रघ्न इति वार्त्र-
घ्नः । त्वया । अयम् । वृत्रम् । वध्यात् । [2]मित्रा-
वरुणयोरिति मित्रा-वरुणयोः । त्वा । प्रशास्त्रो-

यत्फलं कामयमानाः ते जुहुमस्तन्नोस्माकमस्तु त्वत्प्रसादात् स कामोस्माकं सम्पद्यताम् । 'शीलिकामिभिक्षाचरिभ्यः' इति णः, पूर्वपदप्रकृतिस्वरत्वं च । इदं तु विशेषेणेत्याह—वयं रयीणां धनानां पतयः सर्वदा स्यामेत्याशास्ते ॥

इत्यष्टमे चतुर्दशोनुवाकः.

---

[1]रथमुपावहरति—इन्द्रस्येति ॥ व्याख्यातम्* । यो वृत्रं हतवान् तस्येन्द्रस्य वज्रो वृत्रवधसाधनभूतो रथमसि, तस्मात्तादृशेन त्वयाऽयं यजमानो वृत्रं वध्यादिति ॥

[2]प्रष्टिवाहिनं रथं युनक्ति—मित्रावरुणयोरिति ॥ मित्रावरु-

*सं. १-८-१२.

स्त्रोः प्रशिषा युनज्मि यज्ञस्य योगेन विष्णोः क्रमोसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसि मरुतां प्रसवे जेषमाप्तं मनस्समह-

रिति प्र—शास्त्रोः । प्रशिषेति प्र—शिषा । युनज्मि । यज्ञस्य । योगेन । [3]विष्णोः । क्रमः । असि । [4]विष्णोः । क्रान्तम् । असि । [5]विष्णोः । विक्रान्तमिति वि—क्रान्तम् । असि । [6]मरुताम् । प्रसव इति प्र—सवे । जेषम् । [7]आप्तम् । मनः ।

णयोः प्रशास्त्रोः । औणादिकस्तृच्, तृच इडभावः । प्रशिषा प्रकृष्टेन शासनेनाज्ञया त्वां युनज्मि । 'शास इदङ्हलोः' इतीत्वं, 'शासिवसिघसीनाम्' इति षत्वम् । यज्ञस्य योगेन हेतुना यज्ञो यथा युज्येतेति ॥

[3–5]रथमभिप्रैति—विष्णोरित्यादि ॥ व्याख्यातम् ॥*

[6]रथमातिष्ठति—मरुतामिति ॥ मरुतां प्रसवे अनुज्ञायां सत्यां मरुद्भिरेवाहं जेषं जीयासं शत्रून् । जयतेर्लेटि 'सिब्बहुळं लेटि' इत्यडागमः, इतश्च लोपः ॥

[7]कूबरमभिमन्त्रयते—आप्तमिति ॥ आप्तं सुहृद्भूतं यन्मनस्तदेव त्वमसि । यद्वा—यन्मनसेप्सितं तन्मन उच्यते । मननीयं वा मनः । तत्सर्वं मया आप्तं लब्धमेनेन कर्मणा । किञ्च—अह-

*सं. १-७-७-२.

मिन्द्रियेणं वीर्येण पशूनां मन्युरं-
सि तवेव मे मन्युर्भूयान्नमो मात्रे
पृथिव्यै माहं मातरं पृथिवीꣳ हि-
ꣳसिषं मा ॥ २९ ॥ मां माता

सामिति । अहम् । इन्द्रियेणं । वीर्येण । [8]पशू-
नाम् । मन्युः । असि । तवं । इव । मे । मन्युः ।
भूयात् । [9]नमः । मात्रे । पृथिव्यै । [10]मा । अहम् ।
मातरम् । पृथिवीम् । हिꣳसिषम् । मा ॥ २९ ॥

---

मिन्द्रियेण चक्षुरादिना वीर्येण च प्रजननसामर्थ्येनैश्वर्येण वा सङ्गतोस्मि । योग्यं क्रियापदमध्याह्रियते । 'इन्द्रियमिन्द्रलिङ्गम्' इति निपात्यते ॥

[8]वाराहीं उपानहावुपमुञ्चते—पशूनां मन्युरसीति ॥ पशूनां मन्युर्दीप्तिरसि क्रोधजन्मा गृह्यते । प्रकृतिशब्देन विकार उच्यते 'पशूनां वा एष मन्युः । यद्वराहः'* इति च ब्राह्मणम् । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् । तवेव ममापि मन्युर्भूयात् दीप्तिमान् स्याम् ॥

[9]इमामभिमृशति—नम इति ॥ मात्रे सर्वस्योत्पादयित्र्यै पृथिव्यै नमः । 'उभयत्राप्युदात्तयणः' इति चतुर्थ्या उदात्तत्वम् ॥

[10]तस्य दक्षिणं पादमुपावहरति—मातरं पृथिवीं अहं मा हिंसिषं अनेन पादक्रमेण । न हि कश्चिन्मातरं हिनस्ति । ए-

*ब्रा. १-७-९.

पृथिवी हिꣳसीदियदस्यायुरस्यायुर्मे
धेह्यूर्गस्यूर्जं मे धेहि युङ्ङसि वर्चो-
सि वर्चो मयि धेह्यग्नये गृहपतये

माम् । माता । पृथिवी । हिꣳसीत् । [11]इयत् ।
असि । आयुः । असि । आयुः । मे । धेहि । [12]ऊर्क् ।
असि । ऊर्जम् । मे । धेहि । [13]युङ् । असि ।
वर्चः । असि । वर्चः । मयि । धेहि । [14]अग्नये ।

---

थिवी च माता मा हिंसीत् । न हि कं चिदपि माता हिनस्ति ॥

[11]सव्येंसे राजतं मणिं प्रतिमुञ्चते—इयदिति ॥ इदं परिमाणमस्येयत् । 'किमिदम्भ्यां वो घः' इति मतुप्, 'इदङ्किमोरीश्की' 'यस्येति' लोपः, उदात्तनिवृत्तिस्वरेण इकार उदात्तः । इयत्तया परिच्छिन्नमसि ; तस्मादायुरसीति आयुरिवेयत्तया परिच्छिन्नत्वात्, आयुर्हेतुत्वाद्वा ; तस्मात्तादृशस्त्वमायुर्मे धेहि ॥

[12]दक्षिणेंसे औदुम्बरं—ऊर्गसीति ॥ ऊर्गन्नं तदेव त्वमसि तद्धेतुर्वा । तादृशं त्वमूर्जं धेहि ॥

[13]दक्षिण एवांसे सौवर्णं—युङ्ङसीति ॥ योजयतीति युङ्, युक्तो वा । सर्वत्र ऋत्विगादिना क्विन्, 'युजेरसमासे' इति नुम्, 'क्विन्प्रत्ययस्य' इति कुत्वम् । तस्मात्त्वं वर्चो दीप्तिरसि । दीप्त्या हि योग्यतां भजते तत्त्वं वर्चो मे धेहि स्थापय ॥

[14–17]रथविमोचनीयं जुहोति—अग्नय इत्यादि ॥ [illegible] गृहाणां निवासाधाराणां पाने । सोमाय [illegible]

स्वाहा सोमा॑य वन॒स्पत॑ये॒ स्वाहे-
न्द्र॑स्य॒ वला॑य॒ स्वाहा॑ म॒रुता॒मो-
ज॑से॒ स्वाहा॑ ह॒ꣳसश्शु॑चि॒षद्वसु॑र-
न्तरिक्ष॒सद्धोता॑ वेदि॒षदति॑थिर्दुरोण॒-

गृहप॑तय॒ इति॑ गृह-प॒त॒ये॒ । स्वाहा॑ । [15]सोमा॑य । वन॒स्पत॑ये । स्वाहा॑ । [16]इन्द्र॑स्य । वला॑य । स्वाहा॑ । [17]म॒रुता॑म् । ओज॑से । स्वाहा॑ । [18]ह॒ꣳसः । शु॒चि॒षदिति॑ शुचि-सत् । वसुः॑ । अ॒न्त॒रि॒क्ष॒सदित्य॑न्त-रिक्ष-सत् । होता॑ । वे॒दि॒षदिति॑ वेदि-सत् ।

दारूणां पात्रे । 'इन्द्रस्य वज्रोसि'* इत्युक्तं, तदात्मने मरुतामोजसे वेगाय ॥

[18]रथवाहने रथमादधाति—हंस इत्यतिजगत्या ॥ 'अतिच्छन्दसा दधाति'† इत्यादि ब्राह्मणम् । अध्यात्ममधिदैवमधियज्ञं चाधिकृत्य त्रेधेमं मन्त्रं व्याचक्षते । तत्र प्रकरणानुरूपोर्थविशेषो गृहीतव्यः । अध्यात्मे तावत्—हंसः आत्मा । शुचिषु स्थानेषु सीदतीति शुचिषत् । वासयिता वसुः वरिष्ठो वा । अन्तरिक्षे हृदयाकाशादिषु सीदतीति अन्तरिक्षसत् । होता आह्वाता देवानामादाता वा । वेद्यां यागार्थं सीदतीति वेदिषत् । अतिथिस्सततगतिः, तिथिकृतविशेषरहितो वा । दुःखरक्षणेषु गृहादिषु सीदतीति दुरोणसत् । नृषु प्राणिशरीरेषु तद्भावेन सीदतीति नृषत् । वरेषु

*सं. १-८-१५¹ †ब्रा. १-७-९.

सत् । नृपद्वरसदृतसद्व्योमसदब्जा अतिथिः । दुरोणसदिति दुरोण-सत् । नृपदिति नृ-सत् । वरसदिति वर-सत् । ऋतसदित्यृत-सत् । व्योमसदिति व्योम-सत् । अब्जा इत्यप्-जाः ।

फलेषु भोक्तृत्वेन सीदतीति वरसत् । ऋते यज्ञे सत्ये वा सीदतीति ऋतसत् । विविधे रक्षणे तृप्तौ वा सीदतीति व्योमसत् । अद्भ्यो जातः अब्जाः शरीराभिप्रायं, शुक्राज्जातत्वात् । यथा 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति'* इति । अपां वा यागद्वारेण जनयिता । अन्तर्भावितण्यर्थात् 'जनसनखन' इति विट्, 'विड्वनोः' इत्यात्वम् । गोषु पशुषु अनुग्राहकतया जातः गोजाः । ऋते यज्ञे ऋतार्थं वा जातः प्रादुर्भूतः ऋतजाः । अद्रिजाः पर्वतादिष्वपि प्रादुर्भूतः । ऋतं सत्यरूपं बृहद्ब्रह्म । अथाधिदैवे—हंस आदित्यः । शुचिनि मण्डले सीदतीति शुचिषत् । होता अपामादाता । वेद्यामाराध्यतया सीदतीति वेदिषत् । अतिथिस्सततगतिः । दुरोणेषु गृहेषु मेघादिषु† सीदतीति दुरोणसत् । वराणां दातृत्वेन तेषु सीदतीति वरसत् । अपो जनयतीत्यब्जाः । गोजाः रश्मिसमूहवर्ती । ऋते सत्ये जात ऋतजाः । अद्रिजाः उदयाचलात्प्रादुर्भूतः । समानमन्यत् । अथाधियज्ञे—हंसो रथः हन्ति पृथिवीमिति । शुचौ देवयजने रथवाहने च सीदतीति शुचिषत् । शुचिर्यजमानः सीदत्यस्मिन्निति वा शुचिषत् । होतेव वेद्यां सीदतीति वेदिषत् । अतिथिस्सर्वत्रामतिहतगतिः । नृषत् मनुष्यार्थं शूरार्थं वा सीदतीति नृषु वा

*छा. उ. ५-३-३. †म-कोशे मेघादिषु इति नास्ति

गोजा ऋतजा अद्रिजा ऋतं वृ-
हत् ॥ ३० ॥
मित्रोसि वरुणोसि समहं विश्वै-

गोजा इति गो-जाः । ऋतजा इत्यृत-जाः । अद्रि-
जा इत्यद्रि-जाः । ऋतम् । बृहत् ॥ ३० ॥
हि꣡ꣳसिपं मर्तजास्त्रीणि च ॥ १५ ॥
[1]मित्रः । असि । [2]वरुणः । असि । [3]समिति ।

---

उपकारार्थं सीदतीति नृपत् । ऋतार्थं सत्यार्थं यज्ञार्थं वा सीद-तीति ऋतसत् । अब्जाः उदकाज्जातः । गोजाः गोविकारचर्मा-दिग्रथितत्वात् ततो जात इत्युच्यते । अद्रिभिर्दारुभिरुत्पादितत्वा-त्ततो जात इत्युच्यते अद्रिजाः । गतमन्यत् ॥

इत्यष्टमे पञ्चदशोनुवाकः.

---

[1]वैश्वदेव्यामिक्षायां यजमानो दक्षिणं बाहुमुपावहरते—मित्रोसीति ॥ मित्रो देवस्त्वमसि वैश्वदेवत्वादन्यतररूपत्वेन भेदेन स्तुतिः । यद्वा—हिंसायास्त्रासकस्तुतिस्त्वमसि ॥

[2]सव्यमुपावहरति—वरुणोसीति ॥ वरुणो देवस्त्वमसि । पूर्ववत् स्तुतिः । वारको वा शत्रूणामसि ॥

[3]तामभिमृशति—समहमिति ॥ समित्युपसर्गस्ससाधनां क्रियामाह । संहतोहं विश्वैर्देवैः । यद्वा—विश्वैर्देवैर्युक्तां त्वामहं संस्पृशामि ॥

दे॒वैः क्ष॒त्रस्य॒ नाभि॑रसि क्ष॒त्रस्य॒
योनि॑रसि स्यो॒नामा सी॑द सुप॒दामा
सी॑द॒ मा त्वा॑ हिꣳसी॒न्मा मा॑ हिꣳ-
सी॒न्नि ष॑साद धृ॒तव्र॑तो॒ वरु॑णः प॒स्त्या॑-

अ॒हम् । विश्वैः॑ । दे॒वैः । [4]क्ष॒त्रस्य॑ । नाभिः॑ । अ॒सि॒ । [5]क्ष॒त्रस्य॑ । योनिः॑ । अ॒सि॒ । [6]स्यो॒नाम् । एति॑ । सी॒द॒ । सु॒प॒दामिति॑ सु-सदा॑म् । एति॑ । सी॒द॒ । मा । त्वा॒ । हि॒ꣳसी॒त् । मा । मा॒ । हि॒ꣳसी॒त् । [7]नीति॑ । स॒सा॒द॒ । धृ॒तव्र॑त॒ इति॑ धृ॒त-व्र॒तः॒ । वरु॑णः । प॒स्त्या॑सु । एति॑ । साम्रा॑ज्याये॒ति॒ सा॑म्-रा॒ज्या॒य॒ ।

[4]आसन्दीं मिनोति—क्षत्रस्येति ॥ क्षत्रस्य बलस्य नाभिस्सन्नहनं त्वमसि । 'नहो भश्च' इति इञ्प्रत्ययः ॥

[5]तस्यामधिवासं स्तृणाति—क्षत्रस्य योनिरसीति ॥ योनिः कारणं क्षत्रस्यासि, अतो ह्ययं जायते । 'अधीवासमास्तृणाति सयोनित्वाय'* ॥

[6]तत्रासीनं तमभिमन्त्रयते—स्योनामासीदेति ॥ स्योनां सुखामासीद आस्थायास्व । सुषदां सुखेनासादनीयामासीद । खलि कृदुत्तरपदप्रकृतिस्वरत्वम् । सिवेरौणादिके नप्रत्यये ऊठि गुणे च स्योनेति भवति । मा त्वा हिंसीदियमासन्दी । तां च त्वं मा हिंसीः ॥

[7]अनुमन्त्रयमाणमासन्नमभिमन्त्रयते—निषसादेति गायत्र्या त्रिपदया ॥ 'वरुणः पस्त्यास्वा' इति द्वितीयः पादः । इत्यादि-

*ब्रा. १-७-१०.

स्वा साम्राज्याय सुक्रतुर्ब्रह्मा३न्त्वं॰

सुक्रतुरिति सु-क्रतुः । [8]ब्रह्मा३न् । [9]त्वम् । रा-

पूरणेनाक्षरसङ्ख्या सम्पद्यते । निषसाद निषण्णवान् । धृतव्रतः धृतकर्मा वरुण एव स्वयमिहास्ति । यद्वा—वरुणो वारयिता-रीणां यजमानोयं सिंहासन इवात्र निषसाद धृतव्रतः स्थितव्रतः पस्त्यासु गृहेषु । आकारस्समुच्चये । गृहेषु च निषसाद शत्रूणां सर्वमनेन जितमिदानीम् । (यं) यदा साम्राज्याय शोभन-राज्याय सुक्रतुश्शोभनकर्मा शोभनसङ्कल्पो वाऽयमत्र निषसाद पस्त्यासु च तथैव निषसादेति । यद्वा—आकार उपर्यर्थे । पस्त्या-ग्रहणं चोपलक्षणम् । गृहनगरजनपदादिषु यत्तद्विषयसाम्राज्यं तदर्थं निषसाद शोभनकर्माऽयमिति । 'क्रत्वादयश्च' इत्युत्तरप-दाद्युदात्तत्वम् ॥

[8]अथ ऋत्विक्षु च सर्वतः पर्युपविष्टेषु अध्वर्युं राजाभिमन्त्रयते—ब्रह्मा३न् इति ॥ हे ब्रह्मन् इति । 'दूराद्धूते च' इति वाक्यस्य टेरुदात्तः प्लुतश्च, 'पूर्वत्रासिद्धम्' इति तस्यासिद्धत्वात् 'आमन्त्रितस्य' इति पाष्ठिकमामन्त्रिताद्युदात्तत्वं प्रवर्तते 'अनुदात्तं पदमेकवर्जम्' इति च न प्रवर्तते ॥

[9]अध्वर्युः प्रत्याह—त्वमिति ॥ हे राजन् त्वमेव ब्रह्मासि नाहम् । हेतुमाह—यतस्सविता सर्वस्य प्रेरकः अनुज्ञाता वा त्वमसि त्वदाज्ञया हि सर्वं प्रवर्तते । सत्यसवः सत्यानुज्ञः अमोघशासनः, अतस्त्वमेव ब्रह्मासि ॥

राजन्ब्रह्मासि सविताऽसि सत्यसवो ब्रह्मा३न्त्वꣳ राजन्ब्रह्मासीन्द्रोऽसि सत्यौजाः ॥ ३१ ॥ ब्रह्मा३न्त्वꣳ राजन्ब्रह्मासि मित्रोऽसि सुशेवो ब्रह्मा३न्त्वꣳ राजन्ब्रह्मासि वरुणोऽसि

जन् । ब्रह्मा । असि । सविता । असि । सत्यसव इति सत्य–सवः । [10]ब्रह्मा३न् । [11]त्वम् । राजन् । ब्रह्मा । असि । इन्द्रः । असि । सत्यौजा इति सत्य–ओजाः ॥ ३१ ॥ [12]ब्रह्मा३न् । [13]त्वम् । राजन् । ब्रह्मा । असि । मित्रः । असि । सुशेव इति सु–शेवः । [14]ब्रह्मा३न् । [15]त्वम् । राजन् । ब्रह्मा । असि । वरुणः । असि । सत्य-

[10]अथ ब्रह्माणमामन्त्रयते—ब्रह्मा३न् इति ॥ व्याख्यातम् ॥

[11]ब्रह्मा प्रत्याह—त्वमिति ॥ हे राजन् त्वमेव ब्रह्मासि यतस्त्वमिन्द्रोऽसि सर्वस्येश्वरोऽसि । सत्यौजाः अवितथबलः ॥

[12]होतारमामन्त्रयते—ब्रह्मा३न् इति ॥

[13]स प्रत्याह—त्वमिति ॥ हे राजन् त्वमेव ब्रह्मासि, यतो मित्रोऽसि सर्वस्य हिंसाभ्यस्त्राताऽसि । सुशेवस्सुसुखः । 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् ॥

[14]उद्गातारमामन्त्रयते—ब्रह्मा३न् इति ॥

[15]स प्रत्याह—त्वमिति ॥ हे राजन् त्वमेव ब्रह्मासि, यतस्त्वं

सत्यधर्मेन्द्रस्य वज्रोऽसि वार्त्रघ्नस्तेन मे रध्य दिशोऽभ्ययꣳ राजाऽभूत्सुश्लो-

धर्मेति सत्य-धर्मा । [16]इन्द्रस्य । वज्रः । असि । वार्त्रघ्न इति वार्त्र-घ्नः । तेन । मे । रध्य । [17]दिशः । अभीति । अयम् । राजा । अभूत् । [18]सुश्लोका४

वरुणोसि वारयिता शत्रूणां पापचोरव्याघ्रादीनां वारयितासि । सत्यधर्मा सत्यस्वभावः । 'धर्मादनिच्केवलात्' ॥

[16]ब्रह्मा स्फ्यं राज्ञे प्रयच्छति—इन्द्रस्येति ॥ व्याख्यातम्* । तस्मात्तेन वज्रेण[1] हेतुना मम दस्यून् रध्य नाशय । यद्वा—साधयाभिमतानीति । रध हिंसासिद्ध्योः, दैवादिकः ॥

[17]पश्चाक्षावाज्ञे प्रयछति—दिश इति ॥ अयं राजा सर्वा दिशः अभ्यभूत् अभिभवतु सर्वा दिशोऽधिष्ठाय स्वयमेव राजा भवत्वित्यर्थः । यद्वा—'अभिरभागे' इति लक्षणे अभेः कर्मप्रवचनीयत्वम् । दिशोऽभि सर्वासु दिक्षु अयं राजा भवति सर्वदा ॥

[18]मङ्गल्यनाम्नो राजाह्वयति—सुश्लोकेति ॥ सङ्गृहीता भागदुघः क्षत्ता चेत्येते मङ्गल्यनामानः, एषामेतानि सुश्लोकादीनि नामानि, एतैरेते आमन्त्र्यन्ते । सुश्लोकः शोभनकीर्तिः; धनेन राज्ञश्शोभनकीर्तिहेतुत्वात् । अहं सदा सुश्लोकस्स्यामित्याह्वातुरभिप्रायः । सुमङ्गलश्शोभनमङ्गलहेतुः । निरुपसृष्टाभिमितार्थसिद्धिहेतु-

*सं. १-७-७.

[1] क. ग. म—वज्रेण न वा.

काँ४सुमङ्गलाँ४ सत्यराजा३न् ।
अपां नप्त्रे स्वाहोर्जो नप्त्रे स्वाहा-
ग्नये गृहपतये स्वाहा ॥३२॥

इति सु-श्लोकाँ४ । सुमङ्गलाँ४ इति सु-मङ्गलाँ४ । सत्यराजा३निति सत्य-राजा३न् । [19]अपाम् । नप्त्रे । स्वाहा । [20]ऊर्जः । नप्त्रे । स्वाहा । [21]अग्नये । गृहपतय इति गृह-पतये । स्वाहा ॥३२॥

सत्यौजाश्चत्वारिꣳशच्च ॥ १६ ॥

---

मङ्गलम् । सत्यराज्ञस्सत्यो रजा येन । राज्ञस्सत्यत्वहेतुः । 'आशिषमेवैतामाशास्ते'* इत्यादिब्राह्मणम् । पूर्ववद्गो उदात्तौ । 'अणोप्रगृह्यस्यानुनासिकः' इति प्रथमद्वितीययोरन्त्य(रूप)स्यानुनासिकः ॥

[19]अथावभृथेन प्रचर्यापामन्ते जुहोति—अपां नप्त इति ॥ अपां चतुर्थ्याग्नये स्वाहा । अद्भ्य ओषधयः, ओषधीभ्योऽन्नं, अन्नादमिरिति । 'ऊर्डिदम्' इति षष्ठ्युदात्ता ॥

[20]विषुवति दर्भस्तम्बे जुहोति—ऊर्जो नप्त इति ॥ ऊर्गन्नं तस्य नप्त्रे चतुर्थाय स्वाहा । 'अन्नाद्बलं' बलान्मथनवेगः, ततोऽग्निरिति । 'सावेकचः' इत्यूर्जष्षष्ठ्युदात्ता ॥

[21]पुनरेत्य गार्हपत्ये जुहोति—अग्नये गृहपतये स्वाहेति । गतम्† ॥

अष्टमे षोडशोनुवाकः.

---

*ब्रा. १-७-१०. †स. १-८-१५[14].

आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा सारस्वतं चरुं वत्सतरी दक्षिणा सावित्रं द्वादशकपालमुप-

[1]आग्नेयम् । अष्टाकपालमित्यष्टा–कपालम् । निरिति । वपति । हिरण्यम् । दक्षिणा । [2]सारस्वतम् । चरुम् । वत्सतरी । दक्षिणा । [3] सावित्रम् । द्वादशकपालमिति द्वादश–कपालम् । उपध्वस्त

[1]एवमभिषेचनीये पञ्चम्यां संस्थिते दशपेयस्यागामिनो देवयजनस्य पश्चात् संसृपां हविर्भिर्यजेत, तानि विदधाति—आग्नेयमष्टाकपालमिति ॥ पष्ठचामुपक्रमः । तत्र पूर्वपूर्वं देवयजनमध्यवस्यति । यत्र पूर्वस्या आहवनीयः तत्र उत्तरस्या गार्हपत्यः । दशपेयस्य सङ्कल्पात्प्रागेवाष्टाकपालमाग्नेयं निर्वपति । हिरण्यं दक्षिणा । 'वरुणस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं परापतत्'* इत्यादि ब्राह्मणम् ॥

[2]श्वोभूते सारस्वतं चरुं निर्वपति ॥ आग्नेयस्याहवनीयायतने सारस्वतस्य गार्हपत्यायतनम् । एवमुत्तरत्र द्रष्टव्यम् । अत्र वत्सतरी द्वितीयं वयः प्राप्नुवन्ती गौर्दक्षिणा । 'वत्सोक्षा' इति इरच् ॥

[3]श्वोभूते सावित्रं द्वादशकपालं निर्वपति ॥ तत्रोपध्वस्तो गौर्दक्षिणा अन्येन वर्णेन परिभूतो नि[....भूतनि]जवर्ण इत्यर्थः ॥

*ब्रा. १-८-१.

ध्वस्तो दक्षिणा पौष्णं चरुꣳ श्या-
मो दक्षिणा बार्हस्पत्यं चरुꣳ शि-
तिपृष्ठो दक्षिणैन्द्रमेकादशकपाल-
मृषभो दक्षिणा वारुणं दशकपालं
महानिरष्टो दक्षिणा सौम्यं चरुं
बभ्रुर्दक्षिणा त्वाष्ट्रमष्टाकपालꣳ शु-

इत्युप-ध्वस्तः। दक्षिणा। [4]पौष्णम्। चरुम्। श्यामः। दक्षिणा। [5]बार्हस्पत्यम्। चरुम्। शितिपृष्ठ इति शिति-पृष्ठः। दक्षिणा। [6]ऐन्द्रम्। एकादशकपालमित्येकादश-कपालम्। ऋषभः। दक्षिणा। [7]वारुणम्। दशकपालमिति दश-कपालम्। महानिरष्ट इति महा-निरष्टः। दक्षिणा। [8]सौम्यम्। चरुम्। बभ्रुः। दक्षिणा। [9]त्वाष्ट्रम्। अष्टाकपाल-

[4]श्वोभूते पौष्णं चरुं निर्वपति ॥ तत्र श्यामो गौर्दक्षिणा ॥

[5]श्वोभूते बार्हस्पत्यं चरुं निर्वपति ॥ तत्र शितिपृष्ठश्शुक्लपृष्ठो गौर्दक्षिणा ॥

[6]श्वोभूत ऐन्द्रमेकादशकपालं निर्वपति ॥ तत्र ऋषभो दक्षिणा ॥

[7]श्वोभूते वारुणं दशकपालं निर्वपति ॥ तत्र महानिरष्टः पीडितवृषणो गौर्दक्षिणा ॥

[8]अथ दशपेये प्रक्रान्ते आतिथ्यया प्रचर्य उपसदां पुरस्तात्सौम्यं चरुं निर्वपति द्वादश्याम् ॥ तत्र बभ्रुश्श्वेतलोहितो गौर्दक्षिणा ॥

[9]श्वोभूते त्रयोदश्यां प्रवर्ग्योपसद्भ्यां प्रचर्य सुब्रह्मण्यान्ते त्वाष्ट्र-

ण्ठो दक्षिणा वैष्णवं त्रिकपालं
वामनो दक्षिणा ॥ ३३ ॥
सद्यो दीक्षयन्ति सद्यस्सोमं क्रीण-
मित्यष्टा-कपालम् । शुण्ठः । दक्षिणा । [10]वै-
ष्णवम् । त्रिकपालमिति त्रि-कपालम् ।वामनः
दक्षिणा ॥ ३३ ॥
आग्नेयं हिरण्यं सारस्वतं द्विचत्वारिंश-
शत् ॥ १७ ॥
[1]सद्यः । दीक्षयन्ति । सद्यः । सोमम् । क्रीण-

मष्टाकपालं निर्वपति ॥ तत्र शुण्ठः अल्पकायो गौर्दक्षिणा ॥
[10]श्वोभूते प्रवर्ग्योद्वासनात्प्राग्वैष्णवं त्रिकपालं निर्वपति ॥ तत्र
वामनो ह्रस्वो गौर्दक्षिणा ॥

इत्यष्टमे सप्तदशोऽनुवाकः.

---

[1]अथ दशपेयस्य तन्त्रविशेषान् कांश्चिद्विदधाति—सद्यो दीक्ष-
यन्तीत्यादि ॥ सद्यस्समानेऽह्नि । 'सद्यःपरुत्' इति निपात्यते ।
दीक्षाया यद्भवति, सोमक्रयस्य च यद्भवति सर्वं समानेऽह्नि कुर्यात् ।
अशक्यं लुप्यते, शक्यं क्रियते एतदुक्तं भवति—एका दीक्षा,
तिस्र उपसदः । तत्र द्वादश्यां वारुणयागानन्तरं दशपेयेन
दीक्षा इत्यादि प्रथमोपसदं तदहरेव कुर्युरिति । सोमपरिवेषणं

न्ति पुण्डरिस्रजां प्र यच्छति दृश-
भिर्वत्सतरैस्सोमं क्रीणाति दशपे-

न्ति । पुण्डरिस्रजाम् । प्रेति । यच्छति । [2]दृश-
भिरिति दृश-भिः । वत्सतरैः । सोमम् । क्रीणा-
ति । दृशपेय इति दृश-पेयः । भवति । शतम् ।

परिलुप्यते । दीक्षणीयां कृत्वा वपनदन्तधावनतूर्णीस्नानानि क्रियन्ते । 'आपो अस्मान्'* इति स्नानमारभ्य यदपवदितव्यं तस्य स्थाने श्रुतिरेवापवादं विदधाति—पुण्डरिस्रजामिति । पुण्डरीकं पद्मम् । छान्दसो वर्णविकारः, पर्यायान्तरं वा । द्वादशपुण्डरीकां स्रजं प्रतिमुञ्चते यजमानस्य शरीरे बध्नाति तूष्णीम् । 'अच्' इति योगविभागात्समासान्तः । 'अङ्गिरसस्सुवर्गं लोकं यन्तः । अप्सु दीक्षातपसी प्रावेशयन् । तत्पुण्डरीकमभवत्'† इत्यादि ब्राह्मणम्, 'अथास्मै क्षौममहतं' इत्यादि आसनीहारप्रस्थापनदीक्षात् । दीक्षाव्रतं प्रायणीयाक्रियया क्रियते । 'प्रायणीयाया ध्रौवाद-द्यो'‡ इत्यादेः 'तत्सा गृहेषु निदधाति'§ इत्यन्तस्य लोपः । अभिषेचनीय एव दशपेयार्थं विक्रयस्य कृतत्वात् 'देवसूर्य' इत्यादि 'प्रजाम्यस्त्वा' इत्यन्तो लुप्यते; पूर्वक्रीतत्वात् ॥

[2]अथ क्रमविशेषमाह—दशभिर्वत्सतरैरिति ॥ पूर्वमेव क्रीतं पुरोहितगृहं गतं सोमं फलेन सहाहृत्य 'क्षौमेण वाससोपसङ्गृह्य' इत्यादि विस्रंसनान्तं कृत्वा सोमविक्रयिणे प्रदाय दशभिर्वत्सतरैः क्रीणाति । द्वितीयं वयः प्राप्नुवन्तो वत्सतराः । 'वत्सोक्षाश्व'

*सं. १-२-१०. †ब्रा. १-८-२.
‡आप. श्रौ. १०-२२-१. §आप. श्रौ. १०-२१-१०.

## यो भवति शतं ब्राह्मणाः पिबन्ति

## ब्राह्मणाः । पिबन्ति । सप्तदशमिति सप्त-दशम् ।

इति टरच् । दश वत्सतरान् सोमविक्रयिणे दक्षिणां दत्वा 'अस्मे ज्योतिः'* इत्यादि कृत्वाऽऽदत्ते सोमम् । 'मित्रो न एहि'† इत्यादि लुप्यते । 'वनेपु व्यन्तरिक्षम्'‡ इत्यादि कुर्यात् । ततो हस्तेन राज्ञो नयनमाप्राग्वंशात् । प्राग्वंशसमीपे यत्र कुत्रचित् सोमफले स्थापयित्वाऽऽतिथ्यं कुर्यात् । आतिथ्यानन्तरं सौर्येण चरुणेष्ट्वा पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य, तदहरेवापराह्णिकीभ्यां प्रचर्य विरामः; एवं प्रथमोपसदन्तमहस्सन्तिष्ठते । दशपेयो भवतीति । एकैकस्मिन् चमसे दशदश ब्राह्मणास्सोमं पिबन्ति यस्मिन् स दशपेयः । अधिकरणे 'अचो यत्' इति यत्, 'ईद्यति' इतीत्वं, कृदुत्तरपदप्रकृतिस्वरत्वे 'यतो नावः' इत्याद्युदात्तत्वम्, सप्तपर्णादिवद्वीप्साद्यर्थलाभः । पात्रसंसादनकाले प्राकृतेभ्योतिरिक्ता दश चमसाः प्रयोक्तव्याः, उन्नयनकाले चोन्नेतव्या इति शतं ब्राह्मणाः पिबन्तीति । यत एवं चमसेचमसे दशदश ब्राह्मणाः पिबन्ति, तस्मात्संहत्य शतं सोमस्य पातारस्सन्तीत्यर्थः । एतेन दशपेयार्थे वीप्सां द्योतयति । ब्राह्मणग्रहणं विशिष्टब्राह्मणपरिग्रहणार्थम् । तेन सोमयाजिनः आदशमात्पुरुषादविच्छिन्नसोमपीथाः विद्यावन्तस्त्रैविद्यवृद्धा वा मीमांसादिशास्त्राभियुक्ता वाकोवाक्येतिहासादिपुराणादिज्ञाः कृच्छ्रचान्द्रायणादितपोनिष्ठाः पवित्रार्थेष्टि§यज्ञक्रतूनामाहर्तारश्च ब्राह्मणाः पातारो वेदितव्याः सप्तदशं स्तोत्रं भवतीति । सप्तदशस्तोत्रीयाः परिमाणमस्य सप्तदशम्

*आप. श्रौ. १०-२६-११. †आप. श्रौ. १०-२७-३. ‡आप. श्रौ. १०-२७-१०. §क-थेपि.

सप्तदश२ स्तोत्रं भवति प्राकाशा-
वध्वर्यवे ददाति स्रजमुद्गात्रे रुक्म२
होत्रेऽश्वं प्रस्तोतृप्रतिहर्तृभ्यां द्वादश
पष्ठौहीर्ब्रह्मणे वशां मैत्रावरुणाय

स्तोत्रम् । भवति । ³प्राकाशौ । अध्वर्यवे । ददाति । स्रजम् । उद्गात्र इत्युत्–गात्रे । रुक्मम् । होत्रे । अश्वम् । प्रस्तोतृप्रतिहर्तृभ्यामिति प्रस्तोतृप्रतिहर्तृ–भ्याम् । द्वादश । पष्ठौहीः । ब्रह्मणे । वशाम् । मैत्रावरुणायेति मैत्रा–वरुणाय । ऋष-

इदमेव स्तोत्रं स्तोमो भवति । अनुब्राह्मणं च भवति 'सप्तदशो दशपेयः'* इति ॥

³प्राकाशावित्यादि ॥ सौवर्णं दर्पणद्वयमध्वर्यवे ददाति । प्रकाशन्तेऽत्र रूपाणीति प्राकाशः । अधिकरणे घञ्, 'उपसर्गस्य घञ्यमनुष्ये' इति दीर्घश्छान्दसो वा, थाथादिनोत्तरपदान्तोदात्तत्वम् । स्रजमित्यादि । अत्रापि हिरण्यस्रजमुद्गात्रे ददाति । रुक्ममिति । रुक्मं रुचकम् । हिरण्यमिति केचित् । अश्वमिति गतम्† । द्वादशेति । चतुर्वर्षास्त्रीगवीः । पष्ठं वहन्तीति 'वहेश्च' इति ण्विः, 'वाहः' इति ङीप्, 'वाह ऊठ्' 'एत्येधत्यूठ्सु' इति वृद्धिः । द्वौ च दश च द्वादश । 'अष्टनस्सङ्ख्यायाम्' इत्यात्वम्, 'सङ्ख्या' इति पूर्वपदप्रकृतिस्वरत्वम् । वशा वन्ध्या । ऋषभः खेलगतिः । ब्राह्मणादाहृत्य शंसति ब्राह्मणानि शंसति

*ब्रा. १-८-८. †सं. १-८-८.

यो भवति शतं ब्राह्मणाः पिबन्ति

ब्राह्मणाः । पिबन्ति । सप्तदशमिति सप्त-दशम् ।

इति ष्टरच् । दश वत्सतरान् सोमविक्रयिणे दक्षिणां दत्वा 'अस्मे ज्योतिः'* इत्यादि कृत्वाऽऽदत्ते सोमम् । 'मित्रो न एहि'† इत्यादि लुप्यते । 'वनेषु व्यन्तरिक्षम्'‡ इत्यादि कुर्यात्। ततो हस्तेन राज्ञो नयनमाप्राग्वंशात् । प्राग्वंशसमीपे यत्र कुत्रचित् सोमफले स्थापयित्वाऽऽतिथ्यं कुर्यात् । आतिथ्यानन्तरं सौर्येण चरुणेष्ट्वा पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य, तदहरेवापराह्णिकीभ्यां प्रचर्य विरामः; एवं प्रथमोपसदन्तमहस्सन्तिष्ठते । दशपेयो भवतीति । एकैकस्मिन् चमसे दशदश ब्राह्मणास्सोमं पिबन्ति यस्मिन् स दशपेयः । अधिकरणे 'अचो यत्' इति यत्, 'ईद्यति' इतीत्वं, कृदुत्तरपदप्रकृतिस्वरत्वे 'यतो नावः' इत्याद्युदात्तत्वम्, सप्तपर्णादिवद्वीप्साद्यर्थलाभः । पात्रसंसादनकाले प्राकृतेभ्योतिरिक्ता दश चमसाः प्रयोक्तव्याः, उन्नयनकाले चोन्नेतव्या इति शतं ब्राह्मणाः पिबन्तीति । यत एवं चमसेचमसे दशदश ब्राह्मणाः पिबन्ति, तस्मात्संहत्य शतं सोमस्य पातारस्सन्तीत्यर्थः । एतेन दशपेयार्थे वीप्सां द्योतयति । ब्राह्मणग्रहणं विशिष्टब्राह्मणपरिग्रहणार्थम् । तेन सोमयाजिनः आदशमात्पुरुषादविच्छिन्नसोमपीथाः विद्यावन्तस्त्रैविद्यवृद्धा वा मीमांसादिशास्त्राभियुक्ता वाकोवाक्येतिहासादिपुराणादिज्ञाः कृच्छ्रचान्द्रायणादितपोनिष्ठाः पवित्रार्थेष्टि§यज्ञक्रतूनामाहर्तारश्च ब्राह्मणाः पातारो वेदितव्याः । सप्तदशं स्तोत्रं भवतीति । सप्तदशस्तोत्रीयाः परिमाणमस्य सप्तदशम् ।

*आप. श्रौ. १०-२६-११. †आप. श्रौ. १०-२७-३. ‡आप. श्रौ. १०-२७-१०. §क-ष्टिपि.

सप्तदशꣳ स्तोत्रं भवति प्राकाशा-
वध्वर्यवे ददाति स्रजमुद्गात्रे रुक्मꣳ
होत्रेऽश्वं प्रस्तोतृप्रतिहर्तृभ्यां द्वादश
पष्ठौहीर्ब्रह्मणे वशां मैत्रावरुणाय

स्तोत्रम् । भवति । [3]प्राकाशौ । अध्वर्यवे । ददाति । स्रजम् । उद्गात्र इत्युत्-गात्रे । रुक्मम् । होत्रे । अश्वम् । प्रस्तोतृप्रतिहर्तृभ्यामिति प्रस्तोतृप्रतिहर्तृ-भ्याम् । द्वादश । पष्ठौहीः । ब्रह्मणे । वशाम् । मैत्रावरुणायेति मैत्रा-वरुणाय । ऋष-

इदमेव स्तोत्रं स्तोमो भवति । अनुब्राह्मणं च भवति 'सप्तदशो दशपेयः'* इति ॥

[3]प्राकाशावित्यादि ॥ सौवर्णं दर्पणद्वयमध्वर्यवे ददाति । प्रकाशन्तेऽत्र रूपाणीति प्राकाशः । अधिकरणे घञ्, 'उपसर्गस्य घञ्यमनुष्ये' इति दीर्घश्छान्दसो वा, थाथादिनोत्तरपदान्तोदात्तत्वम् । स्रजमित्यादि । अत्रापि हिरण्यस्रजमुद्गात्रे ददाति । रुक्ममिति । रुक्मं रुचकम् । हिरण्यमिति केचित् । अश्वमिति गतम्† । द्वादशेति । चतुर्वर्षास्स्त्रीगवीः । पष्ठं वहन्तीति 'वहेश्च' इति ण्विः, 'वाहः' इति ङीप्, 'वाह ऊठ्' 'एत्येधत्यूठ्सु' इति वृद्धिः । द्वौ च दश च द्वादश । 'अष्टनरसङ्ख्यायाम्' इत्यात्वम्, 'सङ्ख्या' इति पूर्वपदप्रकृतिस्वरत्वम् । वशा वन्ध्या । ऋषभः खेलगतिः । ब्राह्मणादाहृत्य शंसति ब्राह्मणानि शंसति

*ब्रा. १-८-८. †सं. १-८-८.

रृषभं ब्राह्मणाच्छꣳसिने वाससी नेष्टापोतृभ्याꣳ स्थूरिं यवाचितमच्छावाकायाऽनड्वाहमग्नीधे भार्गवो होता भवति श्रायन्तीयं ब्रह्मसामं

भम् । ब्राह्मणाच्छꣳसिने । वाससी इति । नेष्टापोतृभ्यामिति नेष्टापोतृ-भ्याम् । स्थूरिं । यवाचितमिति यव-आचितम् । अच्छावाकाय । अनड्वाहम् । अग्नीध इत्यग्नि-इधे । भार्गवः । होता । भवति । श्रायन्तीयम् । ब्रह्मसाममिति ब्रह्म-सा-

वा ब्राह्मणाच्छंसीति । 'सुप्यजातौ णिनिः,' 'ब्राह्मणाच्छंसिन उपसङ्ख्यानम्' इति पञ्चम्या अलुक् । पक्षान्तरे छान्दसोदुगागमः । नेष्टा च पोता च नेष्टापोतारौ । 'आनङृतो द्वन्द्वे' इत्यानङ् । स्थूरीति । स्थूरिः पष्ठवाट् । तत्साधर्म्यादेकयुक्तो रथ उच्यते । यवाचितं यवा अस्मिन्नाचीयन्ते यवैर्वा आचितमिति शकटमुच्यते । 'संज्ञायामनाचितादीनाम्' इत्युत्तरपदान्तोदात्तत्वं व्यत्ययेन प्रवर्तते । अच्छाभिमुख्येन ब्रवीतीत्यच्छावाकः । 'हलश्च' इति संज्ञायां घञ्, छान्दसो दीर्घः । अनड्वाहमिति । अनो वहतीत्यनड्वान् । पृषोदरादिः । अग्निमिन्ध इत्यग्नीत् । भार्गव इति । ऋत्विग्वरण एव भार्गवः भृगोरपत्यं तत्र वरितव्यः । श्रायन्तीयमिति । ब्रह्मणस्साम ब्रह्मसामम् । पूर्ववदच् । श्रायन्तीयं भवति 'श्रायन्त इव सूर्यम्'* इत्यस्यामृचि गेयं भवति । श्रायन्तशब्दोऽस्मिन्न

*सामसं. ३-२-३-५.

भंवति वारवन्तीयमग्निष्टोमसाम॑ ।
सारस्वतीरपो गृह्णाति ॥ २४ ॥
आग्नेयमष्टाकपालं निर्वंपति हिरंण्यं

मम् । भवति । वारवन्तीयमितिं वार-वन्तीयम् । अग्निष्टोमसामामित्यंग्निष्टोम-सामम् । सारस्वतीः । अपः । गृह्णाति ॥ २४ ॥

वारवन्तीयं चत्वारि च ॥ १८ ॥

[1]आग्नेयम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपति । हिरंण्यम् । दक्षिणा । ऐन्द्रम् ।

स्तीति श्रायन्तीयं साम । 'मतौ छस्सूक्तसाम्नोः' इति छः । वारवन्तीयमिति । अग्निष्टोमस्य सामाग्निष्टोमसामं, येनाग्निष्टोमस्सन्तिष्ठते । पूर्ववदच् । तद्वारवन्तीयं भवति । 'अश्वं नत्वा वारवन्तम्'* इत्यस्यामृचि गेयं भवति । वारवन्तमित्यस्मात्पूर्ववन्मत्वर्थे छः । सारस्वतीरिति । सरस्वतीनाम नदी । तदीया अपो वसतीवरीर्गृह्णाति, यदा सरस्वत्यास्समीपे यजते । इतरथा सरस्वतीजलमाहृत्य बहुयाजिकुम्भस्थं गृह्णातीत्याहुः । 'उदिदम्' इत्यदृचो द्वितीयाया उदात्तत्वम् ॥

इत्यष्टमेष्टादशोनुवाकः.

---

[1]अथ पञ्चहविषामवेष्ट्योदवरयति, तां विदधाति—आग्नेयमित्यादि ॥ 'ईश्वरो वा एष दिशोनून्मदितोः'† इत्यादि

*सामसं. १-१-२-७. †ब्रा. १-८-३.

दक्षिणैन्द्रमेकादशकपालमृषभो द-
क्षिणा वैश्वदेवं चरुं पिशङ्गी पष्ठौही
दक्षिणा मैत्रावरुणीमामिक्षां वशा
दक्षिणा बार्हस्पत्यं चरुꣳ शितिपृ-
ष्ठो दक्षिणादित्यां मल्हां गर्भिणी-

एकादशकपालमित्येकादश—कपालम् । ऋषभः । दक्षिणा । वैश्वदेवमिति वैश्व—देवम् । चरुम् । पिशङ्गी । पष्ठौही । दक्षिणा । मैत्रावरुणीमिति मैत्रा—वरुणीम् । आमिक्षाम् । वशा । दक्षिणा । बार्हस्पत्यम् । चरुम् । शितिपृष्ठ इति शिति—पृष्ठः । दक्षिणा । [2]आदित्याम् । मल्हाम् । गर्भि-

ब्राह्मणम् । आग्नेयैन्द्रवैश्वदेवमैत्रावरुणबार्हस्पत्यानि पञ्च हवींषि, निर्वपति । हिरण्यऋषभपष्ठौहीवशाशितिपृष्ठेत्येतानि दक्षिणाकाले देयानि । सन्तिष्ठते दशपेयः । 'एतया दिशामवेष्ट्या तेजस्कामो ब्राह्मणो राजन्यो वा वैश्यो वा' इत्ययज्ञसंयुक्तं केचिदाहुः ॥

[2]अथ यस्यां दशपेयासमाप्तिस्तस्यां प्रथमायामपराह्णे द्विपशुना पशुबन्धेन यजते, तं विदधाति—आदित्यां मल्हामिति ॥ आदित्यो देवता । 'दित्यदित्यादित्य' इति ण्यः । मल्हा मणिला*

*तै—मणित्वका.

मा लभते मारुतीं पृश्निं पष्ठौहीम्-
श्विभ्यां पूष्णे पुरोडाशं द्वादशक-
पालं निर्वपति सरस्वते सत्यवाचे
चरुꣳ सवित्रे सत्यप्रसवाय पुरोडा-

णीम् । एतिं । लभते । मारुतीम् । पृश्निम् । पष्ठौहीम् । [3]अश्विभ्यामित्यश्वि-भ्याम् । पूष्णे । पुरोडाशम् । द्वादशकपालमिति द्वादश-कपालम् । निरिति । वपति । सरस्वते । सत्यवाच इति सत्य-वाचे । चरुम् । सवित्रे । सत्यप्रसवायेति सत्य-प्रसवाय । पुरोडाशम् । द्वादशकपालमिति द्वाद-

अजा, यस्या ग्रीवायां मणिवन्मांसद्वयमवलम्बते । तादृशीं गर्भिणीमालभेत । मारुतीं च पृश्निं श्वेतवर्णां पष्ठौहीम् । उक्ता पष्ठौही* ॥

[3]श्वोभूते द्वितीयायां सात्यदूतानां त्रिहविषेष्ट्या यजते, तां विदधाति—अश्विभ्यामित्यादि ॥ अश्विनौ पूषा च सम्भूय देवते। 'अश्विभ्यां पूष्णे जुष्टं निर्वपामि' इति निर्वापः । पूष्ण इत्याद्युदात्तनिवृत्तिस्वरेण चतुर्थ्या उदात्तत्वम् । सरस्वान् सत्यवाङ्नाम देवता । सत्यं वक्ति सत्यवाक् । 'क्विब्वचि' इत्यादिना क्विब्दीर्घौ, कृदुत्तरपदप्रकृतिस्वरत्वम्, 'अन्तोदात्तादुत्तरपदात्' इति विभक्त्युदात्तत्वं नित्यसमासत्वान्न भवति । बहुव्रीहौ त्रिचक्रादि-

*सं. १-८-१८[3]

शं द्वादशकपालं तिसृधन्वꣳ शुष्क-
दृतिर्दक्षिणा ॥ ३५ ॥
आग्नेयमष्टाकपालं निर्वपति सौम्यं
चरुꣳ सावित्रं द्वादशकपालं वार्‌ह-

श–कपालम् । तिसृधन्वमिति तिसृ–धन्वम् ।
शुष्कदृतिरिति शुष्क–दृतिः । दक्षिणा ॥ ३५ ॥
आग्नेयꣳ हिरण्यमैन्द्रं वैश्वदेवं पिशङ्गीं
वार्‌हस्पत्यꣳ सप्तचत्वारिꣳशत्॥ १९ ॥
[1]आग्नेयम् । अष्टाकपालमित्यष्टा–कपालम् ।
निरिति । वपति । सौम्यम् । चरुम् । सावित्रम् ।
द्वादशकपालमिति द्वादश–कपालम् । वार्‌हस्प-

---

त्वादुत्तरपदान्तोदात्तत्वम्, 'अन्यतरस्यां' इति वचनाद्विभक्त्युदात्तत्वाभावः । सवित्रे । 'उदात्तयणः' इति विभक्त्युदात्तत्वम् । सत्यमसवाय सत्याभ्यनुज्ञानाय तिसृधन्वं शुष्कदृतिश्च दक्षिणा । तिसृभिरिषुभिर्युक्तं धनुः तिसृधन्वम् । शुष्का केवला दृतिश्शुष्कदृतिः ॥

इत्यष्टमे एकोनविंशोनुवाकः

---

[1]तस्मिन्नपराह्णे पाङ्क्तैः प्रयुजां हविर्भिर्यजते, तानि विदधाति—आग्नेयमिति ॥ प्रयुजां हविर्भिर्यक्ष्ये इति सङ्कल्पः । पङ्क्तिष्क एको यज्ञ इति आग्नेयेष्ट्यन्ते सत्यान् दूतान् दक्षिणाद्रव्यहस्तान्

स्पत्यं चरुं त्वाष्ट्रमष्टाकपालं वैश्वा-
नरं द्वादशकपालं दक्षिणो रथवाह-
नवाहो दक्षिणा सारस्वतं चरुं नि-
र्वपति पौष्णं चरुं मैत्रं चरुं वारुणं

त्यम् । चरुम् । त्वाष्ट्रम् । अष्टाकपालमित्यष्टा-कपालम् । वैश्वानरम् । द्वादशकपालमिति द्वादश-कपालम् । दक्षिणः । रथवाहनवाह इति रथवाहन-वाहः । दक्षिणा । [2]सारस्वतम् । चरुम् । निरिति । वपति । पौष्णम् । चरुम् । मैत्रम् । चरुम् । वारुणम् । चरुम् । क्षैत्रपत्यमिति क्षैत्र-

प्रतिराजभ्यः प्रहिणोति । 'अभ्यषिक्षि राजाऽभूवम्' इति चावेदनं, आगतेषु दक्षिणाद्रव्याणि ऋत्विग्भ्य एव ददाति । ततस्सौम्यसावित्रबार्हस्पत्यत्वाष्ट्रवैश्वानराणि हवींषि । विश्वेषां नराणां सम्बन्धी वैश्वानरः । 'नरे संज्ञायाम्' इति दीर्घत्वम् । अत्र दक्षिणः दक्षिणतो युक्तः रथवाहनस्यासौ वाहो वाहकः गौर्दक्षिणा देया ॥

[2]श्वोभूते सारस्वतादिभिः प्रयुजां हविर्भिर्यजते, तानि विदधाति—सारस्वतं चरुमित्यादि ॥ सारस्वतपौष्णमैत्रवारुणक्षैत्रपत्यादित्यानि हवींषि । अत्र उत्तरः उत्तरतो युक्तः रथवाहनवाहो बलीवर्दो दक्षिणा देया । 'आग्नेयमष्टाकपालं निर्वपति । तस्माच्छिशिरे कुरुपाञ्चालाः प्राञ्चो यान्ति'* इत्यादि ब्राह्मणम् ॥

*ब्रा. १-८-४.

चरुं क्षैत्रपत्यं चरुमादित्यं चरुमुत्त-
रो रथवाहनवाहो दक्षिणा ॥ ३६ ॥
स्वाद्वीं त्वा स्वादुना तीव्रां तीव्रेणा-

पत्यम् । चरुम् । आदित्यम् । चरुम् । उत्तर इत्युत् —तरः । रथवाहनवाह इति रथवाहन—वाहः । दक्षिणा ॥ ३६ ॥

आग्नेयꣳ सौम्यं बार्हस्पत्यं चतु-
स्त्रिꣳशत् ॥ २० ॥

[1]स्वाद्वीम् । त्वा । स्वादुना । तीव्राम् । तीव्रे-

---

अथ राजसूयशेषः केशवपनीयोतिरात्रः, व्युष्टिर्द्विरात्रः, अग्निष्टोमातिरात्रः, क्षत्राणां धृतिस्त्रिष्टोमोग्निष्टोमश्चेति । सर्वोनुब्राह्मणेनावगन्तव्यः ॥

राजसूयस्समाप्तः ॥

इत्यष्टमे विंशोनुवाकः.

---

[1]अथ राजसूयेनेष्ट्वा सौत्रामण्या यजेत, तामधिकृत्योच्यते । वैश्वदेवं काण्डम् । आसरेणाविक्षन्* सोमं सम्पादयति—स्वाद्वीमिति । इयं गायत्री, एकादशाकः पादः, अभितस्सप्तकः ॥ सुराभिप्रायेणाह—स्वाद्वीं स्वादुरसां स्वादुना स्वादुरसेनानेन तीव्रा-

*क. घ—णावीक्षन्.

मृताम॒मृते॑न सृजामि॒ स॑ सोमे॑न॒
सोमो॑स्य॒श्विभ्यां॑ पच्यस्व॒ सर॑स्व-
त्यै पच्य॒स्वेन्द्रा॑य सु॒त्राम्णे॑ पच्यस्व
पु॒नातु॑ ते परि॒स्रुत॒ सोम॒ सूर्य-

र्ण । अ॒मृता॑म् । अ॒मृते॑न । सृजा॑मि । समिति॑ ।
सोमे॑न । सोम॑ः । अ॒सि॒ । अ॒श्विभ्या॒मित्य॒श्वि-
भ्या॒म् । प॒च्य॒स्व॒ । सर॑स्वत्यै । प॒च्य॒स्व॒ । इन्द्रा॑-

मुत्कृष्टां त्वां तीव्रेणोत्कृष्टेनानेन । यद्वा—उत्कृष्टरसत्वं तीव्रत्वम् । तीव स्थौल्ये, औणादिको रमत्ययः । अमृतां अमृतत्वहेतुं त्वां अमृतेनामृतत्वहेतुनानेन सोमेन सोमसदृशेन प्रशस्तेन संसृजामि । पादादित्वान्न निहन्यते । 'सोममेवैनां करोति'* इत्यादिब्राह्मणम् । यद्वा—सम्यक् सृजामि सोमेन समायुत्य पादयामि[†] । ओदनं करोमि ॥

तामुपरिस्थितामभिमृशति—सोमोसीति ॥ सोमवत्प्रशस्तोसि । अश्विभ्यामश्व्यर्थं पच्यस्व सुरारूपेण । कर्मवद्भावात् यगात्मनेपदे, स्वयमेव पच्यस्वेति । सरस्वत्यै पच्यस्व । इन्द्राय सुत्राम्णे । सुष्ठु त्रायते शत्रुभ्य इति सुत्रामा । 'आतो मनिन्' इति मनिन् । 'एताभ्यो ह्येषा देवताभ्यः पच्यते'* इत्यादि ब्राह्मणम् । यद्वा—सोमोसि सोमसमो वा भव । पावनो भव । सुनोतेःक्रतु सुरा तत एव मन्मत्यये सोमः ॥

*ब्रां. १-८-५. †तै—उत्पादयामि.

स्य दुहिता । वारेण शश्वता तना।
वायुः पूतः पवित्रेण प्रत्यङ्क्सोमो
य । सुत्राम्ण इति सु-त्राम्णो । पच्यस्व । [3]पुनातु ।
ते । परिस्रुतमिति परि-स्रुतम् । सोमम् । सूर्य-
स्य । दुहिता । वारेण । शश्वता । तना । [4]वायुः ।

[3]सुरां पुनाति वालेन—पुनात्विति गायत्र्या ॥ हे इन्द्र तव ते तुभ्यं वा परिस्रुतं परिस्रवणजन्मा सुरा परिस्रुक्[त्] तस्मिन्यदा प्रस्रवति सा परिस्रुक्[त्] भवति, तां पुनातु सोमं सोमीभूतां सोमवत्प्रशस्तभावमापन्नां सूर्यस्य दुहिता सूर्यो वरुण उच्यते, तस्य सुता वारुणी प्रसिद्धा सुरा । यद्वा—सूर्येण दोहनीया दुहिता करसंतापविशेषजन्मा सुराविशेषः । यद्वा—श्रद्धा सूर्यस्य दुहिता । उक्तं च शतपथे । सा पुनातु वारेण वालेन। कपिलादित्वाल्लत्वविकल्पः । शश्वता नित्येन तना विस्तीर्णेन। तृतीयायाः 'सुपां सुलुक्' इत्याकारः। यद्वा—शश्वता वारेण। कालेन पुनातु नित्यं पुनात्विति यावत् । तना सूर्यस्य दुहिता। पचाद्यचि पृषोदरादित्वाद्द्रष्टव्यः । यद्वा—तनेति निपातः नित्ये वर्तते शश्वता अविनाशेन वालेन नित्यं पुनात्विति । निपातनादाद्युदात्तत्वम् । यद्वा—शश्वततना सदातनेनेत्यर्थः । शश्वतेत्याकारान्तो निपातितः । तेनाव्ययलक्षणः ट्युल्प्रत्ययः 'ट्युट्युलौ तुट्' इति । प्रकृतिप्रत्यययोश्च पृथक्पदत्वं दृश्यते, यथा—'मा च ते स्या स्म तीरिषत्'* इति ॥

[4]सोमातिपवितस्य सोमवामिनो वा पुनाति—वायुरिति गाय-

*आ. १-२७.

अतिद्रुतः । इन्द्रस्य युज्यस्सखा ।
कुविदङ्ग यवमन्तो यवं चिद्यथा

पूतः । पवित्रेण । प्रत्यङ् । सोमः । अतिद्रुत इत्यति-द्रुतः । इन्द्रस्य । युज्यः । सखा । [5]कुवित् । अङ्ग । यवमन्त इति यव-मन्तः । यवम् ।

---

न्या न ॥ पवित्रेणानेन पूतस्सोमः इन्द्रस्य युज्यः सखा । युजि साधुर्युज्यः युक्तस्सखा । ऐन्द्राग्नवायवादिषु सहपानभोजनत्वात्सोमविशेषणमिदम् । स सोमो वायुः वायुसदृशः वायुवत्स्वस्थानचलितः प्रत्यङ्प्रतिकूलो घनः । अतिद्रुतः अधस्ताद्गतः अतिगतो वा । यद्वा—वायुरिति । 'सुपां सुलुक्' इति तृतीयायास्स्वादेशः । वायुना प्रत्यङ्गतिद्रुतः अतीतः तमेतेन पवनेन स्वस्थानस्थं करोमीति शेषः । एवमनेन कर्मणा स्वस्थानस्थित एव भवतीति । अपरा योजना—वायुश्शरीरस्थः प्राणः पवित्रेण पावनेन सोमेन पीतेन पूतः प्रथमं शोधितः इन्द्रस्य युज्यस्सखा स प्रत्यङ् प्रतीपमतिद्रुतः स्वस्थानात्पीडितोतिक्रम्य निर्गतः सोमश्च सोतिद्रुतः । यद्वा—पूर्ववत्तृतीयायास्स्वादेशः । अनेन सोमेन स वायुरतिद्रुतः । यद्वा—सोमश्च वायुश्चेति तदुभयमनेन कर्मणा स्वस्थानस्थं भवति ॥

[5]सुराग्रहान्गृह्णाति—कुविदङ्गेति त्रिष्टुभा ॥ कुविदिति बहुप्रसिद्धानुवादे । अङ्गेत्यप्रातिलोम्ये बहुप्रसिद्धमेतत् सर्वानुकूलमिति द्योतयतः । किम्पुनस्तत्? आह—यवमन्तः बहुयवाः । यवग्रहणेन यवितव्या यवमुद्गव्रीहिगोधूमादयो धान्यविशेषा गृह्यन्ते । भूम्नि मतुप् । 'यथा चित्' इति द्वे अप्युपमानार्थे, एकाने-

दान्त्यंनुपूर्वं वियूयं । इहेहैंषां कृणु-
त भोजनानि ये वर्हिषो नमोंवृ-
क्तिम् ॥ यथा । दान्ति । अनुपूर्वमित्यनु-पूर्वम् ।
वियूयेति वि-यूयं । इहेहेतीह-इह । एषाम् ।
कृणुत । भोजनानि । ये । वर्हिषः । नमोवृक्ति-

---

कौपमेयत्वादुपमायाः । यवमिति जातावेकवचनम् । अयमर्थः— यथा यवादिबहुधान्यवन्तो यवादीन् सहोत्पद्यमानाननुपूर्वं परिपाट्या वियूय पृथक्कृत्य दान्ति पृथक्क्रेन स्थापयन्ति, परस्परं काण्डपलालादिभ्यो वा । दा लवने, आदादिकः । यवमन्तो यवं यथा तुषकणादिभ्यः पृथक्कृत्य तानि शोधयन्ति । दैप् शोधने, भौवादिकः, 'बहुलं छन्दसि' इति शपो लुक् । तथा यूयमपि इहेह एषां भोजनानि कृणुत अस्वादुभूतं तुषादिकं पृथक्कृत्य भोजनानि भोक्तव्यानि स्वादूनि कृणुत उत्पाद्य धारयत । इहेहेति वीप्सा । सर्वत्र स्थानेस्थाने गृहेगृहे लोकेलोके वा । 'अनुदात्तं च' इति द्वितीयस्य निघातः । वियूयेति यौतेर्ल्यपि छान्दसो दीर्घः । उक्तमेषां भोजनानि कृणुतेति, केषामित्याह —ये बर्हिषो यज्ञस्य नमोवृक्तिं नमस्कारनाशनं साज्ञस्य[साङ्गस्य]नाशनं न जग्मुर्न गताः ये यज्ञस्य नमस्कारादिकं न नाशयन्ति अस्माकमुपकारिणः तेषां कृणुत । ये पुनर्नाशयन्ति ते त्वनेन विनाश्यन्ताम् । [illegible] 'नमोवृक्तिमेवैषां वृङ्क्ते'* इति । नमश्शब्दे उत्तरोत्तरि [illegible]
प्रकृतिस्वरत्वम् ॥

किं न जग्मुः । आश्विनं धूम्रमा लभते सारस्वतं मेषमैन्द्रमृषभमैन्द्रमेकादशकपालं निर्वपति सावित्रं द्वादशकपालं वारुणं दशकपालꣳ सोमप्रतीकाः पितरस्तृप्णुत

मिति नमः–वृक्तिम् । न । जग्मुः । [6]आश्विनम् । धूम्रम् । एति । लभते । सारस्वतम् । मेषम् । ऐन्द्रम् । ऋषभम् । [7]ऐन्द्रम् । एकादशकपालमित्येकादश–कपालम् । निरिति । वपति । सावित्रम् । द्वादशकपालमिति द्वादश–कपालम् । वारुणम् । दशकपालमिति दश–कपालम् । [8]सोमप्रतीका इति सोम–प्रतीकाः । पितरः । तृप्णु-

[6]अथ त्रीन् पशून् विदधाति—आश्विनमिति ॥ आश्विनं धूम्रललाममालभते । सारस्वतं सरस्वत्यै मेषम् । ऐन्द्रमृषभम् । सुराग्रहाश्च त्रयो भवन्ति आश्विनसारस्वतैन्द्राः ॥

[7]अथ त्रीन् पुरोडाशान्विदधाति—ऐन्द्रमेकादशकपालमिति ॥ ऐन्द्रसावित्रवारुणाः ॥

[8]अथ शतातृण्णायां स्थाल्यां सुराशेषमवनयति—सोमप्रतीका इति ॥ सोमप्रतीकाः सोमः प्रतीकः उपक्रमो येषां ते । हे सोमप्रभृतयः पितरस्तृप्णुत अनेन सुराशेषेण तृप्यत । व्यत्य-

वडबा दक्षिणा ॥ ३७ ॥

अग्नाविष्णू महि तद्वां महित्वं वीतं घृतस्य गुह्यानि नाम । दमेद-त । वडबा । दक्षिणा ॥ ३७ ॥

भोजनानि पड्विंशतिश्च ॥ २१ ॥

[1]अग्नाविष्णू इत्यग्ना-विष्णू । महि । तत् । वाम् । महित्वमिति महि-त्वम् । वीतम् । घृतस्य । गुह्यानि । नाम । दमेदम इति दमे-दमे । सप्त ।

येन श्रुः । अस्मिन् कर्मणि वडबा अश्वा दक्षिणा । 'उत वा एषाश्वं सूते'* इति ब्राह्मणम् ॥

सौत्रामणी समाप्ता ॥

इत्यष्टमे एकविंशोनुवाकः.

---

[1]अथ याज्याकाण्डं वैश्वदेवम् । तत्र 'आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्त्सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुः'† इत्यस्याग्नावैष्णवस्य पुरोनुवाक्या—अग्नाविष्णू महीति त्रिष्टुप् ॥ हे अग्नाविष्णू महि महत् महनीयं पूजनीयम् । 'इन् सर्वधातुभ्यः' इति मेहरिन् । तत् वक्ष्यमाणं वां युवयोः महित्वं माहात्म्यं ततो युवां वीतं घृतस्य गुह्यानि नाम । 'सुपां सुलुक्' इति

*ब्रा. १-८-६., †सं. २-२-९.

मे <u>स</u>प्त र<u>त्ना</u> दधा<u>ना</u> प्रति वां <u>जि</u>ह्वा घृतमा चंरण्येत् । अग्नाविष्णू महि धाम प्रियं वां <u>वी</u>थो घृत<u>स्य</u> गु<u>ह्या</u>

रत्नां । दधाना । प्रतीति । <u>वा</u>म् । <u>जि</u>ह्वा । घृतम् । एति । <u>च</u>र<u>ण्ये</u>त् । [2]अग्नाविष्णू इत्यग्ना–वि<u>ष्णू</u> । महि । धाम । प्रियम् । <u>वा</u>म् । <u>वी</u>थः । घृतस्य ।

शसो लुक् । आज्यसान्नाय्यपशुपुरोडाशादिगुह्यनामवन्ति घृतसम्बन्धीनि वस्तून्यश्नीतम् । वी गत्यादिषु । पादादित्वान्न निहन्यते । प्रति प्रत्येकं वां युवयोः दमेदमे गृहेगृहे सर्वेषु यज्ञगृहेषु । 'अनुदात्तं च' इति द्वितीयस्यानुदात्तत्वम् । सप्त सृप्तानि सप्तसङ्ख्यानि वा अर्चींषि रत्ना रत्नानि रमणीयानि । 'शेश्छन्दसि' इति लोपः । दधाना । दधानौ सन्तौ । 'सुपां सुलुक्' इति द्विवचनस्याकारः । दधानौ वीतमिति । किञ्च—प्रति प्रत्येकं वां युवयोः जिह्वा घृतमाचरण्येत् आभिमुख्येन प्राप्नोतु भक्षयत्वित्यर्थः । एतद्वां महिमेति पूर्वेणान्वीयते । चरण गतौ, कण्ड्वादिः ॥

[2]तत्रैव याज्या—अग्नाविष्णू इति त्रिष्टुप् ॥ हे अग्नाविष्णू वां युवयोः धाम स्थानं तेजो वा महि महत् महनीयं वा प्रियमिष्टं युवयोः । किञ्च—वीथो घृतस्य गुह्या गुह्यानि स्वरूपाणि चरुपुरोडाशरूपाणि । पूर्ववच्छेर्लोपः । जुषाणा जुषमाणौ प्रीयमाणौ (अप्रीयः) [शपश्लुः] । पूर्ववदाकारः । दमेदमे । गतम् । सुष्टुतीश्शोभनस्तुतिकाः गिरः वावृधाना वावृधानौ वर्धयन्तौ दधानौ । यद्वा—सुष्टुतीः क्रिया वर्धयन्तौ । ऋत्विगादिना क्विन् । प्रव-

जुषाणा । दमेदमे सुष्टुतीर्वावृधाना
प्रति वां जिह्वा घृतमुच्चरण्येत् । प्र
णो देवी सरस्वती वाजेभिर्वाजिनी-

गुह्या । जुषाणा । दमेदम इति दमे-दमे । सुष्टुतीरिति सु-स्तुतीः । वावृधाना । प्रतीति । वाम् । जिह्वा । घृतम् । उदिति । चरण्येत् । [3]प्रेति । नः । देवी । सरस्वती । वाजेभिः । वाजिनीवतीति वा-

र्धयन्तौ । अन्तर्भावितण्यर्थाद्वृधेर्लट् शानच् 'बहुलं छन्दसि' इति शपश्लुः, 'तुजादीनाम्' इत्यभ्यासस्य दीर्घत्वम्, 'छन्दस्युभयथा' इत्यार्धधातुकत्वाच्छसार्वधातुकत्वाभावः । छान्दसो वा लिटः कानजादेशः; ताच्छीलिको वा चानश् । यस्मादेवं तस्माद्वां युवयोः जिह्वा प्रत्येकं घृतमुच्चरण्येत् प्राप्नोतु भक्षयतु ॥

[3]तत्रैव 'सरस्वत्याज्यभागा'* इत्यत्र पुरोनुवाक्या—प्र ण इति गायत्री ॥ देवी सरस्वती वाजेभिः वाजैः रसैर्नोस्मान् प्रावतु प्रकर्षेण रक्षत्वन्नादि दत्वा । सरस्वती विशेष्यते—वाजिनीवती वाजवत्क्रियावती धीनां धियां अवित्री अभिमतप्रदानेन तर्पयित्री । यद्वा—धीनेति वाङ्नाम । अस्माकं धीनां वाचं प्रावतु, अभिमतप्रदानेन अवित्री पालयित्री तृप्ता वा अस्मदभिमतं शत्रुमारणं करोत्विति । यद्वा—अस्मद्दत्तैर्वाजैः पुरोडाशादिभिरन्नैः देवी प्रकर्षेणावतु । 'उपसर्गाद्बहुलम्' इति नसो

*सं. २-२-९.

वती । धीनाम॑वि॒त्र्य॑वतु । आ नो॑
दि॒वो बृ॑ह॒तः ॥ ३८ ॥ पर्व॑ता॒दा स-
र॑स्वती यज॒ता गं॑न्तु य॒ज्ञम् । हवं॑
दे॒वी जु॑जुषा॒णा घृ॒ताचीं॑ श॒ग्मां नो॒-
जिनी॑-व॒ती । धीनाम् । अ॒वि॒त्री । अ॒व॒तु । एति॑ ।
नः॒ । दि॒वः । बृ॒ह॒तः ॥ ३८ ॥ पर्व॑तात् । एति॑ ।
सर॑स्वती । य॒ज॒ता । ग॒न्तु । य॒ज्ञम् । हव॑म् ।
दे॒वी । जु॒जु॒षा॒णा । घृ॒ताची॑ । श॒ग्माम् । न॒ः ।

---

णत्वम् । धीनामिति । छान्दसो नुट्, 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् ॥

तत्रैव याज्या—आ न इति त्रिष्टुप् ॥ पर्वतादा इति प्रथमपादान्तः । सरस्वती देवी यजता यष्टव्या । यजेः क्तिच् [क्तः]। दिवः द्युलोकात् नः अस्माकं यज्ञमागन्तु आगच्छतु यद्यप्युच्छ्रिते प्रदेशे स्थिता शीघ्रमागच्छतु । छान्दसश्शपो लुक् । किञ्च—बृहतो महतः अपि पर्वतादागच्छतु प्रकृष्टाद्रिप्रमाच प्रदेशादागच्छत्वित्यर्थः । किञ्च—हवमस्माकमाह्वानम् । 'भावेनुपसर्गस्य' इत्यप्, सम्प्रसारणं च । जुजुषाणा सेवमाना प्रीयमाणा वा घृताची घृतमाज्यभागं प्रत्यञ्चती । 'चौ' इति पूर्वपदस्य दीर्घत्वमन्तोदात्तत्वं च । शग्मां सुखां समर्थां वा अस्माकं स्तुतिरूपां शृणोतु उशती कामयमाना अस्मत्प्रत्तानि हवींषि स्तोत्राण्येव वा । वष्टेश्शतरि 'शतुरनुमः' इति नद्या उदात्तत्वम् ॥

वाचमुशती शृणोतु । बृहस्पते जु-
षस्व नो हव्यानि विश्वदेव्य । रास्व
रत्नानि दाशुषे । एवा पित्रे विश्वदे-
वाय वृष्णे यज्ञैर्विधेम नमसा हवि-

वाचम् । उशती । शृणोतु । [5]बृहस्पते । जुषस्व ।
नः । हव्यानि । विश्वदेव्येति विश्व-देव्य । रास्व ।
रत्नानि । दाशुषे । [6]एव । पित्रे । विश्वदेवायेति
विश्व-देवाय । वृष्णे । यज्ञैः । विधेम । नमसा ।

---

[5]अथ तत्रैव 'बार्हस्पत्यश्चरुः'* इत्येतस्य पुरोनुवाक्या— बृहस्पत इति गायत्री ॥ हे बृहस्पते विश्वदेव्य विश्वेभ्यो देवेभ्यो हित । गवादिद्रेष्टव्यः । अस्माकं हव्यानि जुषस्व सेवस्व । यद्वा—बृहस्पते बृहतां पते महन् विश्वदेव्य विश्वदेवमय हव्यानि जुषस्व सेवस्व आमन्त्रितस्य विद्यमानवत्त्वादाख्यातस्य निघाताभावे अदुपदेशाल्लसार्वधातुकानुदात्तत्वे शस्योदात्तत्वम् । सेवित्वा च दाशुषे तद्दत्तवते अस्मै यजमानाय रत्नानि रमणीयानि रास्व देहि । रातेश्छान्दसमनुदात्तत्वम्, तेनात्मनेपदम्, सार्वधातुकानुदात्तत्वं च । 'दाश्वान् साह्वान्' इति दाशेः क्वसुर्निपात्यते ॥

[6]तत्रैव याज्या—एवा पित्र इति त्रिष्टुप् ॥ एवमेव । लुगप-वादस्सोर्डादेशः । पित्रे पात्रे रक्षित्रे विश्वदेवाय विश्वे देवा अस्य सन्तीति विश्वेपि देवा अस्याज्ञां कुर्वन्तीति । 'बहुव्रीहौ

---

*सं. २-२-१.

भिः । बृह॑स्पते सु॒प्र॒जा वी॒रव॑न्तो
व॒यꣳ स्या॑म॒ पत॑यो र॒यी॒णाम् ।
बृह॑स्पते॒ अति॒ यद॒र्यो अर्हा॒द्द्युम॑द्वि॒-
भाति॒ क्रतु॑म॒ज्जने॑षु । यद्दी॒दय॒च्छव॑सा

ह॒विर्भि॒रिति॑ ह॒विः-भिः॒ । बृह॑स्पते । सु॒प्र॒जा इति॑ सु-प्र॒जाः । वी॒रव॑न्त॒ इति॑ वी॒र-व॒न्तः॒ । व॒यम् । स्या॒म॒ । पत॑यः । र॒यी॒णाम् । बृह॑स्पते । अतीति॑ । यत् । अ॒र्यः । अर्हा॑त् । द्यु॒मदिति॑ द्यु-मत् । वि॒भा॒तीति॑ वि-भाति॑ । क्रतु॑म॒दिति॒ क्रतु॒-म॒त् । जने॑षु ।

विश्वं 'संज्ञायाम्' इति विश्वशब्दस्यान्तोदात्तत्वम् । वृष्णे वर्षित्रे । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणस्सम्प्रदानत्वाच्चतुर्थी । इमं देवं यज्ञैर्विधेम परिचरेम । विध विधाने, तौदादिकः । नमसा नमस्कारेण हविर्भिश्च चर्वादिभिः हे बृहस्पते । किमर्थमिति चेत्? सुप्रजाः शोभनपुत्रपौत्राः वीरवन्तोन्यैश्च शूरैश्च तद्वन्तः रयीणां धनानां च पतयस्स्याम भवेमेत्येवमर्थं परिचरेम । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् ॥

*तत्रैव याज्या विकल्प्यते*—बृहस्पत इति त्रिष्टुप् ॥ हे बृहस्पते अर्यस्स्वामी विद्वान्राजा वा । यद्द्रविणं अत्यर्हात् अन्यानतिक्रम्य लब्धुमर्हति । यद्वा—यत् येन विशिष्टेन धनेन द्युमद्दीप्तिमत् क्रतुमत्त्वादन्नभोगादिक्रियावत् यथा तथा जनेषु विभाति विशेषेण भाति । किञ्च—यच्च धनं शवसा बलेन अन्नेन वा

॥३१॥ ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् । आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मध्वा रजाꣳसि सुक्रतू ॥ ३२ ॥

यत् । दीदयत् । शवसा ॥ ३१ ॥ ऋतप्रजातेत्यृत-प्रजात । तत् । अस्मासु । द्रविणम् । धेहि । चित्रम् । [8]एति । नः । मित्रावरुणेति मित्रा-वरुणा । घृतैः । गव्यूतिम् । उक्षतम् । मध्वा । रजाꣳसि

दीदयत् दीप्यते शवसो हेतुभूतं भवत् लोके पूज्यते । दीदितिर्दीप्तिकर्मा, छान्दसः लेट्यडागमः, धातोरन्तोदात्तत्वम् । हे ऋतप्रजात सत्यप्रभव तत्तादृशं चित्रं चायनीयं प्रार्थनीयं द्रविणमस्मासु धेहि स्थापय देहि वा ॥

[8] 'मैत्रावरुणमेककपालं निर्वपेद्वशायै काले'* इत्यस्य पुरोनुवाक्या—आ न इति गायत्री ॥ हे मित्रावरुणा मित्रावरुणौ । पूर्ववदाकारः । घृतैरुदकैः गव्यूतिं गोप्रचारम् । गावो यूयन्ते मिश्रयन्तेऽस्यामित्यधिकरणे क्तिन्, दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम्, 'गोर्यूतौ छन्दसि' इत्यवादेशः । उपलक्षणं चैतत् सर्वमप्यस्मदीयं क्षेत्रमोक्षतं आसिञ्चतं समन्तादभिवर्षतम् । यद्वा—गव्यूतिं प्रजं घृतैर्घृतदुग्धाभिस्समन्तादुक्षतं बहुदोग्ध्रीकं कुरुतम् किञ्च—हे सुक्रतू शोभनकर्माणौ शोभनप्रज्ञानौ वा मध्वा मधुना मधुरसेन जलेन घृतेनैव वा रजांसि लोकान् सर्वानपि समन्तादुक्षतमित्येव ॥

*सं. २-१-९.

सि सुक्रतू । प्र बाहवा सिसृतं जी-
वसे न आ नो गव्यूतिमुक्षतं घृतेन।
आ नो जने श्रवयतं युवाना श्रुतं

सि । सुक्रतू इति सु–क्रतू । [1]प्रेति । बाहवा । सिसृतम् । जीवसे । नः । एति । नः । गव्यूतिम् । उक्षतम् । घृतेन । एति । नः । जने । श्रवयतम् । युवाना । श्रुतम् । मे । मित्रावरुणेति मित्रा–वरु-

---

[1]तत्रैव याज्या—प्र बाहवेति त्रिष्टुप् ॥ बाहोर्बलं बाहुशब्देनोच्यते । अर्श आदित्वादच् । बाहवा बाहवौ बाहुबलवन्तौ युवाम् । छान्दसं प्रत्ययात्पूर्वस्योदात्तत्वम् । प्रसिसृतमागच्छतम् । यद्वा—बाहवा बाहुबलेन सह बाहुबलवन्तावागच्छतम् । तृतीयैकवचनस्य नाभावाभावे गुणश्छान्दसः । किमर्थं? नोस्मान् जीवसे जीवयितुम् । 'तुमर्थे सेसेन्' इत्यसेप्रत्ययः । अस्माकं वा जीवसे जीवनाय । असुन्याद्युदात्तत्वाभावश्छान्दसः । आगत्य च नोस्माकं गव्यूतिं घृतेन समन्तादुक्षतमिति गतम् । किञ्च—नोस्मान् जने जनेषु जनपदेषु समन्ताच्छ्रावयतम् । यद्वा—अस्माकं जनपदेषु युवयोर्बाहुबलं ख्यापयतम् । शृणोतेर्णिचि वृद्ध्यभावश्छान्दसः । हे युवाना युवानौ नित्यतरुणौ मिश्रितौ वा । पूर्ववदाकारः । हे मित्रावरुणा मित्रावरुणौ इमा इमान् अस्मदीयान् हवा हवान् आह्वानानि । पूर्ववच्छस आकारः, ह्वयतेः पूर्ववदप्सम्प्रसारणं च । श्रुतं शृणुतम् । शपो लुक्, पादादित्वान्न निहन्यते ॥

मे मित्रावरुणा हवेमा । अग्निं
वः पूर्व्यं गिरा देवमीडे वसूनाम् ।
सपर्यन्तः पुरुप्रियं मित्रं न क्षेत्रसा-
धसम् । मक्षू देववतो रथः ॥ ४० ॥

णा । हवा । इमा । [10]अग्निम् । वः । पूर्व्यम् ।
गिरा । देवम् । ईडे । वसूनाम् । सपर्यन्तः । पुरु-
प्रियमिति पुरु-प्रियम् । मित्रम् । न । क्षेत्रसाधस-
मिति क्षेत्र-साधसम् । [11]मक्षु । देववत इति देव-

[10]अत्र मैत्रावरुणसोमारौद्रयोर्मध्ये कर्मान्तरं न श्रूयते, तेन लिङ्गक्रमाभ्यां याज्यार्थतायामसत्यां सोमारौद्रादिषु सामिधेन्यादिषु इतः परं काश्चिदृचो विनियुज्यन्ते; यथासम्भवं । द्रष्टव्याः तत्र— अग्निं व इत्यनुष्टुप् ॥ हे ऋत्विग्यजमानाः वः युष्मदर्थं अग्निं पूर्व्यं पूर्वैः कृतं पूर्वैराराधितं ते यो [तया] च* गिरा स्तुत्या देवमीडे याचे । यद्वा—गिरा स्तोत्रेण स्तौमि । वसूनाम् । चतुर्थ्यर्थे षष्ठी । वस्वर्थं सपर्यन्तः पूजयन्तः । सपर पूजायाम्, कण्ड्वादिः । पूजार्थमेकस्मिन् बहुवचनं, तदा ईडे इति व्यत्ययेनैकवचनम् । यद्वा—हे सपर्यन्तः । व्यत्ययेनामन्त्रिताद्युदात्तत्वम्, रभावः औणादिको वा, वसन्तादिवत् झच् । सपर्यन्तोहमीडे । अग्निर्विशेष्यते—पुरुप्रियं बहूनां प्रियं मित्रं न मित्रमिव क्षेत्रस्य साधयितारम् ॥

[11]तत्र चतस्रः पङ्क्तयः पक्षपादाः । 'देवानां य इन्मनः'

*प. ...राराधितं यो च.

शूरो॑ वा पृ॒त्सु कासु॑ चित् । दे॒वाना॑ं य इन्मनो॒ यज॑मान॒ इय॑क्षत्य॒भीद॒यज्व॑नो भुवत् । न यज॑मान रिष्य-

वतः । रथः ॥ ४० ॥ शूरः । वा । पृत्स्विति॑ पृ॒त्-सु । कासु॑ । चि॒त् । दे॒वाना॑म् । यः । इत् । मनः॑ । यज॑मानः । इय॑क्षति । अ॒भीति॑ । इत् । अय॑ज्वनः । भु॒वत् । [12]न । य॒ज॒मा॒न॒ । रि॒ष्य॒सि॒ ।

इति पादत्रयं सर्वास्वनुपज्यते । तत्र द्वेद्वे सोमारौद्रे—मक्ष्वित्यादि ॥ मक्षु शीघ्रम् । 'अन्येषामपि दृश्यते' इति संहितायां दीर्घत्वम् । देववतः यज्वनः । स हि देववान्, देवानिष्टवान् तैस्तद्वान् भवति । रथः स रथः शीघ्रो भवति शीघ्रं गच्छति निस्सङ्गः पृत्सु सङ्ग्रामेषु शूरो वा शूर इव । वाशब्द उपमार्थीयः । यथा शूरो विक्रान्तः पुरुषः कासुचित्पृत्सु निस्सङ्गश्शीघ्रं गच्छति एवं देववतो रथः । यद्वा—शूर इति षष्ठ्यर्थे प्रथमा । शूरस्येव रथो देववतश्शीघ्रं गच्छतीति । कः पुनरसौ देववानित्याह—य एव देवानाम्मनो भवति, यमेव देवा मन्यन्ते, देवानेव वा यो मन्यते । ईदृशो यो यजमानः इयक्षति पुनर्देवान्यष्टुमिच्छति । आदिवर्णलोपश्छान्दसः । किञ्च—अयज्वनः अयजमानान् अभि-भुवत् अभिभवदेव । तस्माद्वयमप्येवमर्थं यजामह इति । [illegible] शपो लुक्, 'लेटोडाटौ' इत्यडागमः, 'भूसुवोस्तिङि' इति गुणाभावः ॥

[12]अथ द्वितीया—हे यजमान इष्टयादीन् कुर्वाण [illegible]

सि न सुन्वान न देवयो । असदत्रं सुवीर्यमुत त्यदाश्वश्वियम् । नकिष्टं कर्मणा नशन्न प्र योषन्न योषति।

न । सुन्वान । न । देवयो इति देव-यो । [13]असत् । अत्र । सुवीर्यमिति सु-वीर्यम् । उत । त्यत् । आश्वश्वियमित्याशु-अश्वियम् । [14]नकिः । तम् । कर्मणा । नशत् । न । प्रेति । योषत् । न । यो-

न हिंस्य असि । हे सुन्वान सोमानाहरन् त्वमपि न रिष्यसि । हे देवयो देवानात्मन इच्छन् पाकयज्ञादिभिः प्रचरन् त्वमपि न रिष्यसि । 'न छन्दस्यपुत्रस्य' इतीत्वाभावः, 'क्याच्छन्दसि' इत्युप्रत्ययः । किं कारणमित्याह—देवानां य इन्मन इत्यनुषज्यते । अयज्वानस्सोपद्रवा भवन्तीति शेषः ॥

[13]अथ तृतीया—असदिति ॥ असद्भवेत् । अस्तेर्लेट्यडागमः। अत्र वक्ष्यमाणे सुवीर्यं शोभनवीर्यं बलं धनं वा पुरुषे भवति । 'वीरवीर्यौ च' इत्युत्तरपदान्तोदात्तत्वम् । उत अपि च त्यत् तदेव आश्वश्वियं आशुना अश्वसमूहेन युक्तं भवति । 'केशाश्वाभ्यां' इति छः, छान्दसं ह्रस्वत्वं, 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । उपलक्षणं चैतत् हास्तिकादीनाम् । अत्रेत्युक्तम्, कुत्रेत्याह—देवानां य इन्मन इत्यनुषज्यते । अयज्वानो निश्श्रीका भवन्तीति शेषः ॥

[14]अथ चतुर्थी—नकिरिति ॥ तमिति प्रथमास्थाने द्वितीया । स खलु कर्मणा धर्मेण नशत् नश्यति न दुःखाभिभूतो भवति ।

उप॑ क्षर॒न्ति॒ सिन्ध॑वो मयो॒भुव॑
ईजा॒नं च॑ य॒क्ष्यमा॑णं च धे॒नव॑ः । पृ-
ण॒न्तं॑ च॒ पपु॑रिं च ॥ ४१ ॥ श्र॒व॒-
स्यवो॑ घृ॒तस्य॒ धारा॒ उप॑ यन्ति वि-

प॒ति॒ । उपेति॑ । क्ष॒र॒न्ति॒ । सिन्ध॑वः । म॒यो॒भुव॒ इति॑ मयः-भुव॑ः । ई॒जा॒नम् । च॒ । य॒क्ष्यमा॑णम् । च॒ । धे॒नव॑ः । पृ॒णन्त॑म् । च॒ । पपु॑रिम् । च॒ । ॥ ४१ ॥ श्र॒व॒स्यव॑ः । घृ॒तस्य॑ । धारा॑ः । उपेति॑ ।

---

पूर्वजन्मकृतेन पापेन कर्मणा न बाध्यते । नशेर्लेटि व्यत्ययेन शप् । केचिदाहुः—कर्मणेति प्रथमैकवचनस्य लुगपवादः 'सुपां सुलुक्' इत्याकारः । नशेर्ण्यन्ताल्लेटि 'बहुलं संज्ञाछन्दसोः' इति णिलुक् । ईजानमिष्टवन्तं देवान् । यजेः 'लिटः कानज्वा' इति कानच् । यक्ष्यमाणं च अचिराद्यक्ष्यमाणं यष्टुं कृताध्यवसायमिति । धेनवः देवान् प्रीणयत्यः पृणन्तश्च श्राद्धेन पितॄन् प्रीणयन्तम् । पृ प्रीतौ, श्नम् च । पपुरिश्च पितृणां प्रीणनशीलं च न पृणन्तमेव । 'आदृगमहनः' इति किन्प्रत्ययः । न केवलमीजानं यक्ष्यमाणमेव, अपि तु पृणन्तं च पपुरिं चेति । प्रासङ्गिकी वृत्तप्रशंसा, इष्टापूर्तकारिणां प्रशंसनात् । तद्वते कर्मण्यस्य विनियोगो द्रष्टव्यः । श्रवस्यवः, श्रवोऽन्नं तदिच्छन्त्यः अन्नयुक्ता इत्यर्थः । 'क्याच्छन्दसि' इत्युप्रत्ययः । काः पुनस्ता इत्याह—घृतस्य धारा अविच्छिन्नाः प्रवाहाः यथोक्तस्वभावाः यथोक्त-

श्वतः । सोमारुद्रा वि वृहतं विषू-
चीममीवा या नो गयमाविवेश ।
आरे बाधेथां निरृतिं पराचैः कृ-

युन्ति । विश्वतः । [15]सोमारुद्रेति सोमा-रुद्रा ।
वीति । वृहतम् । विषूचीम् । अमीवा । या । नः ।
गयम् । आविवेशेत्या-विवेश । आरे । बाधेथाम् ।
निरृतिमिति निः-ऋतिम् । पराचैः । कृतम् ।

लक्षणान् पुरुषान् उपक्षरन्ति । अपि च उपयन्ति विश्वतः सर्वाभ्यो दिग्भ्य उपागच्छन्ति ॥

[15] 'यो ब्रह्मवर्चसकामस्स्यात्तस्मा एतं सोमारौद्रं चरुं निर्वपेत्'* इत्यस्य पुरोनुवाक्या—सोमारुद्रा वि वृहतमिति त्रिष्टुप् ॥ हे सोमारुद्रा सोमारुद्रौ । पूर्ववदानङ्, आकारश्च । विवृहतम् । वृहू उद्यमने, तौदादिकः । विषूचीं विष्वग्गमनाम् । कामित्याह—या अमीवा रोगस्तेनोहानिरूपः नोस्माकं गयं गृहं आविवेश । किश्च—आरे दूरे बाधेथां गमयतं, गमयित्वा नाशयतं, निरृतिं निकृष्टां गतिं निकृष्टगमनहेतुं पापम् । 'पातौ च' इति गतेः प्रकृतिस्वरत्वम्, प्रादिसमासो वा । पराचैः परावृत्तिभिर्गमनैः । यथा पुनरस्मत्पार्श्वं नागच्छति तथा बाधेथाम् । निपातोयं यथा उच्चैः नीचैः । एवादित्वादन्तोदात्तत्वम् । किश्च—चेदर्थे चि-

*सं. २-२-१०. †क. घ. म—पाप्मपादित्वा.

तं चिदेनः प्र मुमुक्तमस्मत् । सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तम् । अव स्यतं मुञ्चतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत् । सोमापूषणा जनना

चित् । एनः । प्रेति । मुमुक्तम् । अस्मत् । [16]सोमारुद्रेति सोमा-रुद्रा । युवम् । एतानि । अस्मे इति । विश्वा । तनूषु । भेषजानि । धत्तम् । अवेति । स्यतम् । मुञ्चतम् । यत् । नः । अस्ति । तनूषु । बद्धम् । कृतम् । एनः । अस्मत् । [17]सोमापूषणेति सोमा-पूषणा । जनना ।

---

च्छन्दः । एनः अस्माभिः कृतं नेदमदस्मत्तः अस्मत्सकाशात्प्रमुमुक्तं प्रकर्षेण मोचयतम् । शपश्छुः ॥

[16]तत्रैव याज्या—सोमारुद्रा युवमिति त्रिष्टुप् ॥ हे सोमारुद्रा युवं युवां एतानि भेषजानि यानि लोके सन्ति तानि विश्वा विश्वानि अस्मे अस्माकम् । 'सुपां सुलुक्' इति शे आदेशः । तनूषु शरीरेषु धत्तं स्थापयतं, दत्तं वा । किञ्च— नः अस्माकं तनूषु बद्धं यदस्माभिः कृतं एनः पापमस्ति तत्सर्वं तावदस्मत् अस्मत्तः मुञ्चतं विश्लेषयितम् । तिङः परत्वान्न निहन्यते । ततो मुक्ता तदवस्यतं अवसाययितं विनाशयितम् । न इत्यस्य 'प्रकृत्यान्तःपादम्' इति प्रकृतिभावः ॥

[17]'यदि बिभीयद्दुश्चर्मा भविष्यामीति सोमापौष्णं चरुं निर्व-

र॒यी॒णां जन॑ना दि॒वो जन॑ता पृथि॒-
व्याः । जा॒तौ विश्व॑स्य॒ भुव॑नस्य
गो॒पौ दे॒वा अ॑कृण्वन्न॒मृत॑स्य॒ नाभि॑म् ।
इ॒मौ दे॒वौ जाय॑मानौ जुषन्ते॒मौ

र॒यी॒णाम् । जन॑ना । दि॒वः । जन॑ना । पृ॒थि॒व्याः ।
जा॒तौ । विश्व॑स्य । भुव॑नस्य । गो॒पौ । दे॒वाः ।
अ॒कृ॒ण्व॒न्न् । अ॒मृत॑स्य । नाभि॑म् । [18]इ॒मौ । दे॒वौ ।
जाय॑मानौ । जु॒ष॒न्त॒ । इ॒मौ । तमा॑ᳲसि । गू॒ह॒ता॒म् ।

पेत् '* इत्यस्य पुरोनुवाक्या—सोमापूषणेति त्रिष्टुप् ॥ हे सोमापूषणौ । पूर्ववदाकारः । रयीणां धनानां जनना जननौ जनयितारौ युवाम् । 'नामन्यतरस्यां' इति नाम उदात्तत्वम् । दिवश्च पृथिव्याश्च जनयितारौ । 'ऊडिदम्' इति दिवो विभक्तिरुदात्ता । 'उदात्तयणः' इति पृथिव्याः । जातौ जातमात्रावेव युवां विश्वस्य भुवनस्य भूतजातस्य गोपा गोपयितारौ । ईदृशौ युवां देवा अकृण्वन् अकुर्वन् । अमृतस्य नाभिं नहनौ बन्धनौ† ॥

[18]तत्रैव याज्या—इमौ देवाविति त्रिष्टुप् ॥ इमौ देवौ सोमापूषणौ जायमानावेवावस्थितौ जुषन्त अजुषन्त सेवितवन्तः सर्वे देवाः । 'बहुलं छन्दस्यमाङ्योगेपि' इत्यडभावः । किञ्च—इमौ देवौ तमांसि अजुष्टा अजुष्टानि अप्रियाणि । 'शेश्छन्दसि'

*सं. २-२-१०. †तं—नद्दौ.

तमांऽसि गूह॒ताम॑जु॑ष्टा । आ॒भ्या-
मिन्द्रः॑ प॒क्वमा॒मास्व॒न्तस्सोमा॑पू॒ष-
भ्यां॑ जन॒दु॒स्त्रिया॑सु ॥ ४२ ॥

अजु॑ष्टा । आ॒भ्याम् । इन्द्रः॑ । प॒क्वम् । आ॒मासु॑ । अ॒न्तः । सोमा॒पू॒षभ्या॒मिति॑ सोमा॒पू॒ष—भ्या॒म् । ज॒न॒त् । उ॒स्त्रिया॑सु ॥ ४२ ॥

वृ॒ह॒तद्दश॑व॒सा र॒थः प॒पुंरि॑ च दि॒वो
जन॑ना पञ्चवि॑ꣳशतिश्च ॥२२॥

अनु॑मत्या आग्ने॒यमैन्द्रा॒ग्नम॒ग्नये॒ सोमा॑य प्रति-पूरु॒षमैन्द्रा॒ग्नं धा॒त्रे बा॑र्ह॒स्पत्यम॒ग्नये॒र्थेतो॒ देवा॑स्स॒मि॒धꣳ सोम॒स्येन्द्र॑स्य मि॒त्र आ॑ग्ने॒यꣳ स॒य आ॑ग्ने॒-

---

इति लोपः । अजुष्टा अजुष्टौ तमोभिरसेविर्तो । पूर्ववदाकारः । गूहतामनाशयताम् । छान्दसो लिङ्, ‘ऊदुपधाया गोहः’ । यद्वा—इमौ खलु सर्वस्य तमांसि गूहतो गूहयतः । लडर्थे लिङ् । किञ्च—आभ्यां सोमापूषभ्यां सह । अन्वादेशत्वेपि व्यत्ययेन निघाताभावः, ‘ऊडिदम्’ इति विभक्त्युदात्तत्वमेव भवति । आभ्यां सहेन्द्रः आमासु तरुणीषु उस्त्रियासु गोषु अन्तः परिपक्वं पयो जनत् जनयति उत्पादयति । जनेर्ण्यन्तात्पूर्ववल्लिङ्, पूर्ववदडभावः, ‘छन्दस्युभयथा’ इति शप आर्धधातुकत्वाण्णि-

यमांग्नेयङ्ग्स्वाद्वीं त्वाग्नांविष्णू द्वावि॑ꣳशतिः॥२२॥

अनुमत्यै यथासंति देवींरापो मित्रोंसि शूरों वा द्विचत्वारिꣳशत् ॥ ४२ ॥

अनुमत्या उस्त्रियंसु॥

॥ ॐ तत्सत् ॥

---

लोपः । ताविमावेवम्महानुभावौ अस्माकं दुश्शर्मतां नाशयतां शोभनानि दत्तामित्यर्थः ॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये प्रथमे काण्डे अष्टमे प्रपाठके द्वाविंशोनुवाकः.

प्रपाठकस्समाप्तः, काण्डश्च.

हरिः ॐ.

॥ हरिः ॐ ॥

वायव्यꣳ श्वेतमा लभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन

[1]वायव्यम् । श्वेतम् । एति । लभेत । भूतिकाम इति भूति–कामः । वायुः । वै । क्षेपिष्ठा । देवता । वायुम् । एव । स्वेन । भागधे-

हरिः ओम्.

अथ द्वितीयकाण्डमारम्भः.

[1]अतः परं काम्याः पशवो विधीयन्ते काम्यभायाः, नैमित्तिकानां च मध्ये विधानात् । तेषां वेद्यादिनियमो नास्ति* । वैश्वदेवकाण्डं—वायव्यं श्वेतमा लभेतेत्यादि ॥ तेषां च 'पीवोन्नां रयिवृधः'† इत्यारभ्य षड्टचो याज्यानुवाक्याः; वपायाः पुरोडाशस्य हविष इति द्वेद्वे । वायव्यं वायुदेवत्यं श्वेतं श्वेतवर्णं पशुमालभेत भूतिकामः । आलम्भनं नियोजनम् । भूतिः विभूतिः धनवत्ता‡ । भूतिं कामयत इति 'शीलिकामि' इत्यादिना णप्रत्ययः, पूर्वपदप्रकृतिस्वरत्वं च । क्षेपिष्ठा क्षिप्रतमा । 'स्थूलदूर' इति यणादिलोपो गुणश्च । ननु भूतिं कामयमानं प्रति वायोर्भूतिहेतुत्वं वाच्यं, यथा 'ऐन्द्रं चरुं निर्वपेत्पशुकाम ऐन्द्रा वै पशवः'§ इति तत्र । तद्वदस्य क्षेपिष्ठत्वप्रतिपादनेन क्षेपिष्ठत्वमप्ययं कामयत इति चेन् न; 'स एवैनं क्षेपिष्ठत्वं भूतिं च गम-

*ग–तेषां न पर्वादितिथिनियमोस्ति. †ब्रा. २-८-१.

‡ग–रक्ता च. क–पक्ता च. §सं. २-२-७.

भागधेयेनोपं धावति स एवैनं भूतिं गमयति भवंत्येवातिक्षिप्रा देवते-

येनेतिं भाग-धेयेन । उपेतिं । धावति । सः । एव । एनम् । भूतिम् । गमयति । भवंति । एव । [2]अ-तिंक्षिप्रेत्यतिं-क्षिप्रा । देवतां । इतिं । आहुः । सा ।

यति' इति निगमनाभावात् । किञ्च—देवताग्रहणमप्यनर्थकम्, वायुर्वै क्षेपिष्ठा इत्येव वाच्यम् । अत्रोच्यते—भूष्णुता; पटुत्वं क्षिप्रकारित्वं कार्याणां सर्वार्थसाधनभूत आत्मधर्मः । अत एव निगमयति 'भवत्येव' इति । वायुश्चायं देवतानां मध्ये क्षिप्रकारितमः । निर्धारणश्रवणान्निर्धार्य[धारण ?] करणस्याभिधानम् । यथा—'प्राची दिशां वसन्त ऋतूनामग्निर्देवता'* इति । तदर्थमेव देवताग्रहणम् । देवतान्तरापेक्षया चातिशायनिकः प्रयुज्यते । यजमानश्चायं मनुष्याणां मध्ये क्षिप्रतमत्वलक्षणां भूतिं कामयते तस्माद्वायव्यमालभेतेति । यद्वा—भूतिर्विभूतिः, तस्या यत्क्षिप्रतमत्वं प्रदाने स देवताभावः प्रतिपाद्यते वायुरिति । भूतिहेतुत्वं तु वायोरप्रतिपादितमेव सामर्थ्यसिद्धमिति वेदितव्यम् । भूतिहेतूनां देवतानां मध्ये वायुः क्षिप्रतमां भूतिं ददातीति भावः । स्वेनेति । वायोस्स्वभूतेन शुक्लेन पशुना भागधेयेन भागेन । 'भागरूपनामभ्यो धेयः' इति स्वार्थे धेयप्रत्ययः । उपधावति उपगच्छति । सर्तेः पाघ्रादिना धावादेशः वेगितायां गतौ । शीघ्रमुपगच्छति; स्वभागधेयलाभात् । स एवेत्यादि गतम् ॥

[2]अतिक्षिप्रेति ॥ प्रथम इतिकरणो हेतौ । यस्मादतिक्षिप्रत्वं देवतात्वं च वायोः तस्मादेनं यजमानं सा देवता प्रदहः प्रक-

*सं. ४-३-२.

त्याहुस्तैनमीश्वरा प्रदह इत्येतमेव
सन्तं वायवे नियुत्वत आ लभेत
नियुद्वा अस्य धृतिर्धृत एव भूतिमु-
पैत्यप्रदाहाय भवत्येव ॥ १ ॥ वायवे

एनम् । ईश्वरा । प्रदह इति प्र-दहः । इति । एतम् । एव । सन्तम् । वायवे । नियुत्वत इति नि-युत्वते । एति । लभेत । नियुदिति नि-युत् । वै । अस्य । धृतिः । धृतः । एव । भूतिम् । उपेति । एति । अप्रदाहायेत्यप्र-दाहाय । भवति । एव ॥ १ ॥ [3]वायवे । नियुत्वत इति नि-युत्वते ।

पेण दग्धुमीश्वरा स्यात् । तस्मादत्र प्रतिविधेयमित्याहुः पुराविदः । 'ईश्वरे तोसुन्कसुनौ' इति कसुन् । वायोः प्रेरणविशेषादग्निर्जायते इति हेतुत्वम् । यथा 'स हि सर्वत्रोद्भूतः'* इति 'वायोरग्निः'† इति च श्रुतिः । यद्वा—दाहेन विनाशो लक्ष्यते ॥

इदानीं प्रतिविधानमाह—एतमेवेति ॥ सर्वत्रैव गुणविधानमित्येके । कर्मान्तरमित्यन्ये । एतं श्वेतमेव सन्तं एतं विभूतिमलंसन्तं नियुत्वते वायव आलभेत । 'तसौ मत्वर्थे' इति भत्वम् । नियुद्वा इति । ध्रियतेनयेति धृतिर्वाहनम् । एवं कृते धृतः अविनष्ट एव भूतिमुपैति अप्रदाहाय सम्पद्यते, ततो भवत्येव यजमानः । समानवाक्ये पदात्परत्वाभावान्निघाताभावः ॥

[3]ग्रामकाम इति ॥ ग्रामो जनसमूहः । स विधेयो मे

*क-ग-स हि सर्वत्रोसुग्भूतः(?) †उ. २-१.

नियुत्वत आ लभेत ग्रामकामो वायुर्वा इमाः प्रजा नस्योता नेनीयते वायुमेव नियुत्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मै प्रजा नस्योता नि यच्छति ग्राम्येव भवति नियुत्वते भवति ध्रुवा एवास्मा

एति । लभेत । ग्रामकाम इति ग्राम-कामः । वायुः । वै । इमाः । प्रजा इति प्र-जाः । नस्योता इति नसि-ओताः । नेनीयते । वायुम् । एव । नियुत्वन्तमिति नि-युत्वन्तम् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अस्मै । प्रजा इति प्र-जाः । नस्योता इति नसि-ओताः । नीति । यच्छति । ग्रामी । एव । भवति । नियुत्वत इति नि-युत्वते । भवति । ध्रुवाः

---

स्यादिति कामयमानः । यद्वा—केनचिदपहृतं ग्रामं पुनः प्राप्तुकामः । नस्योता इति । नसि नासिकायां रज्ज्वेव ओता आबद्धाः । आङ्पूर्वाद्वेञस्सम्प्रसारणम्, 'पद्दन्' इति नसादेशः 'तत्पुरुषे कृति बहुलम्' इत्यलुक्, कृदुत्तरपदप्रकृतिस्वरत्वम् नेनीयते पुनःपुनर्नयति । नियच्छतीति, अस्मै यजमानाय नियमयति विधेयीकरोति । ध्रुवाः स्थिराः अनपगाः अनपरक्ताः ।

अनपगाः करोति वायवे नियुत्वंत आ लभेत प्रजाकामः प्राणो वै वायुरपानो नियुत्प्राणापानौ खलु वा एतस्यं प्रजायाः ॥ २ ॥ अपं क्रामतो योलं प्रजायै सन्प्रजां न विन्दते वायुमेव नियुत्वन्तꣳ स्वेनं भा-

एव । अस्मै । अनपगा इत्यनप-गाः । करोति । वायवे । नियुत्वंत इति नि-युत्वंते । एति । लभेत । प्रजाकाम इति प्रजा-कामः । प्राण इति प्र-अनः । वै । वायुः । अपान इत्यप-अनः । नियुदिति नि-युत् । प्राणापानाविति प्राण-अपानौ । खलु । वै । एतस्यं । प्रजाया इति प्र-जायाः ॥ २ ॥ अपेति । क्रामतः । यः । अलम् । प्रजाया इति प्र-जायै । सन्न् । प्रजामिति प्र-जाम् । न । विन्दते । वायुम् । एव । नियुत्वन्तमिति नि-युत्वन्तम् । स्वेनं । भागधेयेनेति भा-

प्रजाकाम इति ॥ प्रजां पुत्रादिकां कामयेमानः । प्राण इति । उपर्यधोभावाभ्यां प्राणापानत्वमनयोः । प्राणापानौ खल्विति । अनयोरपक्रमणात्प्रजा नोत्पद्यते । योलमिति । सत्यामेव प्रजन-

गधेयेनोप धावति स एवास्मै प्राणा-
पानाभ्यां प्रजां प्र जनयति विन्दते
प्रजां वायवे नियुत्वत आ लभेत
ज्योगामयावी प्राणो वै वायुरपानो
नियुत्प्राणापानौ खलु वा एतस्मादप
क्रामतो यस्य ज्योगामयति वायु-

ग-धेयेन । उपेति । धावति । सः । एव । अस्मै । प्राणापानाभ्यामिति प्राण-अपानाभ्याम् । प्रजामिति प्र-जाम् । प्रेति । जनयति । विन्दते । प्रजामिति प्र-जाम् । [5]वायवे । नियुत्वत इति नि-युत्वते । एति । लभेत । ज्योगामयावीति ज्योक्-आमयावी । प्राण इति प्र-अनः । वै । वायुः । अपान इत्यप-अनः । नियुदिति नि-युत् । प्राणापानाविति प्राण-अपानौ । खलु । वै । एतस्मात् । अपेति । क्रामतः । यस्य । ज्योक् । आमयति । वायुम् । एव । नियुत्वन्तमिति नि-

नशक्तो प्रजां न लभते; प्राणापानाननुग्रहात् । स एवेति । नियुत्वान् वायुः प्राणापानरूपत्वेन प्रजां जनयति ॥

[5]ज्योगामयावी दीर्घरोगः । प्राणापानावित्यादि गतम्* । यस्येति ।

*सं. २-१-१.४

मेव नियुत्वन्त२ स्वेन भागधेयेनोप ॥ ३ ॥ धावति स एवास्मिन्प्राणापानौ दधात्युत यदीतासुर्भवति जीवत्येव प्रजापतिर्वा इदमेक आसीथ्सोकामयत प्रजाः पशून्थ्सृजेयेति स आत्मनो वपामुदक्खिदत्तामग्नौ प्रागृह्णात्ततोजस्तूपरस्समभवत्त२

युत्वन्तम् । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति ॥ ३ ॥ धावति । सः । एव । अस्मिन् । प्राणापानाविति प्राण–अपानौ । दधाति । उत । यदि । इतासुरितीत–असुः । भवति । जीवति । एव । प्रजापतिरिति प्रजा–पतिः । वै । इदम् । एकः । आसीत् । सः । अकामयत । प्रजा इति प्र–जाः । पशून् । सृजेय । इति । सः । आत्मनः । वपाम् । उदिति । अखिदत् । ताम् । अग्नौ । प्रेति । अगृह्णात् । ततः । अजः । तूपरः । समिति ।

'रुगार्थानाम्' इति षष्ठी । उतेति । यद्यपि इतासुर्गतासुर्भवति, तथाप्यनेन कर्मणा जीवत्येव ॥

प्रजापतिर्वा इत्यादि ॥ इदं परिदृश्यमानं स्थावरजङ्गमात्मकं सर्वं जगत् प्रजापतिरेक एव प्रत्यस्तमितसमस्तविकार आसीत्।

स्वायै देवतांया आलभत ततो वै
स प्रजाः पशूनंसृजत यः प्रजाकां-
मः ॥ ४ ॥ पशुकांमस्स्यात्स एतं
प्राजापत्यमजं तूपरमा लभेत प्रजा-
पंतिमेव स्वेनं भागधेयेनोपं धावति
स एवास्मैं प्रजां पशून्प्र जनयति

अभवत् । तम् । स्वायै । देवतांयै । एतिं । अलभ-त । ततः । वै । सः । प्रजा इतिं प्र—जाः । पशू-न् । असृजत । यः । प्रजाकांम इतिं प्रजा—कां-मः ॥ ४ ॥ पशुकांम इतिं पशु—कामः । स्यात् । सः । एतम् । प्राजापत्यमितिं प्राजा—पत्यम् । अजम् । तूपरम् । एतिं । लभेत । प्रजापंतिमितिं प्रजा—पतिम् । एव । स्वेनं । भागधेयेनेतिं भा-ग—धेयेन । उपेतिं । धावति । सः । एव । अस्मै । प्रजामितिं प्र—जाम् । पशून् । प्रेतिं । जनयति ।

स प्रजापतिः प्रजाः पशूंश्च सृजेयेत्यकामयत । व्यत्ययेनात्मनेपदम् । उदक्खिदत् उद्धृतवान् । खिद परिघाते, छान्दसो वर्णोपजनः । व्यञ्जनद्वयादिरित्येके । तां वपामग्नेरुपरि होतुं प्रागृह्णात् अधारयत् । ततः प्रगृहीताया वपाया अजस्तूपरश्शृङ्गविहीनस्समभवत् । पुच्छविहीन इत्येके । अथ प्रजापतिः तमजं स्वायै देवतायै आत्मानमेव देवतां कृत्वा तस्यै आलभत । ततो वा इत्यादि । गतम् ॥

यच्छ्मश्रुणस्तत्पुरुषाणाꣳ रूपं यत्तू-
परस्तदश्वानां यदन्यतोदन्तद्गवां य-
दव्या इव शफास्तदवीनां यदजस्त-
दजानामेतावन्तो वै ग्राम्याः पशव-
स्तान् ॥ ५ ॥ रूपेणैवाव रुन्धे सो-

[7]यत् । श्मश्रुणः । तत् । पुरुषाणाम् । रूपम् । यत् । तूपरः । तत् । अश्वानाम् । यत् । अन्यतोदन्नित्यन्यतः–दन् । तत् । गवाम् । यत् । अव्याः । इव । शफाः । तत् । अवीनाम् । यत् । अजः । तत् । अजानाम् । एतावन्तः । वै । ग्राम्याः । पशवः । तान् ॥ ५ ॥ रूपेण । एव । अवेति । रुन्धे । [8]सोमापौष्णमिति सोमा–पौष्णम् । त्रैतम् ।

---

[7]यदित्यादि ॥ पशुगणस्तूयते । श्मश्रुणत्वं पुरुषाणां रूपम् । पामादित्वान्नप्रत्ययः । तूपरत्वं अश्वानां रूपम् । अन्यतोदत्त्वं अन्यतरपार्श्वस्थितदन्तवत्त्वं गवां रूपम् । 'छन्दसि च' इति दतृभावः । यतः अव्या इव अस्य शफास्सन्ति तदवीनां रूपम् । अजत्वमेवाजानां रूपम् । एतावन्तो वै ग्राम्याः पशवः प्रधानाः; उष्ट्रगर्दभयोरसत्प्रायत्वात् । तानिति । तान् सर्वान् पशून् यस्यो[पूर्वो]क्तगुणं पशुमालभमानः रूपद्वारेणावरुन्धे ॥

[8]त्रैतमिति ॥ त्रयाणां वत्सानां युगपज्जातानां यस्स त्रितः, तत्रभवस्त्रैतः । मध्यम एवेति केचित् । त्रयोप्यालभ्या इत्यपरे ।

मापौष्णं त्रैतमा लभेत पशुकामो
द्वौ वा अजायै स्तनौ नानैव द्वावभि
जायेते ऊर्जं पुष्टिं तृतीयस्सोमापू-
षणाविव स्वेन भागधेयेनोप धावति
तावेवास्मै पशून्प्र जनयतस्सोमो
वै रेतोधाः पूषा पशूनां प्रजनयिता

एति । लभेत । पशुकाम इति पशु–कामः । द्वौ । वै । अजायै । स्तनौ । नाना । एव । द्वौ । अभीति । जायेते इति । ऊर्जम् । पुष्टिम् । तृतीयः । सोमापूषणाविति सोमा–पूषणौ । एव । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । तौ । एव । अस्मै । पशून् । प्रेति । जनयतः । सोमः । वै । रेतोधा इति रेतः–धाः । पूषा ।

---

यस्तिस्रः पिबति स त्रैत इति केचित् । इदानीं त्रैतस्य सोमापूषसम्बन्धं प्रतिपादयति—द्वौ वा इति । अजाया द्वौ स्तनौ क्षीरस्रवणौ । तयोः द्वयोरूर्जं रसं क्षीरलक्षणं अभि अभिलक्ष्य द्वौ वत्सौ जायेते नानैव पृथक्स्वभावौ अनियतस्तनपायिनौ जायेते । तृतीयस्तु वत्सः पुष्टिमभि जायते पुष्ट्यतिशयनिर्दिष्टत्वात्तस्य । एवं रसपुष्टिप्रसवत्वात् सोमापूष्णोः स्वो भागः त्रैतः । गतमन्यत् ॥

सोमं एवास्मै रेतो दधाति पूषा प-
शून्प्र जनयत्यौदुम्बरो यूपो भव-
त्यूर्ग्वा उदुम्बर ऊर्क्पशव ऊर्जैवा-
स्मा ऊर्जं पशूनव रुन्धे ॥ ६ ॥

पशूनाम् । प्रजनयितेति प्र-जनयिता । सोमः । एव । अस्मै । रेतः । दधाति । पूषा । पशून् । प्रेति । जनयति । [1]औदुम्बरः । यूपः । भवति । ऊर्क् । वै । उदुम्बरः । ऊर्क् । पशवः । ऊर्जा । एव । अस्मै । ऊर्जम् । पशून् । अवेति । रुन्धे ॥ ६ ॥

अप्रदाहाय भवत्येव प्रजाया आमयति वायुमेव नियुत्वन्तꣳ स्वेन भागधेयेनोप प्रजाकामस्तान् यूपस्त्रयोदश च ॥ १ ॥

---

किञ्चेत्याह—सोमो वा इति ॥ सिक्तस्य रेतसो धाता रेतोधाः । 'आतो मनिन्' इति विच् । पूषा तु सिक्तस्य रेतसः पशुत्वेन परिणमयिता ॥

[1]औदुम्बर इति ॥ 'अनुदात्तादेश्च' इत्यञ् । ऊर्ग्वा इति। अन्नस्य क्षीरादित्वात्ताच्छब्द्यमुभयत्र । गतमन्यत् ॥

इति द्वितीयकाण्डे प्रथमप्रश्ने प्रथमोनुवाकः.

प्रजापतिः प्रजा असृजत ता अस्मा-
थ्सृष्टाः पराचीरायन्ता वरुणमगच्छ-
न्ता अन्वैत्ताः पुनरयाचत ता अ-
स्मै न पुनरददाथ्सोऽब्रवीद्वरं वृणी-
ष्वाथ मे पुनर्देहीति तासां वरमा-

[1]प्रजापतिरिति प्रजा-पतिः । प्रजा इति प्र-जाः । असृजत । ताः । अस्मात् । सृष्टाः । पराचीः । आयन्न् । ताः । वरुणम् । अगच्छन्न् । ताः । अन्विति । ऐत् । ताः । पुनः । अयाचत । ताः । अस्मै । न । पुनः । अददात् । सः । अब्रवीत् । वरम् । वृणीष्व । अथ । मे । पुनः । देहि । इति । तासाम् । वरम् । एति । अलभत । सः । कृष्णः ।

[1]प्रजापतिरित्यादि ॥ प्रजापतिना सृष्टाः प्रजाः पराचीः पराच्यः अपरक्तचित्तास्सत्यः अस्मात्प्रजापतेरायन् आगच्छन् । ता वरुणमगच्छन् अभजन्त । अथ प्रजापतिः ताः प्रजाः पराचीर्यातीः अन्वैत् अन्वगच्छत् । ताश्च वरुणमयाचत । वरुणश्च ताः पुनःपुनर्याचितोपि नाददात् न दत्तवान् । अथाब्रवीत्प्रजापतिः, वरमभिमतं मत्तो वृणीष्व । अथानन्तरमिमाः प्रजाः वरलाभतुष्टो मे देहीति । अथैव*मुक्त्वा तासां प्रजानां मध्ये वरं वरिष्ठं पशुं वरुणायालभत स्वयमेव वरदानमालम्भनेनाकरोत् । स च ततः

*ग—तथैव.

लभेत स कृष्ण एकशितिपादभव-
द्यो वरुणगृहीतस्स्यात्स एतं वारुणं
कृष्णमेकशितिपादमालभेत वरुणम्
॥ ७ ॥ एव स्वेन भागधेयेनोप
धावति स एवैनं वरुणपाशान्मुञ्चति
कृष्ण एकशितिपाद्भवति वारुणो

एकशितिपादित्येक–शितिपात् । अभवत् । [2]यः । वरुणगृहीत इति वरुण–गृहीतः । स्यात् । सः । एतम् । वारुणम् । कृष्णम् । एकशितिपादमित्येक–शितिपादम् । एति । लभेत । वरुणम् ॥ ७ ॥ एव । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । सः । एव । एनम् । वरुणपाशादिति वरुण–पाशात् । मुञ्चति । कृष्णः । एकशितिपादित्येक–शितिपात् । भवति । वारुणः । हि ।

---

प्रमापितः कृष्ण एकशितिपादभवत् । एकश्शितिः श्वेतः पादो यस्येति त्रिपदो बहुव्रीहिः । यद्वा—शितिः पादो यस्येति शितिपात् । 'पादस्य लोपः' इति समासान्तः । एकेन पादेन शितिपात् । तृतीयापूर्वपदप्रकृतिस्वरत्वम् ॥

[2]वरुणगृहीतस्स्यादिति ॥ वरुणो महोदर इति व्याचिख्ये ।

ह्येष देवतया समृद्ध्यै सुवर्भानुरासु-
रस्सूर्यं तमसाविध्यत्तस्मै देवाः प्रा-
यश्चित्तिमैच्छन्तस्य यत्प्रथमं तमो-
पाघ्नन्त्सा कृष्णाविरभवद्यद्द्वितीयꣳ
सा फल्गुनी यत्तृतीयꣳ सा वलक्षी
यदध्यस्थादपाकृन्तन्त्साविर्वशा॥८॥

एषः । देवतया । समृद्ध्या इति सं–ऋद्ध्यै । [३]सुवर्भानुरिति सुवः–भानुः । आसुरः । सूर्यम् । तमसा । अविध्यत् । तस्मै । देवाः । प्रायश्चित्तिम् । ऐच्छन् । तस्य । यत् । प्रथमम् । तमः । अपाघ्नन्नित्यप–अघ्नन् । सा । कृष्णा । अविः । अभवत् । यत् । द्वितीयम् । सा । फल्गुनी । यत् । तृतीयम् । सा । वलक्षी । यत् । अध्यस्थादित्यधि–अस्थात् । अपाकृन्तन्नित्यप–अकृन्तन् । सा । आविः । वशा ॥ ८ ॥ समिति । अभवत् । ते ।

---

अज्ञातरोग इत्यन्ये । 'तृतीयाकर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । गतमन्यत् ॥

[३]सुवर्भानुरिति ॥ सुवर्भानुर्नाम आसुरः असुरस्यापत्यम् । दिवादित्वादण् । तमसा अविध्यत् अबाधत । प्रायश्चित्तिः दोषनिर्घातार्थो यत्नः । अथ प्रथमं यत्तमोपाघ्नन्, सा कृष्णवर्णा-

समंभवत्ते देवा अंब्रुवन्देवपशुर्वा अ-
यꣳ समंभूत्कस्मां इममा लंफ्स्या-
मह इत्यथ वै तर्ह्यल्पां पृथिव्यासी-
दजांता ओषंधयस्तामविं वशामां-
दित्येभ्यः कामायालंभन्त ततो वा
अप्रंथत पृथिव्यजांयन्तौषंधयो यः

देवाः । अब्रुवन् । देवपशुरितिं देव-पशुः । वै । अयम् । समितिं । अभूत् । कस्मैं । इमम् । एतिं । लप्स्यामहे । इतिं । अथं । वै । तर्हिं । अल्पां । पृथिवी । आसींत् । अजांताः । ओषंधयः । ताम् । अविंम् । वशाम् । आदित्येभ्यंः । कामांय । एतिं । अलभन्त । ततंः । वै । अप्रंथत । पृथिवी । अजांयन्त । ओषंधयः । यः ।

विरजायत । द्वितीयं यदपाघ्नन्, सा फल्गुनी नीलवर्णा* । यत्तृतीयमपाघ्नन्, सा बलक्षी शुक्लवर्णा । अन्यतो ङीप् । वकयोरेकत्वमिच्छन्ति । अथाध्यस्थात् अस्थिभ्यो यत्तमोपाघ्नन् अपाच्छिदन्, सा वशा वन्ध्याविरजायत । अध्यस्थादिति विभक्त्यर्थेऽव्ययीभावः । ' छन्दस्यपि दृश्यते ' इत्यनङादेशः, ' नपुंसकादन्यतरस्याम् ' इति टच्समासान्तः । अथ ते देवा अब्रुवन् । देवानां पशुः देवपशुः ; देवास्थिसम्भूतत्वात् । एवं महानुभावोयं

*क. ग—नील एव [लभेत] वर्णा.

कामयेत प्रथेय पशुभिः प्र प्रजया
जायेयेति स एतामविं वशामादि-
त्येभ्यः कामाय ॥ १ ॥ आ लभे-
तादित्यानेव कामꣳ स्वेन भागधेये-
नोप धावति त एवैनं प्रथयन्ति
पशुभिः प्र प्रजया जनयन्त्य-

कामयेत । प्रथेय । पशुभिरिति पशु-भिः । प्रेति
प्रजयेति प्र-जया । जायेय । इति । सः । ए
ताम् । अविम् । वशाम् । आदित्येभ्यः । कामाय ॥ १ ।
एति । लभेत । आदित्यान् । एव । कामम्
स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धाव
ति । ते । एव । एनम् । प्रथयन्ति । पशुभिरिति
पशु-भिः । प्रेति । प्रजयेति प्र-जया । जनयन्ति

पशुः वशात्मा, तमिमं कस्मै कामायालप्स्यामहे? इति
अथ तर्हि तस्मिन् काले । 'अनद्यतने र्हिलन्यतरस्याम्' इति
पृथिवी अल्पा सङ्कुचिता आसीत्, ओषधयश्च अजाता आसन्
अथ देवाः तां वशां आदित्येभ्यः कामाय चालभन्त, आ
त्येभ्यः कामाय त्वा जुष्टमुपाकरोमीति । कस्मै कामाय? प्रथ
पृथिवी, जायन्तामोषधयः इत्येवंरूपाय कामाय । सम्पादित
त्वाच्छब्दम्* । ततो वा इत्यादि । गतम् ॥

*कामसम्पत्तिहेतुत्वात् कामशब्दः आदित्येष्विन्यर्थः.

सावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन्तस्मा एता मल्हा आलभन्ताग्नेयीं कृष्णग्रीवीꣳ सꣳहितामैन्द्रीꣳ श्वेतां बार्हस्पत्यां ताभिरेवास्मिन्रुचमदधुर्यो ब्रह्मवर्चसकामस्स्यात्तस्मा एता मल्हा आ लभेत ॥ १० ॥ आग्नेयीं कृष्णग्रीवीꣳ सꣳहितामैन्द्रीꣳ श्वेतां बार्ह-

[4]असौ । आदित्यः । न । वीति । अरोचत । तस्मै । देवाः । प्रायश्चित्तिम् । ऐच्छन् । तस्मै । एताः । मल्हाः । एति । अलभन्त । आग्नेयीम् । कृष्णग्रीवीमिति कृष्ण–ग्रीवीम् । सꣳहितामिति सं–हिताम् । ऐन्द्रीम् । श्वेताम् । बार्हस्पत्याम् । ताभिः । एव । अस्मिन् । रुचम् । अदधुः । यः । ब्रह्मवर्चसकाम इति ब्रह्मवर्चस–कामः । स्यात् । तस्मै । एताः । मल्हाः । एति । लभेत ॥ १० ॥ आग्नेयीम् । कृष्णग्रीवीमिति कृष्ण–ग्रीवीम् । सꣳहितामिति सं–हिताम् । ऐन्द्रीम् । श्वेताम् ।

[4]असावादित्य इत्यादि ॥ मल्हा कण्ठावलम्बितस्तनयुग्मा । कृष्णग्रीवी कृष्णबिन्दुलाञ्छितग्रीवा शुद्धा । 'स्वाङ्गाच्चोपसर्जनात्'

स्पत्यामेता एव देवतास्स्वेन भाग-
धेयेनोप धावति ता एवास्मिन्त्रह्मव-
र्चसं दधति ब्रह्मवर्चस्येव भवति
वसन्ता प्रातराग्नेयीं कृष्णग्रीवीमा
लभेत ग्रीष्मे मध्यन्दिने सꣳहिता-
मैन्द्रीꣳ शरद्यपराह्ने श्वेतां वार्हस्प-
त्यां त्रीणि वा आदित्यस्य तेजाꣳ-

वार्हस्पत्याम् । एताः । एव । देवताः । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । ताः । एव । अस्मिन्न् । ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । दधति । ब्रह्मवर्चसीति ब्रह्म-वर्चसी । एव । भवति । [5]वसन्ता । प्रातः । आग्नेयीम् । कृष्णग्रीवीमिति कृष्ण-ग्रीवीम् । एति । लभेत । ग्रीष्मे । मध्यन्दिने । सꣳहितामिति सं-हिताम् । ऐन्द्रीम् । शरदि । अपराह्न इत्यपर-अह्ने । श्वेताम् । वार्हस्पत्याम् । त्रीणि । वै । आदित्यस्य तेजाꣳसि । वसन्ता । प्रातः । ग्रीष्मे । मध्यन्दि-

इति ङीप् । सतिशिष्टसमासान्तस्वरः । संहिता कृष्णश्वेतमिश्रदेहा।
[5]वसन्तेति ॥ 'सुपां सुलुक्' वसन्तशब्दात्सप्तम्या आकारः
अत्र ब्रह्मचर्यादिकं आरम्भप्रभृति यावत्संवत्सरं यजमानस्य केचि

सि वसन्ता प्रातर्ग्रीष्मे मध्यन्दिने शरद्यपराह्णे यावन्त्येव तेजाꣳसि तान्येव ॥ ११ ॥ अवं रुन्धे संवथ्सरं पर्यालभ्यन्ते संवथ्सरो वै ब्रह्मवर्चसस्य प्रदाता संवथ्सर एवास्मै ब्रह्मवर्चसं प्र यच्छति ब्रह्मवर्चस्येव भवति गर्भिणयो भवन्तीन्द्रियं वै

ने । शरदि । अपराह्ण इत्यपर-अह्ने । यावन्ति । एव । तेजाꣳसि । तानि । एव ॥ ११ ॥ अवेति । रुन्धे । संवत्सरमिति सं-वत्सरम् । पर्यालभ्यन्त इति परि-आलभ्यन्ते । संवत्सर इति सं-वत्सरः । वै । ब्रह्मवर्चसस्येति ब्रह्म-वर्चसस्य । प्रदातेति प्र-दाता । संवत्सर इति सं-वत्सरः । एव । अस्मै । ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । प्रेति । यच्छति । ब्रह्मवर्चसीति ब्रह्म-वर्चसी । एव । भवति । गर्भिणयः । भवन्ति । इन्द्रियम् । वै ।

---

दिच्छन्ति । उपाकरणं वपाहोमो वा यथा प्रातरादिषु भवति। सर्वत्र मल्हा एव गतिकम्* । पर्यालभ्यन्त इति । परितस्सर्वत्र

---

*'...यथा प्रातरादिषु भवति तथोपक्रमः. ग्रीष्मशरदोर्मध्याह्नापराह्णयोरेवोपक्रमः. सर्वत्र मल्हा एव । त्रीणि वा इत्यादि ॥ गतम्' इति पाठस्सम्भाव्यते.

गर्भे इन्द्रियमेवास्मिन्दधाति सार-
स्वतीं मेषीमा लभेत य ईश्वरो
वाचो वदितोस्सन्वाचं न वदेद्वाग्वै
सरस्वती सरस्वतीमेव स्वेन भाग-
धेयेनोप धावति सैवास्मिन्न् ॥१२॥
वाचं दधाति प्रवदिता वाचो भवत्य-

गर्भः । इन्द्रियम् । एव । अस्मिन्न् । दधाति । सारस्वतीम् । मेषीम् । एति । लभेत । यः । ईश्वरः । वाचः । वदितोः । सन्न् । वाचम् । न । वदेत् । वाक् । वै । सरस्वती । सरस्वतीम् । एव । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । सा । एव । अस्मिन्न् ॥ १२ ॥ वाचम् । दधाति । प्रवदितेति प्र–वदिता । वाचः । भवति ।

---

संवत्सरे । यद्वा—संवत्सरसमासः प्राक् । गर्भिणयः । वर्णव्यत्ययेन जसि ह्रस्वत्वम् ॥

[6]मेषीमिति ॥ 'जातेरस्त्रीविषयात्' इति ङीप् । य ईश्वर इत्यादि । वाचो वदितोः तां वाचं वदितुमीश्वरस्सम्पन्नसामग्रीकोपि वाचं न वदेत् वादित्वं न लभेत । 'ईश्वरे तोसुन्कसुनौ' इति तोसुन् । प्रवदिता प्रवक्ता । यद्वा—वाक्प्रसरणसमर्थोपि विरोधाद्वाचं वदितुं बिभेति, स यजेत । अपन्नदती अविपन्नदन्ता ।

पन्नदती भवति तस्मान्मनुष्यास्सर्वां
वाचं वदन्त्याग्नेयं कृष्णग्रीवमा लं-
भेत सौम्यं बभ्रुं ज्योगामयाव्यग्निं
वा एतस्य शरीरं गच्छति सोमꣳ
रसो यस्य ज्योगामयत्यग्नेरेवास्य
शरीरं निष्क्रीणाति सोमाद्रसमुत

अपन्नदतीत्यपन्न-दती । भवति । तस्मात् । मनुष्याः । सर्वाम् । वाचम् । वदन्ति । [7]आग्नेयम् । कृष्णग्रीवमिति कृष्ण-ग्रीवम् । एति । लभेत । सौम्यम् । बभ्रुम् । ज्योगामयावीति ज्योक्-आमयावी । अग्निम् । वै । एतस्य । शरीरम् । गच्छति । सोमम् । रसः । यस्य । ज्योक् । आमयति । अग्नेः । एव । अस्य । शरीरम् । निष्क्रीणातीति निः-क्रीणाति । सोमात् । रसम् । उत । यदि ।

---

'छन्दसि च' इति दद्भावः । तस्मादिति । तस्माद्दन्तविपत्तौ सर्वेषां वाचोप्रवृत्तेः, दन्तानां वाक्प्रवृत्तिहेतुत्वाच्च ॥

[7]आग्नेयमित्यादि ॥ बभ्रुः कपिलश्यामः । ज्योगामयावी दीर्घरोगः । यस्येति । 'रुजार्थानाम्' इति षष्ठी । अग्नेरेवेत्यादि । अग्निना गृहीतमस्य शरीरं अग्नेर्निष्क्रीणाति । सोम-

यदीतासुर्भवति जीवत्येव सौम्यं
बभ्रुमा लभेताग्नेयं कृष्णग्रीवं प्रजा-
कामस्सोमः ॥ १३ ॥ वै रेतोधा
अग्निः प्रजानां प्रजनयिता सोम एव-
वास्मै रेतो दधात्यग्निः प्रजां प्र
जनयति विन्दते प्रजामाग्नेयं कृ-.

इतासुरितीत–असुः । भवति । जीवति । एव । [8]सौम्यम् । बभ्रुम् । एति । लभेत । आग्नेयम् । कृष्णग्रीवमिति कृष्ण–ग्रीवम् । प्रजाकाम इति प्रजा–कामः । सोमः ॥१३॥ वै । रेतोधा इति रे-तः–धाः । अग्निः । प्रजानामिति प्र–जानाम् । प्रजनयितेति प्र–जनयिता । सोमः । एव । अ-स्मै । रेतः । दधाति । अग्निः । प्रजामिति प्र–जाम् । प्रेति । जनयति । विन्दते । प्रजामिति प्र–जाम् । [9]आग्नेयम् । कृष्णग्रीवमिति कृष्ण–

गृहीतरसं सोमान्निष्क्रीणातीत्येव । एवञ्च कृते यद्यपि गतासु-र्जीवत्येव ॥

[8]सौम्यमित्यादि ॥ गतम् ॥

[9]विद्यामनूच्येति ॥ विद्यामर्जयित्वापि तदनुरूपं न विरोचते । यद्वा—अनुवचनम्, तत्कृत्वापि यो न विरोचेत विद्यानुरूपां

ष्णग्रीवमा लभेत सौम्यं बभ्रुं यो ब्राह्मणो विद्यामनूच्य न विरोचेत यदाग्नेयो भवति तेज एवास्मिन्तेन दधाति यत्सौम्यो ब्रह्मवर्चसं तेन कृष्णग्रीव आग्नेयो भवति तम एवास्मादप हन्ति श्वेतो भवति॥१४॥ रुचमेवास्मिन्दधाति बभ्रुस्सौम्यो भवति ब्रह्मवर्चसमेवास्मिन्त्विषिं द-

ग्रीवम् । एति । लभेत । सौम्यम् । बभ्रुम् । यः । ब्राह्मणः । विद्याम् । अनूच्येत्यनु–उच्य । न । विरोचेतेति वि–रोचेत । यत् । आग्नेयः । भवति । तेजः । एव । अस्मिन्न् । तेन । दधाति । यत् । सौम्यः । ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् । तेन । कृष्णग्रीव इति कृष्ण–ग्रीवः । आग्नेयः । भवति । तमः । एव । अस्मात् । अपेति । हन्ति । श्वेतः । भवति ॥ १४ ॥ रुचम् । एव । अस्मिन्न् । दधाति । बभ्रुः । सौम्यः । भवति । ब्रह्मवर्चसमिति

कीर्तिमारभेत [तिं न ल त] । ब्रह्मवर्चसं तेनेति । अस्मिन् दधा-

धात्याग्नेयं कृष्णग्रीवमा लंभेत सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवं पुरोधायाꣳ स्पर्धमान आग्नेयो वै ब्राह्मणस्सौम्यो राजन्योऽभितस्सौम्यमाग्नेयौ भवतस्तेजसैव ब्रह्मणोभ-

ब्रह्म–वर्चसम् । एव । अस्मिन्न् । त्विषिम् । दधाति । [10]आग्नेयम् । कृष्णग्रीवमिति कृष्ण–ग्रीवम् । एति । लभेत । सौम्यम् । बभ्रुम् । आग्नेयम् । कृष्णग्रीवमिति कृष्ण–ग्रीवम् । पुरोधायामिति पुरः–धायाम् । स्पर्धमानः । आग्नेयः । वै । ब्राह्मणः । सौम्यः । राजन्यः । अभितः । सौम्यम् । आग्नेयौ । भवतः । तेजसा । एव । ब्रह्मणा । उभयतः । राष्ट्रम् । परीति । गृह्णाति । एकधेत्ये-

तीत्येव । आग्नेयत्वात्तमोपघातहेतुभूतः । श्वेत इति । ग्रीवाकापर्यम्मुक्ता । ब्रह्मवर्चसं ब्राह्मण्यम् । त्विषिर्दीप्तिः ॥

[10]आग्नेयमित्यादि ॥ आग्नेययोर्मध्ये सौम्यम् । पुरोधायामिति । पुरोधानं प्राधान्यं पौरोहित्यम् । तत्र स्पर्धमानः 'अहमित्थं भूयासमन्यो माभूत्' इति । अभितस्सौम्यमिति । आद्यावन्ते च । 'अभितः परितस्समया' इति द्वितीया । तेजसेत्यादि । अग्निब्राह्मणाभ्यामुभयतोवसि[स्थि]ताभ्यां मध्यस्थं राष्ट्रं विषयं परि-

यतो राष्ट्रं परि गृह्णात्येकधा समा-
वृङ्क्ते पुर एनं दधते ॥१५॥
देवासुरा एषु लोकेष्वस्पर्धन्त स एतं
विष्णुर्वामनमपश्यत्तश्स्वायै देव-
ताया आलभत ततो वै स इमान्लो-

क-धा । समावृङ्क्त इति सं-आवृङ्क्ते । पुरः । एनम् । दधते ॥ १५ ॥

लभेत वरुणं वशैतामविं वशामादित्येभ्यः कामाय मल्हा आ लभेत तान्येव सैवास्मिन्थ्सोमश्श्वेतो भवति त्रिचत्वारिंशशच्च ॥ २ ॥

[1]देवासुरा इति देव-असुराः । एषु । लोकेषु । अस्पर्धन्त । सः । एतम् । विष्णुः । वामनम् । अपश्यत् । तम् । स्वायै । देवतायै । एति । अलभत । ततः । वै । सः । इमान् । लोकान् । अभी-

गृह्णाति सर्वतो गृह्णाति । ततश्चैकधा अद्वितीयं समावृङ्क्ते समावर्जयति । ततश्चैनमेव पुरोदधते प्राधान्ये स्थापयन्ति प्रजाः ॥

इति द्वितीये प्रथमे द्वितीयोनुवाकः.

---

[1]देवासुरा इत्यादि ॥ स्पर्धा लोकविषयं परस्परमैश्वर्यासहनम् । वामनो ह्रस्वाङ्गः । स्वायै देवतायै आत्मानमेव देवतां कृत्वा ।

कामं इन्द्रमेव मरुत्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मै सजातान्प्र यच्छति ग्राम्येव भवति यदृषभस्तेन ॥ १७ ॥ ऐन्द्रो यत्पृश्निस्तेन मारुतस्समृद्ध्यै पश्चात्पृश्निसक्थो भवति पश्चादन्ववसायिनीमेवास्मै विशं करोति सौम्यं

ग्राम-कामः । इन्द्रम् । एव । मरुत्वन्तम् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अस्मै । सजातानिति स-जातान् । प्रेति । यच्छति । ग्रामी । एव । भवति । यत् । ऋषभः । तेन ॥ १७ ॥ ऐन्द्रः । यत् । पृश्निः । तेन । मारुतः । समृद्ध्या इति सं-ऋद्ध्यै । पश्चात् । पृश्निसक्थ इति पृश्नि-सक्थः । भवति । पश्चादन्ववसायिनीमिति पश्चात्-अन्ववसायिनीम् । एव । अस्मै । विशम् । करोति । [4]सौम्यम् ।

सदृशस्सम्बन्धस्समृद्धिः । पश्चादिति । सक्थः पश्चाद्भागे पृश्नित्वं यस्य स तथोक्तः । पश्चादन्ववसायिनीं पश्चादनुसृत्यावस्थानशीलां विशं प्रजां करोति ॥

[4]सौम्यमित्यादि ॥ बभ्रुः कपिलश्यामः । सौम्यमन्नं, तस्योदयशीलत्वाद्बभ्रुरिति ॥

बभ्रुमा लभेतान्नकामस्सौम्यं वा अन्नꣳ सोममेव स्वेन भागधेयेनोप धावति स एवास्मा अन्नं प्र यच्छत्य- न्नाद एव भवति बभ्रुर्भवत्येतद्वा अन्नस्य रूपꣳ समृद्ध्यै सौम्यं बभ्रु- मा लभेत यमलम् ॥१८॥ राज्याय सन्तꣳ राज्यं नोपनमेत्सौम्यं वै रा-

बभ्रुम् । एति । लभेत । अन्नकाम इत्यन्न–कामः । सौम्यम् । वै । अन्नम् । सोमम् । एव । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । सः । एव । अस्मै । अन्नम् । प्रेति । यच्छति । अन्नाद इत्यन्न–अदः । एव । भवति । बभ्रुः । भवति । एतत् । वै । अन्नस्य । रूपम् । समृद्ध्या इति सं–ऋद्ध्यै । सौम्यम् । बभ्रुम् । एति । लभेत । यम् । अलम् ॥ १८ ॥ राज्याय । स- न्तम् । राज्यम् । न । उपनमे दित्युप–नमेत् । सौम्यम् । वै । राज्यम् । सोमम् । एव । स्वेन ।

[1]राज्यं प्राप्तुं योग्यमपि राज्यं राजन्यं* वा यन्नोपनमेत् नोपगच्छेत् । राज्ञः कर्म राज्यम् । पुरोहितादित्वात् यत् ॥

*क—राज्यमराजन्यं.

ज्यꣳ सोममेव स्वेन भागधेयेनोप धावति स एवास्मै राज्यं प्र यच्छ- त्युपैनꣳ राज्यं नमति बभ्रुर्भवत्येतद्वै सोमस्य रूपꣳ समृद्ध्या इन्द्राय वृत्र- तुरे ललामं प्राशृङ्गमा लभेत गत- श्रीः प्रतिष्ठाकामः पाप्मानमेव वृत्रं

भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अस्मै । राज्यम् । प्रेति । यच्छति । उपेति । एनम् । राज्यम् । नमति । बभ्रुः । भवति । एतत् । वै । सोमस्य । रूपम् । समृद्ध्या इति सं-ऋद्ध्यै । इन्द्राय । वृत्रतुर इति वृत्र- तुरे । ललामम् । प्राशृङ्गम् । एति । लभेत । गतश्रीरिति गत-श्रीः । प्रतिष्ठाकाम इति प्रति- ष्ठा-कामः । पाप्मानम् । एव । वृत्रम् । तीर्त्वा ।

वृत्रतुर इति ॥ वृत्रस्य वा पापादेर्वा हिंसिता वृत्रतूः । तुर्वी हिंसायाम्, क्विप् । ललामं प्राशृङ्गमिति व्याख्यातम्* । गतश्रीः । केचिदाहुः—शुश्रुवान् ग्रामणी राजन्यो वेति । पाप्मानमिति । येन प्रतिष्ठा निरुद्ध्यते । वृत्रं वारकम् ॥

*सं. २-१-३.[2]

तीर्त्वा प्रतिष्ठां गच्छतीन्द्रायाभिमा-
तिघ्ने ललामं प्राशृङ्गमा ॥ ११ ॥
लभेत यः पाप्मना गृहीतस्स्यात्पा-
प्मा वा अभिमातिरिन्द्रमेवाभिमा-
तिहनꣳ स्वेन भागधेयेनोप धावति
स एवास्मात्पाप्मानमभिमातिं प्र-
णुदत इन्द्राय वज्रिणे ललामं प्रा-

प्रतिष्ठामिति प्रति-स्थाम् । गच्छति । [7]इन्द्राय । अभिमातिघ्न इत्यभिमाति-घ्ने । ललामम् । प्राशृङ्गम् । एति ॥ ११ ॥ लभेत । यः । पाप्मना । गृहीतः । स्यात् । पाप्मा । वै । अभिमातिरित्यभि-मातिः । इन्द्रम् । एव । अभिमातिहनमित्यभिमाति-हनम् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अस्मात् । पाप्मानम् । अभिमातिमित्यभि-मातिम् । प्रेति । नुदते । [8]इन्द्राय । वज्रिणे । ललामम् । प्राशृङ्गम् ।

[7]अभिमातिघ्न इति ॥ अभिमातिः पाप्मा तस्या हन्त्रे । क्विप् । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । गतमन्यत्* ॥

[8]इन्धे इति ॥ राज्यमाप्तियोग्यां दीप्तिं करोतीति । ञि इन्धी दीप्तौ, श्नान्नलोपः ॥

*सं. २-१-३.[2]

शृङ्गमा लभेत यमलꣳ राज्याय सन्तꣳ राज्यं नोपनमेदिन्द्रमेव वज्रिणꣳ स्वेन भागधेयेनोप धावति स एवास्मै वज्रं प्र यच्छति स एनं वज्रो भूत्या इन्ध उपैनꣳ राज्यं नमति ललामः प्राशृङ्गो भवत्येतद्वै वज्रस्य रूपꣳ समृद्ध्यै ॥ २० ॥

एति । लभेत । यम् । अलम् । राज्याय । सन्तम् । राज्यम् । न । उपनमेदित्युप-नमेत् । इन्द्रम् । एव । वज्रिणम् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अस्मै । वज्रम् । प्रेति । यच्छति । सः । एनम् । वज्रः । भूत्यै । इन्धे । उपेति । एनम् । राज्यम् । नमति । ललामः । प्राशृङ्गः । भवति । एतत् । वै । वज्रस्य । रूपम् । समृद्ध्या इति सं-ऋद्ध्यै ॥ २० ॥

सङ्ग्रामे तेनालमभिमातिघ्ने ललामं प्राशृङ्गमेनं पञ्चदश च ॥ ३ ॥

---

इति द्वितीये प्रथमे तृतीयोनुवाकः.

असावादित्यो न व्यरोचत तस्मै
देवाः प्रायश्चित्तिमैच्छन्तस्मा एतां
दर्शरूपभामालभन्त तयैवास्मिन्नुचं-
मदधुर्यो ब्रह्मवर्चसकामस्स्यात्तस्मा
एतां दर्शरूपभामा लभेतामुमेवादि-
त्यङ्ँ स्वेन भागधेयेनोप धावति स

[1]असौ । आदित्यः । न । वीति । अरोचत । तस्मै । देवाः । प्रायश्चित्तिम् । ऐच्छन् । तस्मै । एताम् । दर्शर्पभामिति दर्श—ऋपभाम् । एति । अलभन्त । तया । एव । अस्मिन् । रुचम् । अदधुः । यः । ब्रह्मवर्चसकाम इति ब्रह्मवर्चस—कामः । स्यात् । तस्मै । एताम् । दर्शर्पभामिति दर्श—ऋप-भाम् । एति । लभेत । अमुम् । एव । आदि-त्यम् । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । अस्मिन् । ब्रह्मवर्चसमिति

[1]असावादित्य इत्यादि ॥ दशानामृषभानां समाहारो दशर्षभा । 'आकारान्तोत्तरपदो द्विगुस्त्रियामिष्यते' इति त्रिफलादिवदजादित्वात् 'द्विगोः' इति ङीप्रभावः । 'इगन्तकाल' इति पूर्वपदप्रकृतिस्वरत्वम् । अनिगन्तेपि व्यत्ययेन प्रवर्तते । बहुव्रीहिर्वा; समष्टिर्वाच्या । दशर्षभेति कर्मनाम, जातिरिति केचित् ॥

एवास्मिन्ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवति वसन्ता प्रातस्त्रीन्ल्ललामाना लभेत ग्रीष्मे मध्यन्दिने ॥ २१ ॥ त्रीञ्छितिपृष्ठाञ्छरद्यपराह्ने त्रीञ्छितिवारान्त्रीणि वा आदित्यस्य तेजाꣳसि वसन्ता प्रातर्ग्रीष्मे मध्यन्दिने शरद्यपराह्ने यावन्त्येव

ब्रह्म–वर्चसम् । दधाति । ब्रह्मवर्चसीति ब्रह्म–वर्चसी । एव । भवति । [2]वसन्ता । प्रातः । त्रीन् । ललामान् । एति । लभेत । ग्रीष्मे । मध्यन्दिने ॥ २१ ॥ त्रीन् । शितिपृष्ठानिति शिति–पृष्ठान् । शरदि । अपराह्न इत्यपर–अह्ने । त्रीन् । शितिवारानिति शिति–वारान् । त्रीणि । वै । आदित्यस्य । तेजाꣳसि । वसन्ता । प्रातः । ग्रीष्मे । मध्यन्दिने । शरदि । अपराह्न इत्यपर–अह्ने । यावन्ति । एव । तेजाꣳसि । तानि । एव । अवे-

---

[2]वसन्तेति ॥ पूर्ववत्सप्तम्या डादेशः । वसन्ते चतुर्दश्यां प्रक्रमः । प्रातःकाले उपाकरणं वपाहोमोभयं यथा स्यात्तथोपक्रमः । ग्रीष्मशरदोर्मध्याह्नापराह्णयोरेवोपक्रमः । सर्वत्र संवत्सरे

तेजा॑ꣳसि॒ तान्ये॒वाव॑ रुन्धे॒ त्रय॑स्त्रय॒
आ ल॑भ्यन्तेभिपू॒र्वमे॒वास्मि॒न्तेजो॑
दधाति सं॑वथ्स॒रं प॒र्याल॑भ्यन्ते सं॑व-
थ्स॒रो वै ब्र॑ह्मवर्च॒सस्य॑ प्रदा॒ता सं॑व-
थ्स॒र ए॒वास्मै॑ ब्रह्मवर्च॒सं प्र य॑च्छति

ति॑ । रु॒न्धे॒ । त्रय॑स्त्रय॒ इति॒ त्रयः॑–त्र॒यः । एति॑ । ल॒भ्य॒न्ते॒ । अ॒भि॒पू॒र्वमित्य॑भि–पू॒र्वम् । ए॒व । अ॒-स्मि॒न्न् । तेजः॑ । द॒धा॒ति॒ । सं॒व॒त्स॒रमिति॑ सं–व॒त्स॒रम् । प॒र्याल॑भ्यन्त॒ इति॑ परि–आल॑भ्यन्ते । सं॒व॒-त्स॒र इति॑ सं–व॒त्स॒रः । वै । ब्र॒ह्म॒व॒र्च॒सस्येति॑ ब्रह्म–व॒र्च॒सस्य॑ । प्र॒दा॒तेति॑ प्र–दा॒ता । सं॒व॒त्स॒र इति॑ सं–व॒त्स॒रः । ए॒व । अ॒स्मै॒ । ब्र॒ह्म॒व॒र्च॒समिति॑ ब्रह्म–व॒र्च॒सम् । प्रेति॑ । य॒च्छ॒ति॒ । ब्र॒ह्म॒व॒र्च॒सीति॑ ब्रह्म–व॒र्च॒सी । ए॒व । भ॒व॒ति॒ । [3]सं॒व॒त्स॒रस्येति॑ सं–

ब्रह्मचर्यादि यजमानस्य केचिदिच्छन्ति । ललामा उक्ताः* । शितिपृष्ठाश्शितिवाराः श्वेतवालाः । उभयत्रापि 'शितेर्नित्याबह्वच्' इत्युत्तरपदप्रकृतिस्वरत्वम् । अभिपूर्वमिति । अनुक्रमेण त्रिभिः पशुभिः त्रीणि तेजांस्यस्मिन् दधाति । संवत्सरमित्यादि । गतम्† ॥

[3]संवत्सरस्येति ॥ यस्मिन्नारभ्यते पर्वणि दशर्षभा ततः प्रभृति

*सं. २-१-३.[2] †सं. २-१-२[5]

ब्रह्मवर्चस्येव भवति संवत्सरस्य
पुरस्तात्प्राजापत्यं कद्रुम् ॥ २२ ॥
आ लभेत प्रजापतिस्सर्वा देवता
देवतास्वेव प्रति तिष्ठति यदि बिभी-
याद्दुश्चर्मा भविष्यामीति सोमापौ-
ष्णꣳ श्याममा लभेत सौम्यो वै
देवतया पुरुषः पौष्णाः पशवस्स्वयै-

वत्सरस्य । पुरस्तात् । प्राजापत्यमिति प्रा
पत्यम् । कद्रुम् ॥ २२ ॥ एति । लभेत । प्र-...
तिरिति प्रजा-पतिः । सर्वाः । देवताः । देवतासु ।
एव । प्रतीति । तिष्ठति । यदि । बिभीयात् ।
दुश्चर्मेति दुः-चर्मा । भविष्यामि । इति । सो-
मापौष्णमिति सोमा-पौष्णम् । श्यामम् । एति ।
लभेत । सौम्यः । वै । देवतया । पुरुषः । पौष्णाः ।
पशवः । स्वया । एव । अस्मै । देवतया । पशु-

द्वादशसु द्वादशसु पौर्णमासीषु* द्वादशामावास्यासु चातीतासु त्रयोदशे पर्वणि सङ्कल्पः । कद्रुं पक्वबदरवर्णम् ॥

'यदीत्यादि ॥ दुश्चर्मा कुष्ठी । 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । कुष्ठादित्वग्दोषो मे भविष्यतीति यदि कथंचि-

*तं—प्रभृति द्वादशसु पौर्णमासीषु.

वास्मैं देवतंया पशुभिस्त्वचं करोति न दुश्चर्मा भवति देवाश्च वै यमश्चास्मिन्लोकेऽस्पर्धन्त स यमो देवानामिन्द्रियं वीर्यमयुवत तद्यमस्य ॥ २३ ॥ यमत्वं ते देवा अमन्यन्त यमो वा इदमभूद्यद्वयꣳ स्म इति ते प्रजापतिमुपाधावन्थ्स एतौ प्रजा-

भिरिति पशु-भिः । त्वचम् । करोति । न । दुश्चर्मेति दुः-चर्मा । भवति । [5]देवाः । च । वै । यमः । च । अस्मिन्न् । लोके । अस्पर्धन्त । सः । यमः । देवानाम् । इन्द्रियम् । वीर्यम् । अयुवत । तत् । यमस्य ॥ २३ ॥ यमत्वमिति यम-त्वम् । ते । देवाः । अमन्यन्त । यमः । वै । इदम् । अभूत् । यत् । वयम् । स्मः । इति । ते । प्रजापतिमिति

छिद्राद्बिभीयादिति । त्वयेति । देवतया पशुभिश्च सहकारिभिः त्वचं शोभनां करोति ॥

[5]देवाश्चेत्यादि ॥ अस्मिन् लोके एतल्लोकनिमित्तमस्पर्धन्त अस्माकमेवायं लोक इति देवाः, ममैवायमिति यमः । स इत्यादि। देवानामिन्द्रियं वीर्यं चायुवत देवेभ्यः पृथक्कृतवान् अपहृतवान् । व्यत्ययेन शप्, आत्मनेपदं च । तदिति । यवनाद्यमः । यौतेः

पतिरात्मनं उक्षवशौ निरमिमीत
ते देवा वैष्णावरुणीं वशामालभ-
न्तैन्द्रमुक्षाणं तं वरुणेनैव ग्राहयि-
त्वा विष्णुना यज्ञेन प्राणुदन्तैन्द्रेणै-
वास्येन्द्रियमवृञ्जत यो भ्रातृव्यवा-
न्थ्स्याथ्स स्पर्धमानो वैष्णावरुणीम्

प्रजा–पतिम् । उपेति । अधावन् । सः । एतौ । प्रजापतिरिति प्रजा–पतिः । आत्मनः । उक्षवशाविर्त्युक्ष–वशौ । निरिति । अमिमीत । ते । देवाः । वैष्णावरुणीमिति वैष्णा–वरुणीम् । वशाम् । एति । अलभन्त । ऐन्द्रम् । उक्षाणम् । तम् । वरुणेन । एव । ग्राहयित्वा । विष्णुना । यज्ञेन । प्रेति । अनुदन्त । ऐन्द्रेण । एव । अस्य । इन्द्रियम् । अवृञ्जत । यः । भ्रातृव्यवानिति भ्रातृव्य–वान् । स्यात् । सः । स्पर्धमानः । वैष्णावरुणीमिति वै-

पश्चाद्यचि अन्त्यविकारश्छान्दसः । यमो वा इति । यमो वा इदं विश्वमभूत् यमेश्वरमभूत् यद्वयं स्मः यदस्मदधीनं पूर्वमासीत् । त इति । तथा मन्यमाना देवाः प्रजापतिमुपसम्प्राप्ताः इत्थं स्मः अत्र प्रतिकर्तुमर्हसीति । स चात्मनः शरीरादुक्षवशौ

॥ २४ ॥ वशामा लभेतैन्द्रमुक्षाणं वरुणेनैव भ्रातृव्यं ग्राहयित्वा विष्णुना यज्ञेन प्रणुदत ऐन्द्रेणैवास्येन्द्रियं वृङ्क्ते भवत्यात्मना परास्य भ्रातृव्यो भवतीन्द्रो वृत्रमहन्तं वृत्रो हतष्षोडशभिर्भोगैरसिनात्तस्य

ष्णा—वरुणीम् ॥ २४ ॥ वशाम् । एति । लभेत । ऐन्द्रम् । उक्षाणम् । वरुणेन । एव । भ्रातृव्यम् । ग्राहयित्वा । विष्णुना । यज्ञेन । प्रेति । नुदते । ऐन्द्रेण । एव । अस्य । इन्द्रियम् । वृङ्क्ते । भवति । आत्मना । परेति । अस्य । भ्रातृव्यः । भवति । [6]इन्द्रः । वृत्रम् । अहन् । तम् । वृत्रः । हतः । षोडशभिरिति षोडश—भिः । भोगैः । असिनात् । तस्य । वृत्रस्य । शीर्षतः । गावः । उदिति । आयन् । ताः । वैदेह्यः । अभवन् । तासाम् ।

---

निरमिमीत निर्माय दत्तवान् । उक्षा च वशा चोक्षवशौ, व्यत्ययेन पूर्वनिपातः । उक्षा सेक्ता वशा वन्ध्या । ते इत्यादि । गतम् ॥

[6]इन्द्रो वृत्रमहन्नित्यादि ॥ षोडशभिर्भोगैः शरीरदेशैः इन्द्रमसिनात् अबध्नात् । षिञ् बन्धने । वैदेह्यो गोविशेषाः । केचि-

वृत्रस्य शीर्षतो गाव उदायन्ता
वैदेह्योऽभवन्तासामृषभो जघनेऽनूदै-
त्तमिन्द्रः ॥ २५ ॥ अचायत्सोऽम-
न्यत यो वा इममालभेत मुच्येता-
स्मात्पाप्मन इति स आग्नेयं कृष्ण-
ग्रीवमालभतैन्द्रमृषभं तस्याग्निरेव
स्वेन भागधेयेनोपसृतष्षोडशधा वृ-

ऋषभः । जघने । अनु । उदिति । ऐत् । तम् । इन्द्रः ।
॥२५॥ अचायत् । सः । अमन्यत । यः । वै । इमम् ।
आलभेतेत्या—लभेत । मुच्येत । अस्मात् । पाप्मनः ।
इति । सः । आग्नेयम् । कृष्णग्रीवमिति कृष्ण—
ग्रीवम् । एति । अलभत । ऐन्द्रम् । ऋषभम् । तस्य ।
अग्निः । एव । स्वेन । भागधेयेनेति भाग—धेयेन ।
उपसृत इत्युप —सृतः । षोडशधेति षोडश—धा ।
वृत्रस्य । भोगान् । अपीति । अदहत् । ऐन्द्रेण ।
इन्द्रियम् । आत्मन् । अधत्त । यः । पाप्मना ।

---

दाहुः—विदेहा एव वैदेह्यः अशरीरा गावोभवन् । 'उदात्त-स्वरितयोः' इति विभक्तिस्स्वर्यते । अथ तासां गवां जघने पश्चात् ऋषभोनूदैत् अनूद्गतः, तमिन्द्रश्श्रुतवान् । अस्मादिति । सर्व-

त्रस्य भोगानप्यदहदैन्द्रेणेन्द्रियमा-
त्मन्नधत्त यः पाप्मना गृहीतस्स्यात्स
आग्नेयं कृष्णग्रीवमालभेतैन्द्रमृषभ-
मग्निरेवास्य स्वेन भागधेयेनोपसृतः॥
पाप्मानमपि दहत्यैन्द्रेणेन्द्रियमात्म-
न्धत्ते मुच्यते पाप्मनो भवत्येव द्या-

गृहीतः । स्यात् । सः । आग्नेयम् । कृष्ण ग्रीव-मिति कृष्ण-ग्रीवम् । एति । लभेत । ऐन्द्रम् । ऋषभम् । अग्निः । एव । अस्य । स्वेन । भागधेयेनेति भाग-धेयेन । उपसृत इत्युप-सृतः ॥२६॥ पाप्मानम् । अपीति । दहति । ऐन्द्रेण । इन्द्रियम् । आत्मन् । धत्ते । मुच्यते । पाप्मनः । भवति । एव । [7]द्यावापृथिव्यामिति द्यावा-पृथिव्याम् । धे-

---

लोकप्रसिद्धात्, न तु प्रकृतात्, अत एवान्वादेशाभावान्निघाताभावः। 'उडिदम्' इति विभक्तेरुदात्तत्वम् । अथैवं जानन्निन्द्रः स्वयं तावदाग्नेयं कृष्णग्रीवमालभत ऐन्द्रमृषभम् । पृथक् स्वेन भागधेयेनोपसृतोऽग्निरस्येन्द्रस्य बाधकान् वृत्रभोगान् षोडशधा स्थितानप्यदहत् यथाकाममदहत् । यद्वा—षोडशधा स्थितान्सर्वानप्यदहत् । ऐन्द्रेणात्मनीन्द्रियमधत्तेन्द्रः [ गतमन्यत् ] ॥

[7]द्यावापृथिव्यामिति ॥ 'द्यावापृथिवीशुनासीर' इति यत् । ज्योगपरुद्धः दीर्घकालं दुर्गतः । राष्ट्रान्निर्वासित इत्येके । द्यावा-

द्यावापृथिव्यां धेनुमा लभेत ज्योगपरु-
द्धोनयोर्हि वा एषोप्रतिष्ठितोऽथैष
ज्योगपरुद्धो द्यावापृथिवी एव स्वे-
नं भागधेयेनोप धावति ते एवैनं
प्रतिष्ठां गमयतः प्रत्येव तिष्ठति प-
र्यारिणी भवति पर्यारीव ह्येतस्य

नुम् । एति । लभेत । ज्योगपरुद्ध इति ज्योक्-
अपरुद्धः । अनयोः । हि । वै । एषः । अप्रतिष्ठित
इत्यप्रति-स्थितः । अथ । एषः । ज्योक् । अपरुद्ध
इत्यप-रुद्धः । द्यावापृथिवी इति द्यावा-पृथिवी ।
एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति ।
धावति । ते इति । एव । एनम् । प्रतिष्ठामिति
प्रति-स्थाम् । गमयतः । प्रतीति । एव । तिष्ठति ।
पर्यारिणी । भवति । पर्यारि । इव । हि । एतस्य ।
राष्ट्रम् । यः । ज्योगपरुद्ध इति ज्योक्-अपरुद्धः ।

---

[illegible] प्रतिष्ठितत्वादेष ज्योगपरुद्धो भवति । पर्यारिणी प्रसवकाल-
पृथिव्या[illegible] [illegible] । केचिदाहुः—प्रजननकाल[illegible]मतीत्य प्रजायतः
मतीत्य फलमस[illegible] [...तीत्य या प्रजातेति [illegible]] ज्योगपरुद्धस्य हि राष्ट्रं पर्यारि भवति
दीर्घकालातिक्रमेण प्राप्तत्वात् । तस्मात्तद्दशायोगस्समृद्ध्यै भवति ॥

राष्ट्रं यो ज्योगपरुद्धस्समृद्ध्यै वायव्यम् ॥ २७ ॥ वत्समा लभेत वायुर्वा अनयोर्वत्स इमे वा एतस्मै लोका अपशुष्का विडपशुष्काथैष ज्योगपरुद्धो वायुमेव स्वेन भागधेयेनोप धावति स एवास्मा इमा-

समृद्ध्या इति सं-ऋद्ध्यै । [8]वायव्यम् ॥ २७ ॥ वत्सम् । एति । लभेत । वायुः । वै । अनयोः । वत्सः । इमे । वै । एतस्मै । लोकाः । अपशुष्का इत्यप-शुष्काः । विट् । अपशुष्केत्यप-शुष्का । अथ । एषः । ज्योक् । अपरुद्ध इत्यप-रुद्धः । वायुम् । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अस्मै । इमान् ।

[8]अथ वायव्यो वत्सोऽपरुद्धस्यैव विधीयते—तस्या एव धेनोर्द्यावापृथिव्योः हि वत्सो वायुः । इमे च द्युप्रभृतयो लोकाः एतस्मै पुरुषायापशुष्काः अपरक्ता अस्मिन् भवन्ति । विट् च प्रजा चापशुष्का भवति । अथैष ज्योगपरुद्धो भवति । प्रदापयतीति । अपरं* हित्वा यथास्मै वसूनि ददाति दिट्च तथा करोति वायुः, ततश्चास्मै इमे लोकाः प्रस्नुवन्ति वसस्नेहः†.

*क. ग.-अपरां.

†क. ग.-वसुस्नेहः.

उत्तमः पशुरासीत्तं पृष्ठं प्रति सङ्गृ-
ह्योदक्खिदत्त्ꣳ सहस्रं पशवोनूदा-
यन्त्स उन्नतोभवद्यः पशुकामस्स्या-
त्स एतमैन्द्रमुन्नतमा लभेतेन्द्रमेव
स्वेन भागधेयेनोप धावति स एवा-

सः । यः । उत्तम इत्युत्-तमः । पशुः । आसीत् । तम् । पृष्टम् । प्रतीति । सङ्गृह्येति सं-गृह्य । उदिति । अखिदत् । तम् । सहस्रम् । पशवः । अनु । उदिति । आयन् । सः । उन्नत इत्युत्-नतः । अभवत् । यः । पशुकाम इति पशु-कामः । स्यात् । सः । एतम् । ऐन्द्रम् । उन्नतमित्युत्-नतम् । एति । लभेत । इन्द्रम् । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अस्मै । पशून् । प्रेति । यच्छति ।

---

वसतां पशूनाम्मध्ये य उत्तमः पशुरासीत्, तं पृष्ठं प्रतिसङ्गृह्य पृष्ठे गृहीत्वा उदक्खिदत् उत्क्षिप्तवान् । छान्दसो वर्णोपजनः । उत्तमशब्द उञ्छादिषु निपात्यते, तेनान्तोदात्तः । लक्षणे प्रतेः कर्मप्रवचनीयत्वम् । तमनु सहस्रं पशव उदायन् उदगच्छन् । स उत्तमः पशुरुन्नतोभवत् । उन्नतं पृष्ठभागेस्यास्तीति लक्षणया

स्मै पशून्प्र यच्छति पशुमानेव भ-
वत्युन्नतः ॥ २१ ॥ भवति साहस्री
वा एषा लक्ष्मी यदुन्नतो लक्ष्मियै-
व पशूनवं रुन्धे यदा सहस्रं पशू-
न्प्राप्नुयादथं वैष्णवं वामनमा लभे-
तैतस्मिन्वै तत्सहस्रमध्यंतिष्ठत्तस्मा-

पशुमानिति पशु–मान् । एव । भवति । उन्नत इत्युत्–नतः ॥२१॥ भवति । साहस्री । वै । एषा । लक्ष्मी । यत् । उन्नत इत्युत्–नतः । लक्ष्मियां । एव । पशून् । अवेति । रुन्धे । यदा । सहस्रम् । पशून् । प्राप्नुयादिति प्र–आप्नुयात् । अथ । वैष्णवम् । वामनम् । एति । लभेत । एतस्मिन् । वै । तत् । सहस्रम् । अधीति । अतिष्ठत् । तस्मात् । एषः । वामनः । समीषित इति सं–ईषितः । पु-

तद्यानुच्यते, मत्वर्थीयो लुप्यते । यत्र गृहीतपेसवः [....हीतपशोः] ककुदाख्य उन्नतोऽभवत् ॥

[2]साहस्रीति ॥ सहस्रस्य निमित्तभूता । 'शतमानविंशतिक' इत्यण् । लक्ष्मी लक्षणम् । 'सुपां सुलुक्' इति सोर्लुक् । यदेत्यादि । गतम् । समीषितस्सम्यगीषितः । अहोरात्राण्येवेति ।

देय वामनस्समीपितः पशुभ्य एव प्रजातेभ्यः प्रतिष्ठां दधाति कोऽर्हति सहस्रं पशून्प्राप्तुमित्याहुरहोरात्राण्येव सहस्रꣳ सम्पाद्या लभेत पशवः ॥ ३० ॥ वा अहोरात्राणि पशूनेव प्रजातान्प्रतिष्ठां गमयत्योषधीभ्यो वेहतमा लभेत प्रजाकां-

शुभ्य इति पशु-भ्यः । एव । प्रजातेभ्य इति प्र-जातेभ्यः । प्रतिष्ठामिति प्रति-स्थाम् । दधाति । कः । अर्हति । सहस्रम् । पशून् । प्राप्तुमिति प्र-आप्तुम् । इति । आहुः । अहोरात्राणीत्यहः-रात्राणि । एव । सहस्रम् । सम्पाद्येति सं-पाद्य । एति । लभेत । पशवः ॥ ३० ॥ वै । अहोरात्राणीत्यहः-रात्राणि । पशून् । एव । प्रजातानिति प्र-जातान् । प्रतिष्ठामिति प्रति-स्थाम् । गमयति । [3]ओषधीभ्य

अहोरात्राणां च पशूनां सहस्रत्वात् प्रजाताः पशवः प्रतिष्ठिता भवन्ति । 'हेमन्तशिशिरावहोरात्रे च' इति पूर्ववल्लिङ्गता । पशुबन्धान्तरमिदम् । पशूनां सहस्रं प्राप्याहोरात्राणां सहस्रं स्थित्वा-थर्वेणवं वामनमालभेत ॥

[3]ओषधीभ्य इत्यादि ॥ 'ओषधेश्च' इति दीर्घत्वम् । वेहत्

म ओषधयो वा एतं प्रजायै परि
बाधन्ते योऽलं प्रजायै सन्प्रजां न
विन्दत ओषधयः खलु वा एतस्यै
सूतुमपि घ्नन्ति या वेहद्भवत्योषधी-
रेव स्वेन भागधेयेनोप धावति ता
एवास्मै स्वाद्योनेः प्रजां प्र जनय-

इत्योषधि-भ्यः । वेहतम् । एति । लभेत । प्रजाकाम
इति प्रजा-कामः । ओषधयः । वै । एतम् । प्रजाया इ-
ति प्र-जायै । परीति । बाधन्ते । यः । अलम् । प्रजाया
इति प्र-जायै । सन् । प्रजामिति प्र-जाम् । न ।
विन्दते । ओषधयः । खलु । वै । एतस्यै । सूतुम् ।
अपीति । घ्नन्ति । या । वेहत् । भवति । ओषधीः ।
एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति ।
धावति । ताः । एव । अस्मै । स्वात् । योनेः । प्र-
जामिति प्र-जाम् । प्रेति । जनयन्ति । विन्दते ॥

---

गर्भनाशिनी । ओषधयः स्तुवन्ति । एतस्या वेहत्त्वस्य तु सोतव्यं गर्भम् । औणादिकस्तुन्प्रत्ययः । अपिघ्नन्ति यथेष्टं घ्नन्ति । आशो वा इति । तच्छेतुनाद्यच्छ्रयम्, व्यापिन्यो याः* । अस-सिति । अव्यक्तावस्थं कारणरूपं पुरुषः । तस्मादोषधीनामपि

---

*ग–व्याप्तिशाद्ध. †दं–शरणदर्श.

न्ति विन्दते ॥ ३१ ॥ प्रजामापो वा ओषधयोसत्पुरुष आप एवास्मा असतस्सद्ददति तस्मादाहुर्यश्चैवं वेद यश्च नापस्त्वावासतस्सद्ददतीत्यैन्द्रीᳲ सूतवशामा लभेत भूतिकामोऽजातो वा एष योलं भूत्यै

॥ ३१ ॥ प्रजामिति प्र-जाम् । आपः । वै । ओषधयः । असत् । पुरुषः । आपः । एव । अस्मै । असतः । सत् । ददति । तस्मात् । आहुः । यः । च । एवम् । वेद । यः । च । न । आपः । तु । वाव । असतः । सत् । ददति । इति । 'ऐन्द्रीम् । सूतवशामिति सूत-वशाम् । एति । लभेत । भूतिकाम इति भूति-कामः । अजातः । वै । एषः । यः । अलम् । भूत्यै । सन् । भूतिम् ।

हेतुभूता आप एव असतोऽव्यक्तात् सद्व्यक्तं प्रजालक्षणं ददति अस्मै यजमानाय ओषधीभ्यो वेहतमालभमानाय । तस्मादाहुरिति । यश्चैवमपां हेतुत्वं वेद, यश्च न वेद लौकिकः, ते सर्वे आपः खल्वसतस्सद्ददतीत्याहुः अप्संसर्गादेव सर्वबीजाङ्कुरोत्पत्तिं पश्यन्तः । 'तुनुपूर्वे उदात्तयोर्वकारः'* इति वकारो लुप्यते ॥

'ऐन्द्रीमित्यादि ॥ सूतवशा सकृत्प्रसूता वन्ध्या । अजातो

*तै. प्रा. ५-१३.

सम्भूतिं न प्राप्नोतीन्द्रं खलु वा
एषा सूत्वा वशाऽभवत् ॥ ३२ ॥
इन्द्रमेव स्वेन भागधेयेनोप धाव-
ति स एवैनं भूतिं गमयति भव-
त्येव यꣳ सूत्वा वशा स्यात्तमैन्द्र-
मेवा लभेतैतद्वाव तदिन्द्रियꣳ
साक्षादेवेन्द्रियमव रुन्ध ऐन्द्राग्नं

न । प्राप्नोतीति प्र-आप्नोति । इन्द्रम् । खलु । वै । एषा । सूत्वा । वशा । अभवत् ॥ ३२ ॥ इन्द्रम् । एव । स्वेन । भागधेयेनेति भाग- धेयेन । उपेति । धावति । सः । एव । एनम् । भूतिम् । गमयति । भवति । एव । यम् । सूत्वा । वशा । स्यात् । तम् । ऐन्द्रम् । एव । एति । लभेत । एतत् । वाव । तत् । इन्द्रियम् । साक्षादिति स-अक्षात् । एव । इन्द्रियम् । अवेति । रुन्धे । ऐन्द्राग्नमित्यैन्द्र-अग्नम् ।

वा इति । अजातकल्पत्वात् । इन्द्रं खल्विति । प्रथमं सूत-वशा इन्द्रं सूत्वा जनयित्वा ततो वशाऽभवत्, तस्मादैन्द्रीमालभेतेति । यमित्यादि । इन्द्रियकामस्य यं सूत्वा वशा स्यात् तत्प्रथमवत्सं इन्द्रायालभेतेति । एतदिति प्रजारूपम् ॥

ऐन्द्राग्नमिति ॥ पुनरुत्सृष्टं जीर्णो गलितवृषणः । पुङ्गवः

पुनरुत्सृष्टमा लभेत य आ तृतीया-
त्पुरुषात्सोमं न पिबेद्विच्छिन्नो वा
एतस्य सोमपीथो यो ब्राह्मणस्सन्ना
॥ ३३ ॥ तृतीयात्पुरुषात्सोमं न
पिबतीन्द्राग्नी एव स्वेन भागधेयेनोप
धावति तावेवास्मै सोमपीथं प्र य-
च्छत उपैनꣳ सोमपीथो नमति य-

पुनरुत्सृष्टमिति पुनः–उत्सृष्टम् । एति । लभेत । यः । एति । तृतीयात् । पुरुषात् । सोमम् । न । पिबेत् । विच्छिन्न इति वि–छिन्नः । वै । एतस्य । सोमपीथ इति सोम–पीथः । यः । ब्राह्मणः । सन् । एति ॥ ३३ ॥ तृतीयात् । पुरुषात् । सोमम् । न । पिबति । इन्द्राग्नी इतीन्द्र–अग्नी । एव । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । तौ । एव । अस्मै । सोमपीथमिति सोम–पीथम् । प्रेति । यच्छतः । उपेति । एनम् । सोमपीथ इति सोम–पीथः । नमति । यत् ।

---

महर्षभार्थं गोपु मुक्त इत्येके । 'पुनरुत्सृष्टः छागः' इति भरद्वाजमतम् । आ तृतीयादिति । अभिविधावाकार इत्येके । तृतीयमपि गृहीत्वा इत्यन्ये । सोमपीथस्सोमपानम् । औणादिक-

दैन्द्रो भवतीन्द्रियं वै सोमपीथ इं-
न्द्रियमेव सोमपीथमव रुन्धे यदाग्ने-
यो भवत्याग्नेयो वै ब्राह्मणस्स्वामेव
देवतामनु सं तनोति पुनरुत्सृष्टो भव-
ति पुनरुत्सृष्ट इव ह्येतस्य ॥ ३४॥
सोमपीथस्समृद्ध्यै ब्राह्मणस्पत्यं

ऐन्द्रः । भवति । इन्द्रियम् । वै । सोमपीथ
सोम-पीथः । इन्द्रियम् । एव । सोमपीथमिति
सोम-पीथम् । अवेति । रुन्धे । यत् । आग्नेयः ।
भवति । आग्नेयः । वै । ब्राह्मणः । स्वाम् । एव ।
देवताम् । अनु । समिति । तनोति । पुनरुत्सृष्ट
इति पुनः-उत्सृष्टः । भवति । पुनरुत्सृष्ट इति पु-
नः-उत्सृष्टः । इव । हि । एतस्य ॥३४॥ सोमपीथ
इति सोम-पीथः । समृद्ध्या इति सं-ऋद्ध्यै ।
[a]ब्राह्मणस्पत्यमिति ब्राह्मणः-पत्यम् । तूपरम् । एति ।

---

रथकप्रत्ययः । इन्द्रियं वा इति । तद्धेतुत्वात्ताच्छब्द्यम् । आ-
ग्नेयो वा इति । अग्निर्देवता अस्येति सर्वत्र 'अग्निकलिभ्यां'
इति ढक् ॥

[a]ब्राह्मणस्पत्यमिति ॥ ब्रह्म परिवृढं यज्ञाख्यं कर्म तस्य
पालकोऽग्निः ब्रह्मणस्पतिः । तूपरश्शृङ्गहीनः । पुच्छहीन इत्येके ।

तूपरमा लभेताऽभिचरन्ब्रह्मणस्पति-
मेव स्वेन भागधेयेनोप धावति तस्मा
एवैनमा वृश्चति ताजगार्तिमार्छति तू-
परो भवति क्षुरपविर्वा एषा लक्ष्मी य-
त्तूपरस्समृद्ध्यै स्फ्यो यूपो भवति व-
ज्रो वै स्फ्यो वज्रमेवास्मै प्र हरति श-

लभेत । अभिचरन्नित्यभि-चरन् । ब्रह्मणः । पतिम् । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । तस्मै । एव । एनम् । एति । वृश्चति । ताजक् । आर्तिम् । एति । ऋच्छति । तूपरः । भवति । क्षुरपविरिति क्षुर-पविः । वै । एषा । लक्ष्मी । यत् । तूपरः । समृद्ध्या इति सं-ऋद्ध्यै । स्फ्यः । यूपः । भवति । वज्रः । वै । स्फ्यः । वज्रम् । एव । अस्मै । प्रेति । हरति । शरमयमिति शर-

---

अभिचरन् मारयन् शत्रून् । ब्रह्मणः छान्दसोऽलुक् । 'षष्ठ्याः पतिपुत्र' इति सत्वम् । एनमिति । अभिचर्यमाणं तस्मै ब्रह्मणस्पतये आभिमुख्येन वृश्चति । ताजक् तदानीमेव आर्तिं प्राप्नोति । 'उपसर्गादृति धातौ' इति वृद्धिः । क्षुरपविरिति । क्षुरत्वे छेदनसामर्थ्ये स्थितं पवित्वं वज्रत्वं यस्यास्सा तथोक्ता शीघ्रच्छेदिनी, लक्ष्मी लक्षणम् ॥

स्फ्य इति ॥ स्फ्याकृतिर्यूपः कार्यः स्फ्य एव वा यूपः

रमयं बर्हिश्शृणात्येवैनं वैभीदक
इध्मो भिनत्त्येवैनम् ॥ ३५ ॥
बार्हस्पत्यꣳ शितिपृष्ठमा लभेत

मयम् । बर्हिः । शृणाति । एव । एनम् । वैभीदकः । इध्मः । भिनत्ति । एव । एनम् ॥ ३५ ॥

भवत्युन्नतः पशवो जनयन्ति विन्दते-
भवत्सन्नैतस्येध्मस्त्रीणि च ॥ ५ ॥

[1]बार्हस्पत्यम् । शितिपृष्ठमिति शिति-पृष्ठम् । एति । लभेत । ग्रामकाम इति ग्राम-कामः । यः

---

कार्यः । तदानीमन्येन स्फ्यकार्यं कुर्यात् । शरमयमिति । 'नित्यं वृद्धशरादिभ्यः' इति विकारे मयट् । शरोपि पङ्कतृणविशेष तत्पर्णमयं* भवति । शॄ हिंसायाम्, 'पुंसि संज्ञायां घः' वैभीदक इति । 'पलाशादिभ्यो वा' इत्यण् । विभीदकोऽक्षद्रुमः । विभिनत्तीति विभीदः, ततस्संज्ञायां कन्, पृषोदरादित्वाद्दीर्घत्वम् ॥

इति द्वितीये प्रथमे पञ्चमोनुवाकः ॥

---

[1]बार्हस्पत्यमित्यादि ॥ उक्तशितिपृष्टः, स्वरश्च† । एवं प्रधान एकोधिकार इति । राद्धान्तकर्मण्यधिकार इति केचित् ॥

*ग-तन्म. †सं. १-८-१३

ग्रामकामो यः कामयेत पृष्ठꣳ समा-
नानाꣳ स्यामिति बृहस्पतिमेव स्वे-
न भागधेयेनोप धावति स एवैनं
पृष्ठꣳ समानानां करोति ग्राम्येव
भवति शितिपृष्ठो भवति बार्हस्प-
त्यो ह्येष देवतया समृद्धयै पौष्णꣳ
श्याममा लभेताऽन्नकामोऽन्नं वै पूषा
पूषणमेव स्वेन भागधेयेनोप धावति

कामयेत । पृष्ठम् । समानानाम् । स्याम् । इति । बृहस्पतिम् । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । एनम् । पृष्ठम् । समानानाम् । करोति । ग्रामी । एव । भवति । शितिपृष्ठ इति शिति-पृष्ठः । भवति । बार्हस्पत्यः । हि । एषः । देवतया । समृद्ध्या इति सं-ऋद्धयै । [1]पौष्णम् । श्यामम् । एति । लभेत । अन्नकाम इत्यन्न-कामः । अन्नम् । वै । पूषा । पूषणम् । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अस्मै ॥३६॥

---

[1]पौष्णमित्यादि ॥ गतम् ॥

स एवास्मै ॥ ३६ ॥ अन्नं प्र यच्छ-
न्त्यन्नाद एव भवति श्यामो भवत्ये-
तद्वा अन्नस्य रूपꣳ समृद्ध्यै मारुतं
पृश्निमा लभेताऽन्नकामोऽन्नं वै मरुतो
मरुत एव स्वेन भागधेयेनोप धाव-
ति त एवास्मा अन्नं प्र यच्छन्त्यन्नाद
एव भवति पृश्निर्भवत्येतद्वा अन्नस्य
रूपꣳ समृद्ध्या ऐन्द्रमरुणमा लभे-

अन्नम् । प्रेति । यच्छन्ति । अन्नाद इत्यन्न—अदः । एव । भवति । श्यामः । भवति । एतत् । वै । अन्नस्य । रूपम् । समृद्ध्या इति सं—ऋद्ध्यै । [3]मारुतम् । पृश्निम् । एति । लभेत । अन्नकाम इत्यन्न—कामः । अन्नम् । वै । मरुतः । मरुतः । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । ते । एव । अस्मै । अन्नम् । प्रेति । यच्छन्ति । अन्नाद इत्यन्न—अदः । एव । भवति । पृश्निः । भवति । एतत् । वै । अन्नस्य । रूपम् । समृद्ध्या इति सं—ऋद्ध्यै । [4]ऐन्द्रम् । अरुणम् । एति । लभेत । इन्द्रि-

[3]अन्नं वा इत्यादि ॥ तद्धेतुत्वात्ताच्छब्द्यम् ॥
[4]अरुण इत्यादि ॥ भूमान् महाभ्रूः ॥

तेन्द्रियकाम इन्द्रमेव ॥ ३७ ॥
स्वेन भागधेयेनोप धावति स एवा-
स्मिन्निन्द्रियं दधातीन्द्रियाव्येव भव-
त्यरुणो भ्रूमान्भवत्येतद्वा इन्द्रस्य
रूपꣳ समृद्ध्यै सावित्रमुपध्वस्तमा
लभेत सनिकामस्सविता वै प्रसवा-
नामीशे सवितारमेव स्वेनं भाग-

यकाम इतीन्द्रिय—कामः । इन्द्रम् । एव ॥ ३७ ॥
स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । अस्मिन् । इन्द्रियम् । दधाति । इन्द्रियावी । एव । भवति । अरुणः । भ्रूमानिति भ्रू—मान् । भवति । एतत् । वै । इन्द्रस्य । रूपम् । समृद्ध्या इति सं—ऋद्ध्यै । [5]सावित्रम् । उप-ध्वस्तमित्युप—ध्वस्तम् । एति । लभेत । सनिकाम इति सनि—कामः । सविता । वै । प्रसवानामिति प्र— सवानाम् । ईशे । सवितारम् । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः ।

---

[5]उपध्वस्तः विभिन्नवर्णः बहुबिन्दुचितशरीरः । सनिकाम इति । याच्नया लब्धं धनं सनिः । प्रसुवति अनुजानाति ॥

धेयेनोप धावति स एवास्मै सनिं
प्र सुवति दानकामा अस्मै प्रजा
भवन्त्युपध्वस्तो भवति सावित्रो
ह्येषः ॥ ३८ ॥ देवतया समृद्ध्यै
वैश्वदेवं वहुरूपमा लभेताऽन्नकामो
वैश्वदेवं वा अन्नं विश्वानेव देवान्थ्स्वे-
न भागधेयेनोप धावति त एवास्मा

एव । अस्मै । सनिम् । प्रेति । सुवति । दानका-
मा इति दान–कामाः । अस्मै । प्रजा इति प्र–
जाः । भवन्ति । उपध्वस्त इत्युप–ध्वस्तः । भवति ।
सावित्रः । हि । एषः ॥ ३८ ॥ देवतया । समृ-
द्ध्या इति सं–ऋद्ध्यै ।[6] वैश्वदेवमिति वैश्व–देवम् ।
वहुरूपमिति वहु–रूपम् । एति । लभेत । अन्न-
काम इत्यन्न–कामः । वैश्वदेवमिति वैश्व–देवम् ।
वै । अन्नम् । विश्वान् । एव । देवान् । स्वेन ।
भागधेयेनेति भाग–धेयेन । उपेति । धावति ।
ते । एव । अस्मै । अन्नम् । प्रेति । यच्छन्ति ।

[6] बहुरूपः नानारूपः । 'बहोर्नञ्वत्' इति नञ्वद्भावः, 'नञ्सुभ्याम्'. इत्युत्तरपदान्तोदात्तत्वम् ॥

अन्नं प्र यच्छन्त्यन्नाद एव भवति
बहुरूपो भवति बहुरूपꣳ ह्यन्नꣳ
समृद्ध्यै वैश्वदेवं बहुरूपमा लभेत
ग्रामकामो वैश्वदेवा वै सजाता वि-
श्वानेव देवान्थ्स्वेन भागधेयेनोप
धावति त एवास्मै ॥ ३१ ॥ सजा-
तान्प्र यच्छन्ति ग्राम्येव भवति बहु-
रूपो भवति बहुदेवत्यो३ ह्येष समृद्ध्यै

अन्नाद इत्यन्न–अदः । एव । भवति । बहुरूप इति बहु–रूपः । भवति । बहुरूपमिति बहु–रूपम् । हि । अन्नम् । समृद्ध्या इति सं–ऋद्ध्यै । वैश्वदेवमिति वैश्व–देवम् । बहुरूपमिति बहु–रूपम् । एति । लभेत । ग्रामकाम इति ग्राम–कामः । वैश्वदेवा इति वैश्व–देवाः । वै । सजाता इति स–जाताः । विश्वान् । एव । देवान् । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । ते । एव । अस्मै ॥ ३१ ॥ सजातानिति स–जातान् । प्रेति । यच्छन्ति । ग्रामी । एव । भवति । बहुरूप इति बहु–रूपः । भवति । बहुदेवत्य इति बहु–देव-

प्राजापत्यं तूप॒रमा ल॑भेत॒ य-
स्याऽना॑ज्ञातमिव॒ ज्योगा॒मये॑त्प्राजा-
प॒त्यो वै पुरु॑षः प्र॒जाप॑ति॒ः खलु॒ वै
तस्यं वेद॒ यस्याऽना॑ज्ञातमिव॒ ज्यो-
गा॒मय॑ति प्र॒जाप॑तिमे॒व स्वेन॑ भाग॒-
धेये॒नोप॑ धावति॒ स ए॒वैनं॒ तस्मा॑त्स्रा-

त्यः । हि । ए॒षः । समृ॑द्ध्या इति॒ सं-ऋद्ध्यै । [1]प्रा॒जा॒प॒त्यमिति॑ प्राजा-प॒त्यम् । तू॒प॒रम् । एति॑ । ल॒भे॒त । यस्य॑ । अना॑ज्ञात॒मित्यना॑-ज्ञा॒तम् । इ॒व । ज्योक् । आ॒मये॑त् । प्रा॒जा॒प॒त्य इति॑ प्राजा-प॒त्यः । वै । पुरु॑षः । प्र॒जाप॑ति॒रिति॑ प्र॒जा-प॒तिः । खलु॑ । वै । तस्य॑ । वे॒द॒ । यस्य॑ । अना॑ज्ञात॒मित्यना॑-ज्ञा॒तम् । इ॒व । ज्योक् । आ॒मय॑ति । प्र॒जाप॑ति॒मिति॑ प्र॒जा-प॒ति॒म् । ए॒व । स्वेन॑ । भा॒ग॒धेये॒नेति॑ भाग-धेयेन । उपेति॑ । धा॒व॒ति॒ । सः । ए॒व । ए॒न॒म् । तस्मा॑त् । स्रामा॑त् । मु॒ञ्च॒ति॒ । तू॒प॒रः । भ॒व॒ति॒ ।

---

[1]यस्यानाज्ञातमिति ॥ ज्योगामयेदिति । अज्ञातविशेषं यं ना[पः यमा]मय आमयेत् दीर्घकालम् । 'रुजार्थानाम्' इति षष्ठी । तस्य वेदेति । कर्मणस्सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी ।

मान्मुञ्चति तूपरो भवति प्राजापत्यो
ह्येष देवतया समृद्ध्यै ॥ ४० ॥
वषट्कारो वै गायत्रियै शिरोऽच्छिनत्-
त्तस्यै रसः पराऽपतत्तं बृहस्पतिरुपा-

प्राजापत्य इति प्राजा—पत्यः । हि । एषः । देवतया । समृद्ध्या इति सं—ऋद्ध्यै ॥ ४० ॥

अस्मा इन्द्रमेवैष संजाता विश्वानेव देवान्थ्स्वेन भागधेयेनोप धावति त एवास्मै प्राजापत्यो हि त्रीणि च ॥ ६ ॥

[1]वषट्कार इति वषट्—कारः । वै । गायत्रियै । शिरः । अच्छिनत् । तस्यै । रसः । परेति । अपतत् । तम् । बृहस्पतिः । उपेति । अगृह्णात् ।

स्नामादिति रोगनाम । यद्वा—स्नामं मन्त्रेण परलोक आह्वानं मरणमेव ॥

इति द्वितीये प्रथमे पष्ठोनुवाकः ॥

---

[1]वषट्कार इत्यादि ॥ रसः शरीरस्थं जलम् । शितिपृष्ठादिप्रशान्तानामुत्पत्तिरुच्यते । शितिपृष्ठा । उक्तमुत्तरपदप्रकृतिस्वरत्वम्* । यो द्वितीयः परापतदिति । 'यद्वृत्तान्नित्यम्' इति निघाते प्रति-

*सं. १-८-९[1].

ऽगृह्णात्सा शितिपृष्ठा वशाऽभंवद्यो
द्वितीयः पराऽपंतत्तं मित्रावरुंणावु-
पांऽगृह्णीताꣳ सा द्विरूपा वशाऽभंव-
द्यस्तृतीयः पराऽपंतत्तं विश्वें देवा
उपांगृह्णन्त्सा बंहुरूपा वशाऽभंवद्य-
श्चंतुर्थः परापंतत्स पृथिवीं प्राऽविं-
शत्तं बृहस्पतिरभि ॥ ४१ ॥ अ-

सा । शितिपृष्ठेति शिति–पृष्ठा । वशा । अभवत् । यः । द्वितीयः । परापंतदिति परा–अपंतत् । तम् । मित्रावरुंणाविति मित्रा–वरुंणौ । उपेतिं । अगृह्णीताम् । सा । द्विरूपेति द्वि–रूपा । वशा । अभवत् । यः । तृतीयः । परापंतदिति परा–अपंतत् । तम् । विश्वें । देवाः । उपेतिं । अगृह्णन् । सा । बहुरूपेति बहु–रूपा । वशा । अभवत् । यः । चतुर्थः । परापंतदिति परा–अपंतत् । सः । पृथिवीम् । प्रेतिं । अविशत् । तम् । बृहस्पतिः । अभीति ॥ ४१ ॥ अगृह्णात् । अस्तुं । एव । अयम् ।

पिष्टे, 'उदात्तवता तिङा' इति समासः । द्विरूपा शुक्लकृष्णा चे[र्णवे]ति केचित् । निरुदकादित्वादुत्तरपदान्तोदात्तत्वम् । बहुरूपा । 'बहोर्नञ्वत्' इत्युत्तरपदान्तोदात्तत्वम् । अभ्यगृह्णादिति ।

गृह्णादस्त्वेवाऽयं भोगायेति स उक्ष-
वशस्समभवद्यल्लोहितं परापतत्त-
द्रुद्र उपाऽगृह्णात्सा रौद्री रोहिणी
वशाऽभवद्बार्हस्पत्याः[2] शितिपृ-
ष्ठामा लभेत ब्रह्मवर्चसकामो बृ-

भोगाय । इति । सः । उक्षवश इत्युक्ष—वशः । सम् इति । अभवत् । यत् । लोहितम् । परापतदिति परा—अपतत् । तत् । रुद्रः । उपेति । अगृह्णात् । सा । रौद्री । रोहिणी । वशा । अभवत् । [2]बार्हस्पत्याम् । शितिपृष्ठामिति शिति—पृष्ठाम् । एति । लभेत । ब्रह्मवर्चसकाम इति ब्रह्मवर्चस—कामः । बृहस्पतिम् । एव । स्वेन । भागधेयेनेति

---

निर्गमनकाल एव ग्रहणमुपग्रहणम् । निर्गत्य भूमौ प्रविष्टस्य उपरिग्रहणमभिग्रहणम् । अस्त्वेवेति । अयं मम भोगायैवास्तु वृथा भूमौ सङ्क्रान्तो मा भूदिति । उक्षवश इति । उक्षा चासौ वशश्चेत्युक्षवशः । यथेष्टचारी वशः । मोघरेता इत्यन्ये । प्रजननाशक्त* इत्यन्ये । या गर्भं ध्वंसयन्ती† स्वैरं चरति सा वशा । रोहिणी लोहितवर्णा । 'वर्णादनुदात्तात्' इति ङीप् ॥

[2]अथ शितिपृष्ठादीनां विधानं—बार्हस्पत्यामिति ॥ गायत्र्यास्सर्वछन्दोयोनित्वात् छन्दसामित्युक्तम् । रस इवेति । आस्वादन-

---

*क—प्रजननागर्भ. †क—शब्दं ध्वंसयन्ती. ग—शब्दध्वंसयन्ती.

हृस्पतिमेव स्वेन भागधेयेनोप धा-
वति स एवास्मिन्ब्रह्मवर्चसं दधा-
ति ब्रह्मवर्चस्येव भवति छन्दसां
वा एष रसो यद्वशा रस इव ख-
लु ॥ ४२ ॥ वै ब्रह्मवर्चसं छन्द-
सामेव रसेन रसं ब्रह्मवर्चसमव
रुन्धे मैत्रावरुणीं द्विरूपामा लभेत
वृष्टिकामो मैत्रं वा अहर्वारुणी रा-

भाग–धेयेन । उपेति । धावति । सः । एव । अ-
स्मिन् । ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् । दधाति ।
ब्रह्मवर्चसीति ब्रह्म–वर्चसी । एव । भवति । छन्द-
साम् । वै । एषः । रसः । यत् । वशा । रसः ।
इव । खलु ॥ ४२ ॥ वै । ब्रह्मवर्चसमिति ब्रह्म–
वर्चसम् । छन्दसाम् । एव । रसेन । रसम् । ब्र-
ह्मवर्चसमिति ब्रह्म–वर्चसम् । अवेति । रुन्धे ।
मैत्रावरुणीमिति मैत्रा–वरुणीम् । द्विरूपामिति
द्वि–रूपाम् । एति । लभेत । वृष्टिकाम इति वृष्टि-

हेतुत्वात् । गतमन्यत् । वश इवेति । वश इन्द्रियसंयमः ।
तद्धेतुत्वात्तच्छब्दः ॥

त्रिरहोरात्राभ्यां खलु वै पुर्जन्यो वर्षति मित्रावरुणावेव स्वेन भागधेयेनोप धावति तावेवास्मा अहोरात्राभ्यां पुर्जन्यं वर्षयतश्छन्दसां वा एष रसो यद्वशा रस इव खलु वै वृष्टिश्छन्दसामेव रसेन ॥ ४३ ॥ रसं वृष्टिमव रुन्धे मैत्रावरुणीं द्विरूपामा लभेत प्रजाकां-

कामः । मैत्रम् । वै । अहः । वारुणी । रात्रिः । अहोरात्राभ्यामित्यहः—रात्राभ्याम् । खलु । वै । पर्जन्यः । वर्षति । मित्रावरुणाविति मित्रा—वरुणौ । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । तौ । एव । अस्मै । अहोरात्राभ्यामित्यहः—रात्राभ्याम् । पर्जन्यम् । वर्षयतः । छन्दसाम् । वै । एषः । रसः । यत् । वशा । रसः । इव । खलु । वै । वृष्टिः । छन्दसाम् । एव । रसेन ॥ ४३ ॥ रसम् । वृष्टिम् । अवेति । रुन्धे । मैत्रावरुणीमिति मैत्रा—वरुणीम् । द्विरूपामिति द्वि—रूपाम् । एति । लभेत । प्रजाकाम इति प्र-

मो मैत्रं वा अहर्वारुणी रात्रिरहो-
रात्राभ्यां खलु वै प्रजाः प्र जाय-
न्ते मित्रावरुणावेव स्वेन भागधेये-
नोप धावति तावेवास्मा अहोरा-
त्राभ्यां प्रजां प्र जनयतश्छन्दसां वा
एष रसो यद्वशा रस इव खलु वै
प्रजा छन्दसामेव रसेन रसं प्रजा-
मव ॥ ४४ ॥ रुन्धे वैश्वदेवीं बहु-

जा–कामः । मैत्रम् । वै । अहः । वारुणी । रात्रिः । अहोरात्राभ्यामित्यहः–रात्राभ्याम् । खलु । वै । प्रजा इति प्र–जाः । प्रेति । जायन्ते । मित्रावरुणाविति मित्रा–वरुणौ । एव । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । तौ । एव । अस्मै । अहोरात्राभ्यामित्यहः–रात्राभ्याम् । प्रजामिति प्र–जाम् । प्रेति । जनयतः । छन्दसाम् । वै । एषः । रसः । यत् । वशा । रसः । इव । खलु । वै । प्रजेति प्र–जा । छन्दसाम् । एव । रसेन । रसम् । प्रजामिति प्र–जाम् । अवेति ॥४४॥ रुन्धे । वैश्वदेवीमिति वैश्व–देवीम् । बहुरूपामिति बहु–रूपाम् । एति । लभेत । अन्न-

रूपामा लभेताऽन्नकामो वैश्वदेवं वा
अन्नं विश्वानेव देवान्त्स्वेन भागधे-
येनोप धावति त एवास्मा अन्नं
प्र यच्छन्त्यन्नाद एव भवति छन्दसां
वा एष रसो यद्वशा रस इव खलु
वा अन्नं छन्दसामेव रसेन रसम-
न्नमव रुन्धे वैश्वदेवीं वहुरूपामा ल-
भेत ग्रामकामो वैश्वदेवा वै ॥४५॥

काम इत्यन्न–कामः । वैश्वदेवमिति वैश्व–देवम् । वै । अन्नम् । विश्वान् । एव । देवान् । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । ते । एव । अस्मै । अन्नम् । प्रेति । यच्छन्ति । अन्नाद इत्यन्न–अदः । एव । भवति । छन्दसाम् । वै । एषः । रसः । यत् । वशा । रसः । इव । खलु । वै । अन्नम् । छन्दसाम् । एव । रसेन । रसम् । अन्नम् । अवेति । रुन्धे । वैश्वदेवीमिति वैश्व–देवीम् । वहुरूपामिति वहु–रूपाम् । एति । लभेत । ग्रामकाम इति ग्राम–कामः । वैश्वदेवा इति वैश्व–देवाः । वै ॥ ४५ ॥ सजाता इति स–जा-

सजाता विश्वानेव देवान्थ्स्वेन भा-
गधेयेनोप धावति त एवास्मै सजा-
तान्प्र यच्छन्ति ग्राम्येव भवति छन्द-
सां वा एष रसो यद्वशा रस इव
खलु वै सजाताश्छन्दसामेव रसेन
रसꣳ सजातानव रुन्धे बार्हस्पत्य-
मुक्षवशमा लभेत ब्रह्मवर्चसकामो
बृहस्पतिमेव स्वेन भागधेयेनोप

ताः । विश्वान् । एव । देवान् । स्वेन । भागधे-
येनेति भाग-धेयेन । उपेति । धावति । ते । एव ।
अस्मै । सजातानिति स-जातान् । प्रेति । यच्छ-
न्ति । ग्रामी । एव । भवति । छन्दसाम् । वै ।
एषः । रसः । यत् । वशा । रसः । इव । खलु ।
वै । सजाता इति स-जाताः । छन्दसाम् । एव ।
रसेन । रसम् । सजातानिति स-जातान् । अवे-
ति । रुन्धे । बार्हस्पत्यम् । उक्षवशामित्युक्ष-व-
शम् । एति । लभेत । ब्रह्मवर्चसकाम इति ब्रह्म-
वर्चस-कामः । बृहस्पतिम् । एव । स्वेन । भाग-
धेयेनेति भाग-धेयेन । उपेति । धावति । सः ।

धावति स एवास्मिन्ब्रह्मवर्चसम् ॥
॥ ४६ ॥ दधाति ब्रह्मवर्चस्येव भवति
वशं वा एष चरति यदुक्षा वश इव
खलु वै ब्रह्मवर्चसं वशेनैव वशं ब्रह्म-
वर्चसमव रुन्धे रौद्रीꣳ रोहिणीमा
लभेताभिचरन्रुद्रमेव स्वेन भागधेये-
नोप धावति तस्मा एवैनमा वृश्चति

एव । अस्मिन् । ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् ॥ ४६ ॥ दधाति । ब्रह्मवर्चसीति ब्रह्म–वर्चसी । एव । भवति । वशम् । वै । एषः । चरति । यत् । उक्षा । वशः । इव । खलु । वै । ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् । वशेन । एव । वशम् । ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् । अवेति । रुन्धे । [3]रौद्रीम् । रोहिणीम् । एति । लभेत । अभिचरन्नित्यभि–चरन् । रुद्रम् । एव । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । तस्मै । एव । एनम् । एति । वृश्चति । ताजक् । आर्तिम् । एति । ऋ-

[3]रौद्रीमित्यादि ॥ गतम्* ॥

*सं. २-१-५.

सजाता विश्वानेव देवान्त्स्वेन भा-
गधेयेनोप धावति त एवास्मै सजा-
तान्प्र यच्छन्ति ग्राम्येव भवति छन्द-
सां वा एष रसो यद्वशा रस इव
खलु वै सजाताश्छन्दसामेव रसेन
रसꣳ सजातानव रुन्धे बार्हस्पत्य-
मुक्षवशमा लभेत ब्रह्मवर्चसकामो
बृहस्पतिमेव स्वेन भागधेयेनोप

ताः । विश्वान् । एव । देवान् । स्वेन । भागधे-
येनेति भाग-धेयेन । उपेति । धावति । ते । एव ।
अस्मै । सजातानिति स-जातान् । प्रेति । यच्छ-
न्ति । ग्रामी । एव । भवति । छन्दसाम् । वै ।
एषः । रसः । यत् । वशा । रसः । इव । खलु ।
वै । सजाता इति स-जाताः । छन्दसाम् । एव ।
रसेन । रसम् । सजातानिति स-जातान् । अवे-
ति । रुन्धे । बार्हस्पत्यम् । उक्षवशामित्युक्ष-व-
शाम् । एति । लभेत । ब्रह्मवर्चसकाम इति ब्रह्म-
वर्चस-कामः । बृहस्पतिम् । एव । स्वेन । भाग-
धेयेनेति भाग-धेयेन । उपेति । धावति । सः ।

धावति स एवास्मिन्ब्रह्मवर्चसम्॥
॥४६॥दधाति ब्रह्मवर्चस्येव भवति
वशं वा एष चरति यदुक्षा वशं इव
खलु वै ब्रह्मवर्चसं वशेनैव वशं ब्रह्म-
वर्चसमवं रुन्धे रौद्रीः रोहिणीमा
लभेताभिचरन्रुद्रमेव स्वेन भागधेये-
नोप धावति तस्मा एवेनमा वृश्चति

एव । अस्मिन् । ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् ॥ ४६ ॥ दधाति । ब्रह्मवर्चसीति ब्रह्म–वर्चसी । एव । भवति । वशम् । वै । एषः । चरति । यत् । उक्षा । वशः । इव । खलु । वै । ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् । वशेन । एव । वशम् । ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् । अवेति । रुन्धे । [3]रौद्रीम् । रोहिणीम् । एति । लभेत । अभिचरन्नित्यभि–चरन् । रुद्रम् । एव । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । तस्मै । एव । एनम् । एति । वृश्चति । ताजक् । आर्तिम् । एति । ऋ-

[3]रौद्रीमित्यादि ॥ गतम्* ॥

*सं. २-१-५.

ताजगार्तिमार्छति रोहिणी भवति रौद्री ह्येषा देवतया समृद्ध्यै स्फ्यो यूपो भवति वज्रो वै स्फ्यो वज्रमे-वास्मै प्र हरति शरमयं बर्हिश्शृ-णात्येवैनं वैभीदक इध्मो भिनत्त्ये-वैनम् ॥ ४७ ॥

च्छति । रोहिणी । भवति । रौद्री । हि । एषा । देवतया । समृद्ध्या इति सं—ऋद्ध्यै । [4]स्फ्यः । यूपः । भवति । वज्रः । वै । स्फ्यः । वज्रम् । एव । अस्मै । प्रेति । हरति । शरमयमिति शर—मयम् । बर्हिः । शृणाति । एव । एनम् । वैभी-दकः । इध्मः । भिनत्ति । एव । एनम् ॥ ४७ ॥

अभि खलु वृष्टिश्छन्दसामेव रसेन प्रजा-मवं वैश्वदेवा वै ब्रह्मवर्चसं यूप एकान्न विंशतिश्च ॥ ७ ॥

---

[4]स्फ्य इत्यादि ॥ व्याख्यातम्* ॥

इति द्वितीये प्रथमे सप्तमोनुवाकः.

---

*सं. २-१-५.

असावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन्तस्मा एताꣳ सौरीꣳ श्वेतां वशामालभन्त तयैवास्मिन्नुचमदधुर्यो ब्रह्मवर्चसकामस्स्यात्तस्मा एताꣳ सौरीꣳ श्वेतां वशामा लभेताऽमुमेवादित्यꣳ स्वेन भागधेयेनोप धावति स एवास्मिन्ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भं-

[1]असौ । आदित्यः । न । वीति । अरोचत । तस्मै । देवाः । प्रायश्चित्तिम् । ऐच्छन् । तस्मै । एताम् । सौरीम् । श्वेताम् । वशाम् । एति । अलभन्त । तया । एव । अस्मिन् । रुचम् । अदधुः । यः । ब्रह्मवर्चसकाम इति ब्रह्मवर्चस-कामः । स्यात् । तस्मै । एताम् । सौरीम् । श्वेताम् । वशाम् । एति । लभेत । अमुम् । एव । आदित्यम् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अस्मिन् । ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । दधाति । ब्रह्मवर्चसीति ब्रह्म-वर्चसी । एव । भवति ।

[1]असावादित्य इत्यादि ॥ सौरीमिति । 'सूर्यतिष्यागस्त्य' इति यलोपः ॥

वति बैल्वो यूपो भवत्यसौ ॥४८॥
वा आदित्यो यतोऽजायत ततो बि-
ल्व उदतिष्ठत्सयोन्येव ब्रह्मवर्चसमव
रुन्धे ब्राह्मणस्पत्यां बभ्रुकर्णीमा
लभेताऽभिचरन्वारुणं दशकपालं
पुरस्तान्निर्वपेद्वरुणेनैव भ्रातृव्यं ग्राह-
यित्वा ब्रह्मणा स्तृणुते बभ्रुकर्णी

बैल्वः । यूपः । भवति । असौ ॥४८॥ वै । आदित्यः । यतः । अजायत । ततः । बिल्वः । उदिति । अ-तिष्ठत् । सयोनीति स-योनि । एव । ब्रह्मवर्चस-मिति ब्रह्म-वर्चसम् । अवेति । रुन्धे । [1]ब्राह्मण-स्पत्यामिति ब्राह्मणः-पत्याम् । बभ्रुकर्णीमिति बभ्रु-कर्णीम् । एति । लभेत । अभिचरन्नित्यभि-चरन् । वारुणम् । दशकपालमिति दश-कपालम् । पुरस्तात् । निरिति । वपेत् । वरुणेन । एव । भ्रातृ-व्यम् । ग्राहयित्वा । ब्रह्मणा । स्तृणुते । बभ्रुकर्णी-

---

[1]बभ्रुकर्णी कपिलश्यामकर्णी । 'नासिकोदर' इत्यादिना ङीष्, सतिशिष्टत्वात्तेन बहुव्रीहिस्वरो बाध्यते । ब्रह्मणा कर्मणा स्तृणुते छादयति हिनस्तीत्यर्थः ॥

भवत्येतद्वै ब्रह्मणो रूप॰ समृद्ध्यै स्फ्यो यूपो भवति वज्रो वै स्फ्यो वज्रमेवास्मै प्र हरति शरमयं बर्हिश्शृणाति ॥४१॥ एवैनं वैभीदक इध्मो भिनत्त्येवैनं वैष्णवं वामनमा लभेत यं यज्ञो नोपनमेद्विष्णुर्वै यज्ञो विष्णुमेव स्वेन भागधेयेनोप धाव-

ति वभ्रु–कर्णी । भवति । एतत् । वै । ब्रह्मणः । रूपम् । समृद्ध्या इति सं–ऋद्ध्यै । [3]स्फ्यः । यूपः । भवति । वज्रः । वै । स्फ्यः । वज्रम् । एव । अस्मै । प्रेति । हरति । शरमयमिति शर–मयम् । बर्हिः । शृणाति । ॥४१॥ एव । एनम् । वैभीदकः । इध्मः । भिनत्ति । एव । एनम् । [4]वैष्णवम् । वामनम् । एति । लभेत । यम् । यज्ञः । न । उपनमेदित्युप–नमेत् । विष्णुः । वै । यज्ञः । विष्णुम् । एव । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति ।

[3]स्फ्य इत्यादि ॥ व्याख्यातम्* ॥

[4]वामनो ह्रस्वाङ्गः । यं यज्ञ इति ॥ अनुष्ठातुं शक्तो न भवतीति । यज्ञो नित्यः यज्ञफलं वा यज्ञोपगच्छति ॥

*सं. २-१-५.7

वति वैल्वो यूपो भवत्यसौ ॥४८॥
वा आदित्यो यतोऽजायत ततो वि-
ल्व उदतिष्ठत्सयोन्येव ब्रह्मवर्चसमव
रुन्धे ब्राह्मणस्पत्यां वभ्रुकर्णीमा
लभेताऽभिचरन्वारुणं दशकपालं
पुरस्तान्निर्वपेद्वरुणेनैव भ्रातृव्यं ग्राह-
यित्वा ब्रह्मणा स्तृणुते वभ्रुकर्णी

वैल्वः। यूपः। भवति। असौ ॥४८॥ वै। आदित्यः। यतः। अजायत। ततः। विल्वः। उदिति। अ-तिष्ठत्। सयोनीति स-योनि। एव। ब्रह्मवर्चसमिति ब्रह्म-वर्चसम्। अवेति। रुन्धे। [2]ब्राह्मणस्पत्यामिति ब्राह्मणः-पत्याम्। वभ्रुकर्णीमिति वभ्रु-कर्णीम्। एति। लभेत। अभिचरन्नित्यंभि-चरन्। वारुणम्। दशकपालमिति दश-कपालम्। पुरस्तात्। निरिति। वपेत्। वरुणेन। एव। भ्रातृव्यम्। ग्राहयित्वा। ब्रह्मणा। स्तृणुते। वभ्रुकर्णी-

[2]वभ्रुकर्णी कपिलश्यामकर्णी। 'नासिकोदर' इत्यादिना ङीप्, सतिशिष्टत्वात्तेन वहुव्रीहिस्वरो बाध्यते। ब्रह्मणा कर्मणा स्तृणुते छादयति हिनस्तीत्यर्थः॥

भवत्येतद्वै ब्रह्मणो रूपꣳ समृद्ध्यै स्फ्यो यूपो भवति वज्रो वै स्फ्यो वज्रमेवास्मै प्र हरति शरमयं बर्हिश्शृणाति ॥४१॥ एवैनं वैभीदक इध्मो भिनत्त्येवैनं वैष्णवं वामनमा लभेत यं यज्ञो नोपनमेद्विष्णुर्वै यज्ञो विष्णुमेव स्वेन भागधेयेनोप धाव-

ति बभ्रु-कर्णी । भवति । एतत् । वै । ब्रह्मणः । रूपम् । समृद्ध्या इति सं-ऋद्ध्यै । [3]स्फ्यः । यूपः । भवति । वज्रः । वै । स्फ्यः । वज्रम् । एव । अस्मै । प्रेति । हरति । शरमयमिति शर-मयम् । बर्हिः । शृणाति । ॥४१॥ एव । एनम् । वैभीदकः । इध्मः । भिनत्ति । एव । एनम् । [4]वैष्णवम् । वामनम् । एति । लभेत । यम् । यज्ञः । न । उपनमेदित्युप-नमेत् । विष्णुः । वै । यज्ञः । विष्णुम् । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति ।

[3]स्फ्य इत्यादि ॥ व्याख्यातम्* ॥

[4]वामनो ह्रस्वाङ्गः । यं यज्ञ इति ॥ अनुष्ठातुं शक्तो न भवतीति । यज्ञो नित्यः यज्ञफलं वा यन्नोपगच्छति ॥

*सं. २-१-५.7

ति स एवास्मै यज्ञं प्र यच्छत्युपैनं
यज्ञो नमति वामनो भवति वैष्णवो
ह्येष देवतया समृद्ध्यै त्वाष्ट्रं वडव-
मा लभेत पशुकामस्त्वष्टा वै पशूनां
मिथुनानाम् ॥ ५० ॥ प्रजनयिता
त्वष्टारमेव स्वेन भागधेयेनोप धावति
स एवास्मै पशून्मिथुनान्प्र जनय-

धावति । सः । एव । अस्मै । यज्ञम् । प्रेति । यच्छति । उपेति । एनम् । यज्ञः । नमति । वामनः । भवति । वैष्णवः । हि । एषः । देवतया । समृद्ध्या इति सं-ऋद्ध्यै । त्वाष्ट्रम् । वडवम् । एति । लभेत । पशुकाम इति पशु-कामः । त्वष्टा । वै । पशूनाम् । मिथुनानाम् ॥ ५० ॥ प्रजनयितेति प्र-जनयिता । त्वष्टारम् । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अस्मै । पशून् । मिथुनान् । प्रेति । जनयति । प्र-

[1]वडवमिति ॥ यं पुमांसं मल्लमारोहन्ति वडवामिव[मः]अविद्यमानस्त्रीगुणो वडवः । पशूनां तन्मिथुनानां च त्वष्टा प्रजनयिता। प्रजा इति । प्रजाश्च पशवश्च एतस्मिन् प्रविष्टाः सूक्ष्मरूपेण

ति प्र॒जा हि वा ए॒तस्मि॑न्प॒शव॒ः प्रवि॑ष्टा॒ अथै॒ष पु॒मान्थ्सन्व॑ड॒वस्सा॑क्षादे॒व प्र॒जां प॒शूनव॑ रुन्धे मै॒त्रꣳ श्वे॒तमा ल॑भेत सङ्ग्रा॒मे संय॑त्ते सम॒यका॑मो मि॒त्रमे॒व स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ स ए॒वैनं॑ मि॒त्रेण॒ सं न॑यति॥

जेति॑ प्र—जा । हि । वै । ए॒तस्मि॒न्न् । प॒शव॑ः । प्रवि॑ष्टा॒ इति॒ प्र—वि॒ष्टाः । अथ॑ । ए॒षः । पु॒मान्न् । सन्न् । व॒ड॒वः । सा॒क्षादिति॑ स—अ॒क्षात् । ए॒व । प्र॒जामिति॑ प्र—जाम् । प॒शून् । अवेति॑ । रु॒न्धे॒ । [6]मै॒त्रम् । श्वे॒तम् । एति॑ । ल॒भे॒त॒ । स॒ङ्ग्रा॒म इति॑ सं—ग्रा॒मे । संय॑त्त॒ इति॒ सं—य॒त्ते । स॒म॒यका॑म॒ इति॑ स॒म॒य—का॒मः । मि॒त्रम् । ए॒व । स्वेन॑ । भा॒ग॒धेये॒नेति॑ भा॒ग—धेये॑न । उपेति॑ । धा॒व॒ति॒ । सः । ए॒व । ए॒न॒म् । मि॒त्रेण॑ । समिति॑ । न॒य॒ति॒ ॥ ५१ ॥ वि॒शा॒ल इति॑

यद्देवम् । अथैवं सति एषोऽश्वः पुमान् सन् वडवो भवति तस्माद्वडवस्यालम्भनेन साक्षात् अव्यवधानेनैव प्रजाः पशूंश्चावरुन्धे॥

[6]समयकाम इति ॥ आर्यैर्यैरसुहृद्भिरेकमत्यं समयः । शत्रुभिस्सन्धिरित्यन्ये । सन्नयति संश्लेषयति । विशाल इति । विक-

॥ ५१ ॥ विशालो भवति व्यवसा-
यत्येवैनं प्राजापत्यं कृष्णमा ल-
भेत वृष्टिकामः प्रजापतिर्वै वृष्ट्या
ईशे प्रजापतिमेव स्वेन भागधेये-
नोप धावति स एवास्मै पर्जन्यं
वर्षयति कृष्णो भवत्येतद्वै वृष्ट्यै
रूपꣳ रूपेणैव वृष्टिमव रुन्धे शब-

वि-शालः । भवति । व्यवसाययतीति वि-अवसा-
ययति । एव । एनम् । [7]प्राजापत्यमिति प्राजा-
पत्यम् । कृष्णम् । एति । लभेत । वृष्टिकाम इति
वृष्टि-कामः । प्रजापतिरिति प्रजा-पतिः । वै ।
वृष्ट्याः । ईशे । प्रजापतिमिति प्रजा-पतिम् ।
एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति ।
धावति । सः । एव । अस्मै । पर्जन्यम् ।
वर्षयति । कृष्णः । भवति । एतत् । वै । वृष्ट्यै ।
रूपम् । रूपेण । एव । वृष्टिम् । अवेति । रुन्धे ।
[8]शबलः । भवति । विद्युतमिति वि-द्युतम् ।

टशृङ्गः । 'वेश्शालच्छङ्कटचौ' इति शालच् । व्यवसाययत्येवेति मित्रलाभेन कृतोद्योगमेनं करोति ॥

[7]ईशे इति ॥ 'लोपस्त आत्मनेपदेषु' इति तलोपः ॥

[8]शबलो हरितवर्णः । कृष्णश्वेतवर्ण इत्येके । अथाशृङ्गः

लौ भवति विद्युतमेवास्मै जनयि-
त्वा वर्षयत्यवाशृङ्गो भवति वृष्टि-
मेवास्मै नि यच्छति ॥ ५२ ॥
वरुणꣳ सुषुवाणमन्नाद्यं नोपानम-
त्स एतां वारुणीं कृष्णां वशामप-
श्यत्ताꣳस्वायै देवताया आलभत त-

एव । अस्मै । जनयित्वा । वर्षयति । अवाशृङ्गः । भवति । वृष्टिम् । एव । अस्मै । नीति । यच्छति ॥ ५२ ॥

असौ शृणाति मिथुनानां नयति यच्छति ॥८॥

[1]वरुणम् । सुषुवाणम् । अन्नाद्यमित्यन्न–अद्यम् । न । उपेति । अनमत् । सः । एताम् । वारुणीम् । कृष्णाम् । वशाम् । अपश्यत् । ताम् । स्वायै । देवतायै । एति । अलभत । ततः । वै । तम् ।

अवनतशृङ्गः । छान्दसं दीर्घत्वम् । यद्वा—अवाक्छृङ्गः । छान्दसो वर्णलोपः, निरुदकादिर्द्रष्टव्यः । नियच्छति न्यक्पातयति ॥

इति द्वितीये प्रथमे अष्टमोनुवाकः.

---

[1]वरुणं सुषुवाणमित्यादि ॥ सुषुवाणं सुतवन्तम् । सुनोते-

तो वै तमन्नाद्यमुपानमद्यमलंमन्ना-
द्याय सन्तमन्नाद्यं नोपनमेत्स एतां
वारुणीं कृष्णां वशामा लंभेत वरु-
णमेव स्वेनं भागधेयेनोपं धावति स
एवास्मा अन्नं प्र यच्छत्यन्नादः॥५३॥
एव भंवति कृष्णा भंवति वारुणी
ह्येषा देवतंया समृद्ध्यै मैत्रꣳ श्वे-

अन्नाद्यमित्यंन्न–अद्यंम् । उपेतिं । अनमत् । यम्
अलंम् । अन्नाद्यायेत्यंन्न–अद्याय । सन्तंम् । अन्ना
द्यमित्यंन्न–अद्यंम् । न । उपनमेदित्युंप–नमेत् ।
सः । एताम् । वारुणीम् । कृष्णाम् । वशाम् ।
एतिं । लभेत । वरुंणम् । एव । स्वेनं । भागधेये-
नेतिं भाग–धेयेंन । उपेतिं । धावति । सः ।
एव । अस्मै । अन्नंम् । प्रेतिं । यच्छति । अन्नाद
इत्यंन्न–अदः॥५३॥ एव । भवति । कृष्णा । भवति ।
वारुणी । हि । एषा । देवतंया । समृद्ध्या इति सं–ऋ-
द्ध्यै । [2] मैत्रम् । श्वेतम् । एतिं । लभेत । वारुणम् । कृष्णम् ।

---

लिटः कानजादेशः । अन्नस्यादनमन्नाद्यम् । बहुलवचनाद्यत् ।
स्याग् ... । ... देवताया इति ॥

... पूर्वणीत्येके । नदीकेदारमध्ये

तमा लभेत वारुणं कृष्णमपां चौ-
षधीनां च सन्धावन्नकामो मैत्रीर्वा
ओषधयो वारुणीरापोऽपां च खलु
वा ओषधीनां च रसमुप जीवामो
मित्रावरुणावेव स्वेन भागधेयेनोप
धावति ताविवास्मा अन्नं प्र यच्छ-
तोऽन्नाद एव भवति ॥ ५४ ॥ अपां

अपाम् । च । ओषधीनाम् । च । सन्धाविति सं–धौ । अन्नकाम इत्यन्न–कामः । मैत्रीः । वै । ओषधयः । वारुणीः । आपः । अपाम् । च । खलु । वै । ओषधीनाम् । च । रसम् । उपेति । जीवामः । मित्रावरुणाविति मित्रा–वरुणौ । एव । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । तौ । एव । अस्मै । अन्नम् । प्रेति । यच्छतः । अन्नाद इत्यन्न–अदः । एव । भवति ॥ ५४ ॥ अपाम् ।

---

इत्यन्ये । मैत्रीर्वा इति । मित्रावरुणसम्बन्धिनीनामपामोषधीनां च सन्धौ मैत्रावरुणयोरालम्भात् अपामोषधीनां रसस्यान्नलक्षणस्य लाभादन्नादो भवति । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । उभयस्येति । द्विप्रकारस्य रसस्य । विशाखः शाखाद्वयात्मा ।

चौषधीनां च सुन्धावा लभत उभ-
यस्यावरुध्यै विशाखो यूपो भवति
द्वे ह्येते देवते समृद्ध्यै मैत्रꣳ श्वे-
तमा लभेत वारुणं कृष्णं ज्योगा-
मयावी यन्मैत्रो भवति मित्रेणैवा-
स्मै वरुणꣳ शमयति यद्वारुणस्सा-

च । ओषधीनाम् । च । सुन्धाविति सं-धौ । एति । लभते । उभयस्य । अवरुध्या इत्यव-रुध्यै । विशाख इति वि-शाखः । यूपः । भवति । द्वे इति । हि । एते इति । देवते इति । समृद्ध्या इति सं-ऋद्ध्यै । [3]मैत्रम् । श्वेतम् । एति । लभेत । वारुणम् । कृष्णम् । ज्योगामयावीति ज्योक्-आमयावी । यत् । मैत्रः । भवति । मित्रेण । एव । अस्मै । वरुणम् । शमयति । यत् । वारुणः । साक्षादिति स-अक्षात् । एव । एनम् । वरुणपाशादिति वरुण-पाशात् ।

उक्तमाचार्येण—' यदूर्ध्वं रशनायास्तद्विशाखं यद्वोपरात्* उभे शाखे अष्टाश्री सचपाले स्याताम् ' इति ॥

[3]ज्योगामयावी । उक्तः† । मित्रेणैवेति । मित्रेण मित्रद्वारा

*तं—यद्वोपराक्.

†सं. २-१-१५

क्षादेवैनं वरुणपाशान्मुञ्चत्युत यदी-
तासुर्भवति जीवत्येव देवा वै पुष्टिं
नाविन्दन् ॥ ५५ ॥ तां मिथुनेऽप-
श्यन्तस्यां न समराधयन्तावश्विना-
वब्रूतामावयोर्वा एषा मैतस्यां वद-

मुञ्चति । उत । यदि । इतासुरितीत–असुः । भव-
ति । जीवति । एव । [4]देवाः । वै । पुष्टिम् । न ।
अविन्दन् ॥ ५५ ॥ ताम् । मिथुने । अपश्यन् ।
तस्याम् । न । समिति । अराधयन् । तौ । अ-
श्विनौ । अब्रूताम् । आवयोः । वै । एषा । मा ।
एतस्याम् । वदध्वम् । इति । सा । अश्विनोः ।

---

वरुणस्य शान्तिः वरुणेन साक्षाद्वरुणस्य शान्तिः । ततश्च वरुणपाशाद्दीर्घामयरूपात् मुक्तः इतासुरपि गतासुरपि जीवत्येव ॥

[4]देवा वा इति ॥ पुष्टिं प्रजातिमलभमाना देवा मिथुनीभाव एव तामपश्यन् मिथुनीभाव एव पुष्टिर्भवतीत्यपश्यन् । ततो मिथुनेनापि तस्यां न समराधयन् पुष्टिसंसिद्धिर्नाभिजाता नावर्धन्तेति यावत् । अथाश्विनौ देवानब्रूतां; आवयोरेवैषा पुष्टिः, आवामेव पुष्टिहेतुः; तस्मादावाभ्यां विना यूयमेतस्यां मा विदध्वं पुष्टिविषयं किञ्चिदपि विदितुं नार्हथ । 'भासन' इत्यादिना भासने आत्मनेपदम् । ततस्सा पुष्टिरश्विनोरेवाभवत् तद्धेतुकैवाभवत् ॥

ध्वमिति साऽश्विनौ रेवाऽभंवद्यः पु-
ष्टिकामुस्स्यात्स एतामांश्विनीं यमीं
वुशामा लंभेताऽश्विनांवेव स्वेनं भा-
गधेयेनोपं धावति तावेवास्मिन्पुष्टिं
धत्तः पुष्यंति प्रजयां पुशुभिः ॥५६॥

एव । अभवत् । [5]यः । पुष्टिकाम इति पुष्टि-का-
मः । स्यात् । सः । एताम् । आश्विनीम् । यमीम् । वशाम् । एति । लभेत । अश्विनौ । एव । स्वेनं । भागधेयेनेति भाग-धेयेन । उपेति । धावति । तौ । एव । अस्मिन् । पुष्टिम् । धत्तः । पुष्यंति । प्रजयेति प्र-जया । पशुभिरिति पशु-भिः ॥ ५६ ॥

अन्नादोऽन्नाद एव भवत्यचिन्दन्पञ्चच-
त्वारिंशच्च ॥ १ ॥

[5]यमीमिति ॥ सहजातौ यमौ । तयोस्त्री यमी । गौरादित्वात् ङीप् ॥

इति द्वितीये प्रथमे नवमोनुवाकः.

आश्विनं धूम्रलँलाममा लभेत यो दुर्ब्राह्मणस्सोमं पिपासेदश्विनौ वै देवानामसोमपावास्तां तौ पश्चा सोमपीथं प्राप्नुतामश्विनावेतस्य देवता यो दुर्ब्राह्मणस्सोमं पिपासत्यश्विनावेव स्वेन भागधेयेनोप धा-

[1]आश्विनम् । धूम्रलँलाममिति धूम्र—ललामम् । एति । लभेत । यः । दुर्ब्राह्मण इति दुः—ब्राह्मणः । सोमम् । पिपासेत् । अश्विनौ । वै । देवानाम् । असोमपावित्यसोम—पौ । आस्ताम् । तौ । पश्चा । सोमपीथमिति सोम—पीथम् । प्रेति । आप्नुताम् । अश्विनौ । एतस्य । देवता । यः । दुर्ब्राह्मण इति दुः—ब्राह्मणः । सोमम् । पिपासति । अश्विनौ । एव । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । तौ । एव । अस्मै ।

[1]आश्विनमित्यादि ॥ धूम्रललामः धूम्रवर्णललामाञ्चितललाटः । दुर्ब्राह्मण इति । त्रिपुरुषं वेदवेदिविच्छेदाद्दुर्ब्राह्मणः । यथा—
यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् ।
स वै दुर्ब्राह्मणो नाम यश्चैव वृषलीपतिः* ॥ इति ।
न नियतोपासनिकस्य दौर्ब्राह्मण्यमित्याचार्यः । पश्चेति । ' पश्च-

*बौधा.

वति तावेवास्मै सोमपीथं प्र यच्छ-
त उपैनꣳ सोमपीथो नमति यद्धूम्रो
भवति धूम्रिमाणमेवास्मादप हन्ति
ललामः ॥ ५७ ॥ भवति मुखत
एवास्मिन्तेजो दधाति वायव्यं गो-
मृगमा लभेत यमजघ्निवाꣳसम-

सोमपीथमिति सोम–पीथम् । प्रेति । यच्छतः । उपेति । एनम् । सोमपीथ इति सोम–पीथः । नमति । यत् । धूम्रः । भवति । धूम्रिमाणम् । एव । अस्मात् । अपेति । हन्ति । ललामः । ॥ ५७ ॥ भवति । मुखतः । एव । अस्मिन् । तेजः । दधाति । [2]वायव्यम् । गोमृगमिति गो–मृगम् । एति । लभेत । यम् । अजघ्निवाꣳसम् ।

पश्चाच्च' इति निपात्यते । पश्चादित्यर्थः । धूम्रिमाणमिति । धूम्रत्वं मलिनत्वम् । 'वर्णदृढादिभ्यः' इतीमनिच् । ललाम इति मत्वर्थीयो लुप्यते ॥

[2]गोमृगमिति ॥ प्राणिनो बाधमानश्चरन् ग्राम्यः पुङ्गवो गोमृगः । यमिति । गवादिवधमकृवन्तं यमभिशंसेयुः तत्पापं त्वयैव कृतमिति । मिथ्यापापसंयोजनमभिशंसनम् । अपूतेत्यादि । गतम् । नैष इति । हिंस्रत्वान्न ग्राम्यत्वं युज्यते, ग्रामचरत्वादारण्यत्वं न घटते । नैवैष इति । अभिशस्तत्वाद्ग्रामे वस्तुं नार्हति, मनुष्य-

भिशꣴसेयुरपूता वा एतं वागृच्छति यमजंघ्निवाꣳसमभिशꣴसन्ति नैष ग्राम्यः पशुर्नारण्यो यद्गोमृगो नेवैष ग्रामे नारण्ये यमजंघ्निवाꣳसमभिशꣴसन्ति वायुर्वै देवानां पवित्रं वायुमेव स्वेनं भागधेयेनोप धावति स एव ॥ ५८ ॥ एनं पवयति परा-

अभिशꣴसेयुरित्यभि–शꣴसेयुः । अपूता । वै । एतम् । वाक् । ऋच्छति । यम् । अजंघ्निवाꣳसम् । अभिशꣴसन्तीत्यभि–शꣴसन्ति । न । एषः । ग्राम्यः । पशुः । न । आरण्यः । यत् । गोमृग इति गो–मृगः । न । इव । एषः । ग्रामे । न । अरण्ये । यम् । अजंघ्निवाꣳसम् । अभिशꣴसन्तीत्यभि–शꣴसन्ति । वायुः । वै । देवानाम् । पवित्रम् । वायुम् । एव । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । सः । एव । ॥ ५८ ॥ एनम् । पवयति । [3]पराची । वै । एत-

---

त्वान्नारण्ये । पवयतीति । छान्दसो वृद्ध्यभावः । केचिद्धात्वन्तरं पवयतिं छान्दसमाहुः ॥

[3]पराचीत्यादि ॥ पराची पराङ्मुखी व्युच्छन्ती उषा अस्मै

ची वा एतस्मै व्युच्छन्ती व्युच्छति
तमः पाप्मानं प्र विंशति यस्याश्वि-
ने शस्यमाने सूर्यो नाविर्भवति सौ-
र्यं वहुरूपमा लंभेतामुमेवादित्यꣳ
स्वेनं भागधेयेनोपं धावति स एवाऽ-
स्मात्तमः पाप्मानमपं हन्ति प्रती-

स्मैं । व्युच्छन्तीतिं वि-उच्छन्ती । वीतिं । उच्छति । तमः । पाप्मानंम् । प्रेतिं । विशति । यस्यं । आश्विने । शस्यमाने । सूर्यः । न । आविः । भवति । सौर्यम् । वहुरूपमितिं वहु-रूपम् । एतिं । लभेत । अमुम् । एव । आदित्यम् । स्वेनं । भागधेयेनेतिं भाग-धेयेन । उपेतिं । धावति । सः । एव । अस्मात् । तमः । पाप्मानंम् । अपेतिं । हन्ति । प्रतीची । अस्मै । व्युच्छन्तीतिं वि-

व्युच्छति भाति अस्याम्युदये व्युष्टिः प्रातिकूल्यं प्रतिपद्यते । ततश्चायं तमः पाप्मानं तमोरूपं महत्पापं वा प्रविशति । क इत्याह—यस्येत्यादि । आश्विनं नाम परस्सहस्रं शस्त्रम् । सौर्यमित्यादि । गतम् । प्रतीचीति । प्रतीची प्रत्यगञ्चना । एतमेव प्रति एतदभ्युदयाभिमुख्येन व्युच्छन्ती । व्युच्छतीति ।

व्य॑स्मै व्युच्छन्ती व्यु॑च्छत्यप॒ तम॑ः
पा॒प्मान॑ꣳ हते ॥ ५१ ॥
इन्द्रं॑ वो वि॒श्वत॒स्परीन्द्रं॑ नरो॒

उ॒च्छन्ती॑ । वीति॑ । उ॒च्छ॒ति॒ । अपेति॑ । तम॑ः ।
पा॒प्मान॑म् । ह॒ते॒ ॥ ५१ ॥

ल॒ला॒म॒स्स ए॒व पट्च॑त्वारिꣳशच्च ॥ १० ॥

[1]इन्द्र॑म् । व॒ः । वि॒श्वत॑ः । परीति॑ । [2]इन्द्र॑म् । नर॑ः ।

---

ततश्च तमः पाप्मानमपहते अपहन्ति । व्यत्ययेनात्मनेपदम् । उच्छी विवासे, 'छे न' इति तुक् ॥

इति द्वितीये प्रथमे दशमोनुवाकः

---

[1]अथ याज्याकाण्डं वैश्वदेवमेव । तत्र 'ऐन्द्रमेकादशकपालं निर्वपेन्मारुतं सप्तकपालं ग्रामकामः'* इत्यस्य द्विहविष इष्टेरैन्द्रस्य एकादशकपालस्य पुरोनुवाक्या—इन्द्रं व इति गायत्री ॥ व्याख्याता नेयम्, 'इन्द्रं वो विश्वतस्परि हवामहे'† इत्यत्र । इह त्वस्याः प्रतीकग्रहणम् । हे ऋत्विग्यजमानाः वः युष्मदर्थं विश्वेभ्यो जनेभ्य उपरि इन्द्रं हवामहे आह्वयामः अस्माकमेव केवलः स्वाम्यस्त्विति ॥

[2]तत्रैव याज्या—इन्द्रं नर इति त्रिष्टुप् ॥ इयमपि तत्रैव व्याख्याता† । इह तु प्रतीकग्रहणम् । नरो मनुष्याः इन्द्रं

---

*सं. २-२-११. †सं. १-६-१२.[1-2]

मरुतो यद्ध वो दिवो या वश्शर्म। भ-

[3]मरुतः । यत् । ह । वः । दिवः । [4]या । वः । शर्म । [5]भरेषु । इन्द्रम् । सुहवमिति सु-ह-

हवन्ते आह्वायन्ति कीदृशं? नेमधिता अर्धेन धार्यमाणं 'यत्सर्वेपामर्धमिन्द्रः प्रति' इति* । कदा? यदा पार्याः दुःखपारप्राप्तिहेतुभूताः धियः कर्माणि प्रज्ञा वा युनजते तदा इन्द्रमाह्वयन्ति। स त्वं शूरो नृपाता नृभिस्सम्भजनीयः शवसः बलाद्धेतोः चकानः स्तुतिशीलः ईदृशस्त्वमस्मान् गोमति व्रजे गोष्ठे आभज स्थापयेति ॥

[3]अथ मारुतस्य सप्तकपालस्य पुरोनुवाक्या—मरुतो यद्ध व इति गायत्री ॥ इयमपि 'वैश्वानरो नः'† इत्यत्र व्याख्याता। इह तु प्रतीकग्रहणम् । हे मरुतः वः युष्मान् सुम्नायन्तः सुखमिच्छन्तो वयं यद्यस्माद्दिवो द्युलोकात् हवामहे आह्वयामः तस्मादस्मान् शीघ्रमुपगन्तन उपगच्छतेति ॥

[4]तत्रैव याज्या—या वश्शर्मेति त्रिष्टुप् ॥ इयमपि तत्रैव व्याख्याता† । प्रतीकग्रहणमिहास्याः । हे मरुतः युष्माकं यानि-यानि शर्माणि सुखानि शशमानाय युष्मान् वृषणः वर्षितारः कामानामस्मभ्यं सुवीरं शोभनपुत्रादिकं रयिं धनं धत्तेति ॥

[5]ऐन्द्रमेकादशकपालं निर्वपेद्वैश्वदेवं द्वादशकपालं ग्रामकामः'‡ इत्यस्याः पुरोनुवाक्या—भरेष्विन्द्रमिति जगती ॥ भरेषु सङ्ग्रामेषु इन्द्रं सुहवं स्वाह्वानं आह्वानप्रयोजनस्य शीघ्रं कर्तारम् । प्रत्ययोत्पत्तेः प्रागेव 'बहुलं छन्दसि' इति सम्प्रसारणे अकारान्तल-

*सं. ५-४-८. †सं. १-५-११.[15—16] ‡सं. २-२-११.

रेष्विन्द्रꣳ सुहवꣳ हवामहेऽꣳहोमु-
चꣳ सुकृतं दैव्यं जनम्। अ॒ग्निं मि॒त्रं
वरु॑णꣳ सा॒तये॒ भग॒ं द्यावा॑पृथि॒वी
म॒रुत॑स्स्व॒स्तये॑। म॒म॒त्तु नः॒ परि॑-

वम्। ह॒वा॒म॒हे॒। अꣳहो॒मु॒च॒मित्यꣳहः-मुच॑म्। सु॒कृ॒त॒मिति॑ सु-कृत॑म्। दैव्य॑म्। जन॑म्। अ॒ग्निम्। मि॒त्रम्। वरु॑णम्। सा॒तये॑। भग॑म्। द्यावा॑पृथि॒वी इति॒ द्यावा॑-पृ॒थि॒वी। म॒रुत॑ः। स्व॒स्तये॑। [6]म॒म॒त्तु। नः॒। प॒रि॒ज्मेति॒ परि॑-ज्मा। व॒स॒

क्षणस्यानोमसङ्गात्, 'ईषद्दुस्सुषु' इति खल्, कृदुत्तरपदप्रकृतिस्वरत्वम्, लित्स्वरः। हवामहे आह्वयामः पूर्ववत्सम्प्रसारणम्। यद्वा—सुहवं सुयुद्धं युद्धे जेतृत्वात्, 'भावेनुपसर्गस्य' इति ह्वयतेरप्प्रत्यये सम्प्रसारणम्, तेनैव बहुव्रीहौ, 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम्। अंहोमुचं पापेभ्यो मोचयितारं सुकृतं सुष्ठु कर्तारम्। 'सुकर्मपाप' इति करोतेः क्विप्। दैव्यं दिवि भवम्। 'देवाद्यञञौ' इति यञ्। जनमन्यमपि द्युलोके जातम्। एकैकत्वेन तमाचष्टे—अग्निं मित्रं वरुणं सातये। 'ऊतियूति' इत्यादिना सनेः क्तिन्प्रत्ययो निपात्यते। भगं द्यावापृथिवी मरुतश्च, एतानप्याह्वयामः। किमर्थम्? सातये लाभाय अभिमतानि नो दद्युरिति। किञ्च—स्वस्तये ग्रामस्य चाविनाशार्थम्॥

[6]अथ तत्रैव याज्या—ममत्तु न इति त्रिष्टुप्॥ ममत्तु तृप्यतु

ज्मा वसुर्हा ममत्तु वातो अपां वृ-
षण्वान् । शिशीतमिन्द्रापर्वता युवं
नस्तन्नो विश्वे वरिवस्यन्तु देवाः ।

र्हा । ममत्तु । वातः । अपाम् । वृषण्वानिति वृष-
ण्वा-वान् । शिशीतम् । इन्द्रापर्वतेतीन्द्रा-पर्वता ।
युवम् । नः । तत् । नः । विश्वे । वरिवस्यन्तु ।

---

नः अस्मदर्थं अस्मान्वा अभिमतप्रदानेन तर्पयतु । परिज्मा परितस्सर्वतः भक्षयिता । 'श्वन्नुक्षन्' इत्यादिना जनेः कनिन्प्रत्ययो निपात्यते । अजेर्वा जिनातेर्वा अग्निरुच्यते । वसर्हा अग्निहोत्रशरणाभिमुखस्थानार्हो वसनार्हो । नाशब्दो लुप्यते, पृषोदरादिः, 'सुपां सुलुक्' इति सोराकारः । यद्वा—वसितॄणां छादयितॄणां काष्ठादीनां हन्ता । छान्दसो रेफोपजनः । वसेः पचाद्यचि हन्तेः क्विप् । कश्चिदाह—वासरस्य हन्ता गमयिता वसर्हा । वर्णविकारश्लेषौ छान्दसौ । आदित्य उच्यते । वातो वायुश्च ममत्तु । अपां वृषा वर्षिता पर्जन्यः तद्वान् तत्सहितो वातः । अतो मुट् । हे इन्द्रापर्वता इन्द्रापर्वतौ । पर्वतस्संवत्सर इत्येके । युवामपि नोस्मान् शिशीतं तनू कुरुतं निर्मलीकुरुतम् । श्यतेः 'बहुलं छन्दसि' इति शपश्लुः, ईत्वं च । तत्तस्माद्विश्वेपि देवाः अन्येपि जनाः नः अस्मभ्यं वरिवस्यन्तु अन्नं दातुमिच्छन्तु; वरिवोन्नम् । 'छन्दसि परेच्छायाम्' इति क्यच् ॥

प्रिया वो नाम ॥ ६० ॥ हुवे तुरा-
णाम्। आ यत्तृपन्मरुतो वावशानाः।
श्रियसे कं भानुभिस्सं मिमिक्षिरे

देवाः । [7]प्रिया । वः । नाम ॥ ६० ॥ हुवे । तुरा-
णाम् । एति । यत् । तृपत् । मरुतः । वावशा-
नाः । [8]श्रियसे । कम् । भानुभिरिति भानु-भिः ।
समिति । मिमिक्षिरे । ते । रश्मिभिरिति रश्मि-

[7]"पृश्नियै दुग्धे मैयङ्गवं चरुं निर्वपेन्मरुद्भ्यो ग्रामकामः'* इत्यस्याः पुरोनुवाक्या—प्रिया वो नामेति द्विपदा त्रिष्टुप् ॥ हे मरुतः वः युष्माकं प्रिया प्रियाणि नाम नामानि । 'सुपां सुलुक्' इति लुक् । तुराणां कार्यं प्रति त्वरमाणानां हुवे आह्वयामि । पूर्ववत्सम्प्रसारणम् । आ इति आङ्दृश्रवणाद्योग्यं क्रियापदमध्याहार्यम् । आगच्छतेत्यर्थः । आगमनं विशिनष्टि— यत् यस्मिन्नागमने वावशाना ग्रामादिकं कामयमानाः यजमानाः तृपन् तृप्येयुरिति । लेटि वचनव्यत्ययः, तृपतिस्तौदादिकः । यद्वा— तृप्तिस्तृपन् औणादिकोनिप्रत्ययः । यद्यस्माद्यूयं तृप्तिं वावशानाः कामयमानास्स्थ, तस्मादागच्छतेति, यजमानस्य वा तृप्तिं वावशानाः यस्मात्तस्मादागच्छतेति । वशेर्यङ्लुगन्ताद्व्यत्ययेनात्मनेपदम् । 'न वशः' इति सम्प्रसारणाभावः ॥

[8]तत्रैव याज्या—श्रियस इति चतुष्पदा जगती । विद्र

*सं. २-२-११.

ते र॒श्मिभि॑स्त ऋक्वभि॑स्सुखा॒दयः॑ ।
ते वाशी॑मन्त इ॒ष्मिणो॒ अभी॑रवो
वि॒द्रे प्रि॒यस्य॒ मारु॑तस्य॒ धाम्नः॑ ।
अ॒ग्निः प्र॑थ॒मो वसु॑भिर्नो अव्यात्सो-
मो॑ रु॒द्रेभि॑र॒भि र॑क्षतु॒ त्मना॑ । इन्द्रो॑

भि॒ः । ते । ऋक्व॑भि॒रित्यृक्व॑-भि॒ः । सु॒खा॒दय॒ इति॑-
सु-खा॒दयः॑ । ते । वाशी॑मन्त॒ इति॒ वाशी॑-म॒न्तः॒ ।
इ॒ष्मिणः॑ । अभी॑रवः । वि॒द्रे । प्रि॒यस्य॑ । मारु॑त-
स्य । धाम्नः॑ । अ॒ग्निः । प्र॒थ॒मः । वसु॑भि॒रिति॒ व-
सु॑-भि॒ः । नः॒ । अ॒व्या॒त् । सोमः॑ । रु॒द्रेभिः॑ । अ॒भीति॑ ।
र॒क्ष॒तु॒ । त्मना॑ । इन्द्रः॑ । म॒रुद्भि॒रिति॑ म॒रुत्-भि॒ः ।

इति चतुर्थपादादिः ॥ हे मरुतः श्रियसे सेवितुं कं जलं वृष्ट्यर्थम् । तुमर्थे असेप्रत्ययः । भानुभिः भानवद्भिः भानशीलैर्वा रश्मिभिः सूर्यस्य रश्मिभिः करैः सम्मिमिक्षिरे सङ्गच्छन्ते । मिक्षतिर्गतिकर्मा छान्दसः । यद्वा—लोके जलं श्रयितुं रश्मिभिस्सह मिमिक्षिरे मेढुमिच्छन्ति वृष्ट्या पृथिवीं सेक्तुमिच्छन्ति ते मरुतः सुखादयः सुखादनाः । खादतेरौणादिक इमत्ययः । सुष्ठु हविषां भक्षयितारो भूत्वा ऋक्वभिः सङ्गच्छन्ते । ऋक्वन्तो मन्त्रवन्तः ऋत्विज इत्यर्थः । 'छन्दसीवनिपौ' इति वनिप्, अयस्मयादित्वेन पदत्वात्कुत्वम्, भत्वाज्जश्त्वाभावः । ऋत्विग्भिस्संयुज्य हवींषि भक्षयन्तीत्यर्थः । ते मरुतो वाशीमन्तः शब्दवन्तः इष्मिणः

मुरुद्भिंर् ऋतुधा कृंणोत्वादित्यैर्नों

ऋतुधेत्यृंतु-धा । कृणोतु । आदित्यैः । नः ।

---

गमनवन्तः अभीरवः भयरहिताः प्रियस्य सर्वाभिमतस्य मारुतस्य धाम्नः मरुतां सम्बन्धिनस्स्थानविशेषस्य विद्रे लब्धवन्तः सर्वोपकारकत्वात् हविष्पसम्बन्धितया न विशिष्टं पदं प्राप्ताः । पूर्ववत्कर्मणस्सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । विन्दतेर्लिटि द्विर्वचनाभावश्छान्दसः, 'इरयो रे' इति रेभावः । यद्वा—लटि वचनव्यत्ययेनैकवचनम्, 'बहुलं छन्दसि' इति विकरणस्य लुक्, 'लोपस्त आत्मनेपदेषु' इति तलोपः, 'बहुलं छन्दसि' इति रुट्, पादादित्वान्न निहन्यते ॥

"यस्समानैर्मिथो विप्रियस्स्यात्तमेतया संज्ञान्या याजयेदग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपेत्सोमाय रुद्रवते चरुमिन्द्राय मरुत्वते पुरोडाशमेकादशकपालं वरुणायादित्यवते चरुम्'* इत्यस्याः पुरोनुवाक्या—अग्निः प्रथम इति त्रिष्टुप् ॥ अग्निः प्रथमः प्रधानः आद्यो वा वसुभिस्सहास्मानव्यात् रक्षतु । रुद्रैभी रुद्रैस्सह सोमोस्मानभिरक्षतु त्मना आत्मना आत्मनैव अन्यनिरपेक्षः । 'मन्त्रेष्वाङ्यादेरात्मनः' इत्याकारलोपः । इन्द्रो मरुद्भिस्सह ऋतुधा ऋतावृतौ तद्धर्मान् कृणोतु करोतु तयातया विधया प्रवर्तयतु । धाप्रत्ययश्छान्दसः । आदित्यैस्सह वरुणोस्मान् संशिशातु संशितव्रतान् करोतु निर्मलीकरोतु । श्यतेर्लोटि शपश्श्लुः, 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम् ॥

---

*सं. २-२-११.

वरुणस्सꣳ शिशातु । सं नो देवो वसुभिरग्निस्सम् ॥ ६१ ॥ सोमस्तनूभी रुद्रियाभिः । समिन्द्रो मरुद्भिर्यज्ञियैस्समादित्यैर्नो वरुणो अजिज्ञिपत् । यथादित्या वसुभिस्सम्ब-

वरुणः । समिति । शिशातु । [10]समिति । नः । देवः । वसुभिरिति वसु–भिः । अग्निः । समिति ॥ ६१ ॥ सोमः । तनूभिः । रुद्रियाभिः । समिति । इन्द्रः । मरुद्भिरिति मरुत्–भिः । यज्ञियैः । समिति । आदित्यैः । नः । वरुणः । अजिज्ञिपत् । [11]यथा । आदित्याः । वसुभिरिति वसु–भिः ।

---

[10]अथ याज्या—सं न इति त्रिष्टुप् पङ्क्तिप्रकारो वा ॥ नोस्मानग्निर्देवः वसुभिस्सह समजिज्ञिपत् सम्यक् ज्ञापयतु सम्यगभ्युपगच्छतु । ज्ञापयतेः छान्दसो लुङ्, छान्दसो वर्णविकारः । सोमोपि रुद्रियाभिः रुद्रार्हाभिस्तनूभिश्शरीरैः एकादशधा स्थिताभिरस्मान्समजिज्ञिपत् । इन्द्रश्च यज्ञियैर्यज्ञार्हैर्मरुद्भिस्सहास्मान्समजिज्ञिपत् । वरुणश्चादित्यैस्सहास्मान् समजिज्ञिपत् ॥

[11]अथ याज्याविकल्पः—यथेति त्रिष्टुप् ॥ यथा वसुभिस्सहादित्यास्सम्बभूवुः एकीबभूवुः, यथा वा मरुद्भिस्सह रुद्रा अभिसमजानत आभिमुख्येन सङ्गताः । एवा एवम् । 'सुपां सुलुक्'

भूवुर्मरुद्भीः रुद्रास्समजानताभि ।
एवा त्रिणामन्नहृणीयमाना विश्वे
देवास्समनसो भवन्तु । कुत्रा चि-
द्यस्य समृतौ रण्वा नरो नृपदने ।

सम्वभूवुरितिं सं–वभूवुः । मरुद्भिरितिं मरुत्–भिः । रुद्राः । समजानतेतिं सं–अजानत । अभि । एवा । त्रिणामन्निति त्रि–नामन् । अहृणीयमानाः । विश्वे । देवाः । समनस इति स–मनसः । भवन्तु । [12]कुत्र । चित् । यस्य । समृताविति सं–ऋतौ । रण्वाः । नरः । नृपदन इतिं नृ–सदने । अरहन्तः । चित् । यम् । इन्धते । सञ्जन-

इतिं डादेशः । हे त्रिणामन् त्रीणि नामानि गुह्यप्रकाशसोमनिमित्तानि यस्य स तथोक्तः । 'पूर्वपदात्संज्ञायामगः' इति णत्वम् । अग्नियजमानयोरभेद उपचर्यते अहृणीयमानाः अहीयमानाः वि[....यमानवि]भूतयः । हृणिः कण्ड्वादिः । ईदृशा विश्वे देवाः परस्परमभिसमनसो भवन्तु समानमनसो भवन्तु । 'समानस्य छन्दसि' इति सभावः ॥

[12]अथ कुत्रा चिदित्यनयोरनुष्टुभोः कुत्र चिद्विनियोगो द्रष्टव्यः केचिदाहुः—अत्रैव स्विष्टकृतः पुरोनुवाक्या याज्या चेति ॥ कुत्रा चित् कुत्र चिदपि सर्वत्रापीति यावत् । यस्य समृतौ सम्प्राप्तौ

अर्हन्तश्चिद्यमिन्धते संजनयन्ति जन्तवः । सं यदिषो वनामहे सं हव्या मानुषाणाम् । उत द्युम्नस्य शवसः ॥ ६२ ॥ ऋतस्य रश्मिमाददे । [13]यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः । आ

यन्तीति सं—जनयन्ति । जन्तवः । समिति । यत् । इषः । वनामहे । समिति । हव्या । मानुषाणाम् । उत । द्युम्नस्य । शवसः ॥ ६२ ॥ ऋतस्य । रश्मिम् । एति । ददे । यज्ञः । देवानाम् । प्रतीति । एति । सुम्नम् । आदित्यासः । भवत । मृडयन्तः । एति । वः । अर्वाची । सुमतिरिति सु—

नरो मनुष्याः रण्वा रमणा भवन्ति । रणवन्तो वा, गतिमन्तो वा । रवि गतौ, इदित्वान्नुम्, पचाद्यच् । नृषदने नरास्सीदन्ति यत्रयत्र सर्वत्र प्रदेशे । किञ्च—यमेवाग्निं अर्हन्तो महान्तः पूजयन्तो वा मनुष्याः इन्धते दीपयन्ति । किञ्च—यमग्निं जन्तवो मनुष्याः सञ्जनयन्ति आधानादिना सम्यगुत्पादयन्ति । सोऽस्माकमस्य ऋतस्य सत्यस्य रश्मिमिममग्निमाददे आददीमहे । वचनव्यत्ययः । आश्रयामह इत्यर्थः ॥

[13] 'आदित्येभ्यो भुवद्वद्भ्यश्चरुं निर्वपेद्भूतिकामः'* इत्यस्याः पुरो-

*सं. २-३-१.

वो॒ऽर्वाची॑ सुम॒तिर्व॑वृत्याद॒ꣳहोश्चि॒द्या व॑रिवो॒वित्त॑राऽस॑त् । शुचि॑र॒पस्सू॒यव॑सा॒ अद॑ब्ध॒ उप॑ क्षेति वृ॒द्धव॑यास्सु॒वीरः॑ । नकि॒ष्टꣳ२ घ्नन्त्यन्ति॑तो॒ न

म॒तिः । व॒वृ॒त्या॒त् । अ॒ꣳहोः । चि॒त् । या । व॒रि॒वो॒वित्त॒रेति॑ वरिवो॒वित्–त॒रा । अस॑त् । [11]शुचिः॑ । अ॒पः । सू॒यव॒सा इति॑ सु–यव॑साः । अद॑ब्धः । उपेति॑ । क्षे॒ति॒ । वृ॒द्धव॑या॒ इति॑ वृ॒द्ध–व॒याः । सु॒वी॒र॒ इति॑ सु–वीरः॑ । नकिः॑ । तम् । घ्न॒न्ति॒ । अन्ति॑तः । न । दू॒रात् । यः । आ॒दि॒त्याना॑म् । भव॑ति ।

नुवाक्या—यज्ञो देवानामिति त्रिष्टुप् ॥ ग्रहेषु व्याख्याता 'कदा चन'* इत्यत्र । अयमस्मदीयो यज्ञः देवानां सुम्नं सुखं प्रत्येति गच्छतु । किञ्च—हे आदित्याः यूयमप्यस्मान् मृडयन्तो भवत किञ्च—युष्माकं सुमतिश्शोभनानुग्रहात्मिका बुद्धिरर्वाची अस्मदभिमुखी आववृत्यात् आवर्तताम् । किञ्च—अंहोः ज्ञातुरिव ज्ञातृष्विव या मतिः वरिवोवित्तरा धनस्य लम्भयित्री भवेदिति ॥

[11]तत्रैव याज्या—शुचिरिति त्रिष्टुप् ॥ शुचिश्शुद्धो भूत्वा अपः कर्माणि कर्मफलानि वा उपक्षेति उपगच्छति । क्षि निवासगत्योः, 'बहुलं छन्दसि' इति शपो लुक् । सूयवसाः शोभनयवसाः शोभनांशुकाः । 'अन्येषामपि दृश्यते' इति दीर्घत्वम्, 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । अदब्धः केन चिदप्य-

*सं. १-४-२२.[3]

दूराद्य आदित्यानां भवति प्रणीतौ।
धारयन्त आदित्यासो जगत्स्था
देवा विश्वस्य भुवनस्य गोपाः।

प्रणीताविति प्र–नीतौ । [15]धारयन्तः । आदित्यासः । जगत् । स्थाः । देवाः । विश्वस्य । भुवनस्य । गोपा इति गो–पाः । दीर्घाधिय इति दीर्घ–

हिंसितः वृद्धवयाः प्रभूतान्नतमः सुवीरः शोभनपुत्रपौत्रादिकः। 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् । किञ्च—केचिदपि तं नकिः घ्नन्ति हन्तुं समर्था भवन्ति । 'युष्मत्तत्ततक्षुःपु' इति षत्वम् । अन्तितः अन्तिकेपि स्थिताः न च दूराद्दूरेपि स्थिताः। 'कादिलोपो बहुलम्' इत्यन्तिकस्य लोपः । कस्यैतदेवं भवतीत्याह—य आदित्यानामादित्यार्थं प्रणीतौ परिचरणे भवति वर्तते ॥

[15] 'आदित्येभ्यो धारयद्वद्भ्यश्चरुं निर्वपेदपरुद्धो वाऽपरुद्ध्यमानो वा'* इत्यस्याः पुरोनुवाक्या—धारयन्त इति त्रिष्टुप् ॥ जगद्धारयन्तस्स्थापयन्तः आदित्यासः आदित्याः स्थाः स्थास्नवः 'क्विप्च' इति क्विप् । देवाः देवनशीलाः विश्वस्य भुवनस्य भूतजातस्य गोपाः गोपकाः दीर्घाधियः दीर्घाण्यविच्छिन्नानि धियः कर्माणि उदयास्तमयलक्षणानि बुद्धयो वा येषान्ते दीर्घाधियः । छान्दसं पूर्वपदस्य दीर्घत्वम् । असुर्यं असुरमर्हतीति । 'छन्दसि च' इति यः । असुरस्थानीयमुदकं ददातीत्यसुरो मेघः । तेन धार्यमुदकं रक्षमाणा रक्षन्तः ऋतावानस्सत्यवन्तः यज्ञवन्तो वा । पूर्ववद्वनिप्, दीर्घत्वं च, चयमानाः चाययन्तः गमयन्तः । चय गतौ, अनु-

*सं. २-३-१.

दी॒र्घाधि॑यो॒ रक्ष॑माणाः ॥ ६३ ॥
अ॒सु॒र्य॑मृ॒तावा॑न॒श्चय॑माना ऋ॒णानि॑ ।
ति॒स्रो भूमी॑र्धा॒रय॒न्त्रीँ१रु॒त द्यू॒न्त्री-

धि॒यः । रक्ष॑माणाः ॥ ६३ ॥ अ॒सु॒र्य॑म् । ऋ॒तावा॑-
न॒ इत्यृ॒त-वा॒नः । चय॑मानाः । ऋ॒णानि॑ । [16]ति॒स्रः ।
भूमीः॑ । धा॒रय॑न् । त्रीन् । उ॒त । द्यून् । त्रीणि॑ ।

दाचेत्, भौवादिकः । ऋणानि दिव्यानि मानुषाणि; वृष्ट्या हि सस्योत्पत्तौ यजमानस्य सर्वाणि ऋणान्यपाक्रियन्ते इति । क्रियापदाभावाद्योग्यं पदमध्याह्रियेत । ईदृशा आदित्या इमं यजमानमनपरुद्धं कुर्वन्त्विति ॥

[16]तत्रैव याज्या—तिस्र इति त्रिष्टुप् ॥ तिस्रो भूमीः पृथिवीपाताळनागलोकान् पृथिव्यन्तरिक्षद्युलोकान्वा । ये इत्यध्याह्रियते । ये धारयन् धारयन्ति । धारयतेश्छान्दसो लङ्, 'बहुलं छन्दस्यमाङ्योगेपि' इत्यडभावः । उत अपि च त्रीन् द्यून् दिवः परान् द्युतिमतो लोकान् । रुत्वानुनासिकौ पूर्ववत् । किञ्च—त्रीणि व्रतानि कर्माणि लोकत्रयगोचराणि त्रीणि व्रतानि । एषां लोकानां अन्तः मध्ये सर्वलोकधारणार्थानि रसादानधारणमध्यस्थानायनलक्षणानि च कर्माणि ये धारयन्ति आदित्या विदथे यज्ञे यज्ञार्थं, उपलक्षणत्वात् सर्वव्यापारार्थं, इत्थं कुर्वन्त्येते आदित्याः यद्वा—धारयन्तीति वचनव्यत्ययेनैकवचनम् । हे धारयन्तः आदित्याः, किं तिस्रो भूमीः त्रींश्च द्यून् येषां च मध्ये त्रीणि व्रतानि यज्ञार्थं धारयन्तः हे आदित्याः वः युष्माकं महित्वं महत्त्वं माहात्म्यं, महि महत् तत्तादृशं यथोक्तलक्षणं चारु शोभनं

र्णि व्रता विदथे अन्तरेषाम्। ऋतेना-
दित्या महि वो महित्वं तदर्यमन्वरुण
मित्र चारु । त्यान्नु क्षत्रियाꣳ अव
आदित्यान् याचिषामहे। सुमृडीकाꣳ

व्रता । विदथे । अन्तः । एषाम् । ऋतेन । आदि-
त्याः । महि । वः । महित्वमिति महि—त्वम् ।
तत् । अर्यमन्न् । वरुण । मित्र । चारु । [17]त्यान् ।
नु । क्षत्रियान् । अवः । आदित्यान् । याचिषा-
महे । सुमृडीकानिति सु—मृडीकान् । अभिष्टये ।

चायनीयं वा ऋतेन सत्येन नात्र कार्या विचारणेति । इदा-
नीमादित्यानेकैकत्वेनामन्त्रयते—अर्यमन्वरुण मित्रेति । प्रदर्शनं
चैतदन्येषामपि ॥

[17]'यः परस्ताद्ग्राम्यवादी स्यात्तस्य गृहाद्व्रीहीना हरेच्छुक्लांश्च कृष्णांश्च वि चिनुयाद्ये शुक्लास्स्युस्तमादित्यं चरुं निर्वपेत्'* इत्यस्याः पुरोनुवाक्या—त्यानिति गायत्री ॥ त्यांस्तान् नु प्राक्तनान् क्षत्रियान् बलवतः—आदित्यान् अवः रक्षणं याचिषामहे याचामहे । 'सिब्बहुलं लेटि' 'लेटोडाटौ' इत्यडागमः । सुमृडीकान् सुष्ठु सुखयितॄन् । 'मृडीकादयश्च' इति निपात्यते । शोभनम्मृडीकत्वं येषामिति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्, उञ्छादिर्वा द्रष्टव्यः; पूर्ववद्रुत्वानुनासिकौ । अभिष्टये आभिमुख्येन तानिव यष्टुम् । अन्वादित्वात्पररूपत्वम् । यद्वा—अभिष्टयो यागस्तन्निमित्तम् । छान्दसो वर्णविकारः ॥

*सं. २-३-१.

अभिष्टये। न दक्षिणा वि चिकिते न सव्या न प्राचीनमादित्या नोत पश्चा। पाक्या चिद्वसवो धीर्या चित्

[18]न। दक्षिणा। वीति। चिकिते। न। सव्या। न। प्राचीनम्। आदित्याः। न। उत। पश्चा। पाक्या। चित्। वसवः। धीर्या। चित्॥ ६४॥

[18]तत्रैव याज्या—न दक्षिणेति त्रिष्टुप्॥ दक्षिणा दक्षिणं सव्या सव्यम्, उभयत्रापि 'सुपां सुलुक्' इत्याडादेशः। दक्षिणं सव्यं च न विचिकिते न विजानामि विशेषेण न जानामि, दक्षिणसव्यविभागज्ञानमपि मे नास्तीत्यर्थः। कितेतेश्छान्दसो लिट्। हे आदित्याः प्राचीनं प्राक्। 'विभाषाञ्चेरदिक्स्त्रियाम्' इति खः। पश्चा पश्चात्। 'पश्च पश्चाच' इति निपात्यते। प्राक्पश्चाच न विचिकिते इति, प्राक्प्रत्यग्विभागज्ञानमपि मे नास्तीति। यस्मादेवं तस्मादहं पाक्याचित् पाकयितव्यः, अपरिपक्वः पाक्यः बालः। 'ऋहलोर्ण्यत्' 'तित्स्वरितम्' इति स्वरितत्वम्। हे वसवः वासहेतवः धीर्या चित् धीरयितव्यः, धीर्यः कातरः इति। तत्करोति इति णिजन्ताण्ण्यत्, पूर्ववदाकारः। यथा बालाः कातराश्च स्वयं किञ्चिद्धिताहितमजानन्तः अन्यैर्हिताहितकारिभिः दैवेन वा नीयमाना भवन्ति, एवमहमपि युष्माभिर्नीतः युष्माभिस्समिद्धे [....भिरस्मद्धिते]* पथि प्रवर्तमानः। वर्णविकारश्छान्दसः, 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम्, विकृतत्वादनवग्रहः। अभयं ज्योतिर्ज्ञानं विड्वगमलक्षणमश्यां प्राप्नुयाम्। 'बहुलं छन्द-

*ख—स्समिद्धन्ते· ग—सामिद्धते.

॥ ६४ ॥ युष्मानीतो अभयं ज्योतिरश्याम् । आदित्यानामवसा नूतनेन सक्षीमहि शर्मणा शन्तमेन। अनागास्त्वे अदितित्वे तुरास इमं यज्ञं दधतु श्रोषमाणाः । इमं मे

युष्मानीतः । अभयम् । ज्योतिः । अश्याम् । [19]आदित्यानाम् । अवसा । नूतनेन । सक्षीमहि । शर्मणा । शन्तमेनेति शं–तमेन । अनागास्त्व इत्यनागाः–त्वे । अदितित्व इत्यदिति–त्वे । तुरासः । इमम् । यज्ञम् । दधतु । श्रोषमाणाः । [20]इमम् ।

सि' इति शपो लुक् । यद्वा—युष्मत्प्रसादेन अभयं अपुनरावृत्तिमयं परं ज्योतिरश्याम्, किम्पुनर्विडत्वगमादीति ॥

[19]अथ तत्रैव याज्या विकल्प्यते—आदित्यानामिति त्रिष्टुप् ॥ आदित्यानामवसा नूतनेन अभिनवेन सक्षीमहि युक्ता भूयास्म, केन? शर्मणा सुखेन शन्तमेन सुखतमेन शान्ततमेन वा । किञ्च—अनागास्त्वे निरपराधित्वे अदितित्वे खण्डनरहितत्वे च इममस्मदीयं यज्ञं दधतु स्थापयन्तु तुरासस्त्वरमाणाः । तुर त्वरासम्भ्रमयोः, 'इगुपधात्कः' 'आज्जसेरसुक्' । श्रोषमाणाः अस्माकं स्तुतीश्शृण्वन्तः । शृणोतेर्विकरणो सिप्शपौ लेटो वा व्यत्ययेन शानच् । श्रोषतिर्वा धात्वन्तरं द्रष्टव्यम् ॥

[20]अथ 'ये कृष्णास्स्युस्तं वारुणं चरुं निर्वपेत्'* इत्यस्यां,

*सं. २-३-१.

वरुण श्रुधी हवमद्या च मृडय। त्वामवस्युरा चके । तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः । अहेडमानो वरु-

मे । वरुण । श्रुधि । हवम् । अद्य । च । मृडय । त्वाम् । अवस्युः । एति । चक्रे । [21]तत् । त्वा । यामि । ब्रह्मणा । वन्दमानः । तत् । एति । शास्ते । यजमानः । हविर्भिरिति हविः—भिः । अहेडमानः । वरुण । इह । बोधि । उरुशꣳसेत्युरु—

---

पुरोनुवाक्या—इमं म इति गायत्री । श्रुधीति प्रथमपादान्तः ॥ हे वरुण इममस्मदीयं हवमाह्वानं श्रुधि शृणु । 'बहुलं छन्दसि' इति शपो लुक् । 'श्रुशृणुपृकृवृभ्य' इति धिभावः । श्रुत्वा चाद्यैव मां मृडय सुखय । यस्मादहं त्वामवस्युः रक्षणमात्मन इच्छन् । 'क्याच्छन्दसि' इत्युमत्ययः । आचके आभिमुख्येन शब्दयामि प्रार्थये । कै गै शब्दे ॥

[21]तत्रैव याज्या—तत्त्वेति त्रिष्टुप् ॥ हे वरुण ब्रह्मणा मन्त्रेण त्वामेव वन्दमानः स्तुवन्नहं तत्तदर्थम् । चतुर्थ्या लुक् । तदर्थमेव त्वां यामि भजे । यद्वा—तदेव त्वां यामि याचे। छान्दसोन्त्यलोपः, परस्मैपदं च । यजमानोपि सर्वस्तदेवाशास्ते हविर्भिश्चरुपुरोडाशादिभिः हे उरुशंस महास्तुतिक त्वमपि तामस्मदीयां विज्ञापनां इह कर्मणि अहेडमानः अक्रुद्ध्यन् बोधि बुध्यस्व । पूर्ववद्विकरणस्य लुक्, 'हुझल्भ्यो हेर्धिः', 'वा छन्दसि'

णेह वोध्युरुंशꣳस मा न आयुः प्र मोंषीः ॥ ६५ ॥

शꣳस । मा । नः । आयुः । प्रेति । मोषीः ॥ ६५ ॥

नामाग्निस्सꣳ शवसो रक्षमाणा धीयाँ चिदेकान्न पञ्चाशच्च ॥ ११ ॥

वायव्यं प्रजापतिस्ता वरुणं देवासुरा एष्वसावादित्यो दशर्षभामिन्द्रो वलस्य वार्हस्पत्यं वषट्कारोऽसौ सौरीं वरुणमाश्विनमिन्द्रं वो नर एकादश ॥ ११ ॥

वायव्यमाग्नेयीं कृष्णग्रीवीमसावादित्यो वा अहोरात्राणि वषट्कारः प्रजनयिता हुवे तुराणां पञ्चषष्टिः ॥ ६५ ॥

वायव्यं प्र मोंषीः ॥

हरिः ॐ तत्सत् ॥

---

इत्यपित्वादेव ङित्त्वाभावाद्गुणः, अन्त्यलोपश्छान्दसः । किम्पुनस्तत्प्रार्थनीयमित्याह—नः अस्माकं आयुर्दीप्तिमन्नं वा मा प्रमोषीः मा छेत्सीः तदर्थं विशं च रा*[राष्ट्रं चा]वगमयेति भावः ॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये द्वितीये काण्डे प्रथमप्रपाठके एकादशोनुवाकः.

समाप्तश्च प्रपाठकः.

---

*ग—विन श्रा

॥ हरिः ॐ ॥

प्रजापतिः प्रजा असृजत तास्सृष्टा इन्द्राग्नी अपागूहताꣳ सोऽचायत्प्रजापतिरिन्द्राग्नी वै मे प्रजा अपाघुक्षतामिति स एतमैन्द्राग्नमेकादशकपालमपश्यत्तं निरवपत्तावस्मै प्रजाः

[1]प्रजापतिरिति प्रजा–पतिः । प्रजा इति प्र–जाः । असृजत । ताः । सृष्टाः । इन्द्राग्नी इतीन्द्र–अग्नी । अपेति । अगूहताम् । सः । अचायत् । प्रजापतिरिति प्रजा–पतिः । इन्द्राग्नी इतीन्द्र–अग्नी । वै । मे । प्रजा इति प्र–जाः । अपेति । अघुक्षताम् । इति । सः । एतम् । ऐन्द्राग्नमित्यैन्द्र–अग्नम् । एकादशकपालमित्येकादश–कपालम् । अपश्यत् । तम् । निरिति । अवपत् ।

अथ द्वितीयः प्रपाठकः.

[1]अथ काम्या इष्टयो विधीयन्ते । अत्रापि प्रायिकत्वात्काम्या उच्यन्ते, नैमित्तिकानामपि जातेष्ट्यादीनां मध्ये विधानात् । तासु न पर्वादिनियमः । 'उभा वामिन्द्राग्नी'* इत्यारभ्य यथापूर्वं याज्यानुवाक्या आम्नायन्ते; वैश्वदेवमेव काण्डम् । प्रजापतिरित्यादि ॥ एतास्ताः प्रजापतिना सृष्टाः प्रजाः इन्द्राग्नी अपागूहताम् । 'ऊहु-

*सं. १-१-१४.[1]

णेह बोध्युरुशश्स मा न आयुः प्र
मोषीः ॥ ६५ ॥

शश्स । मा । नः । आयुः । प्रेति । मोषीः ॥ ६५

नामाग्निस्स॰ शवसो रक्षमाणा धीयौ
चिदेकान्न पञ्चाशच्च ॥ ११ ॥

वायव्यं प्रजापतिस्ता वरुणं देवासुरा एष्वं
वादित्यो दशर्षभामिन्द्रो वलस्यं ५०
वैषट्कारोऽसौ सौरीं वरुणमाश्विनमिन्द्रं वो
एकादश ॥ ११ ॥

वायव्यमाग्नेयीं कृष्णग्रीवीमसावादित्यो
अहोरात्राणि वषट्कारः प्रजनयिता हुवे
तुराणां पञ्चषष्टिः ॥ ६५ ॥
वायव्यं प्र मोषीः ॥
हरिः ॐ तत्सत् ॥

---

इत्यपिस्त्वादेव ङित्त्वाभावाद्गुणः, अन्त्यलोपश्छान्दसः । वि-
नीयमित्याह—नः अस्माकं आयुर्दीप्तिमन्नं वा मा
छेत्सीः तदर्थं विशं च रा*[राष्ट्रं चा]वगमयेति भावः

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये २
काण्डे प्रथमप्रपाठके एकादशोऽनु०
समाप्तश्च प्रपाठकः.

---

*ग—विशं त्वग

वेवास्मै प्रजां प्र साधयतो विन्दते
प्रजामैन्द्राग्नमेकादशकपालं निर्वपे-
त्स्पर्धमानः क्षेत्रे वा सजातेषु वे-
न्द्राग्नी एव स्वेन भागधेयेनोप धा-
वति ताभ्यामेवेन्द्रियं वीर्यं भ्रातृव्य-

भागधेयेनेति भाग-धेयेन । उपेति । धावति । तौ । एव । अस्मै । प्रजामिति प्र-जाम् । प्रेति । साधयतः । विन्दते । प्रजामिति प्र-जाम् । [1]ऐन्द्राग्नमित्यैन्द्र-अग्नम् । एकादशकपालमित्येकादश-कपालम् । निरिति । वपेत् । स्पर्धमानः । क्षेत्रे । वा । सजातेष्विति स-जातेषु । वा । इन्द्राग्नी इतीन्द्र-अग्नी । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । ताभ्याम् । एव ।

---

कन्प्रत्ययान्त आद्युदात्तः । प्रासाधयतां प्रसाधितवन्तौ । प्रजननसामग्र्यां सत्यामेव प्रजां न लभते । तस्य प्रजामिन्द्राग्नी अपागूहतामिति । प्रजाकाम इति । पूर्ववत्पूर्वपदप्रकृतिस्वरत्वम् ॥

[1]स्पर्धा संघर्षः क्षेत्रे विषये । क्षेत्रं सदपत्योत्पत्तिस्थानम् । सजाताः समानजन्मानो वशीकृताः पुरुषाः । इन्द्रियं वीर्यं च शत्रोः वृक्ते वर्जयति । इन्द्रियमिन्द्रेणात्मना सृष्टं प्रजाकारणं वीर्यं सामर्थ्यं येन सजाता वशीक्रियन्ते । पाप्मलक्षणेन च

स्य वृङ्क्ते वि पाप्मना भ्रातृव्येण जय-
तेऽप वा एतस्मादिन्द्रियं वीर्यं क्राम-
ति यस्संग्राममुपप्रयात्यैन्द्राग्नमेका-
दशकपालं निः ॥ २ ॥ वपेत्सङ्ग्रा-
ममुपप्रयास्यन्निन्द्राग्नी एव स्वेन
भागधेयेनोप धावति तावेवास्मिन्-

इन्द्रियम् । वीर्यम् । भ्रातृव्यस्य । वृङ्क्ते । वीति । पाप्मना । भ्रातृव्येण । जयते । [3]अपेति । वै । एतस्मात् । इन्द्रियम् । वीर्यम् । क्रामति । यः । सङ्ग्राममिति सं–ग्रामम् । उपप्रयातीत्युप–प्रयाति । ऐन्द्राग्नमित्यैन्द्र–अग्नम् । एकादशकपालमित्येकादश–कपालम् । निरिति ॥ २ ॥ वपेत् । सङ्ग्रामामिति सं–ग्रामम् । उपप्रयास्यन्नित्युप–प्रयास्यन् । इन्द्राग्नी इतीन्द्र–अग्नी । एव । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । तौ । एव । अस्मिन् । इन्द्रियम् । वीर्यम् । धत्तः ।

भ्रातृव्येण विजयते व्यावृत्तो भूत्वा जयं प्राप्नोतीति । 'विपराभ्यां जेः' इत्यात्मनेपदम् ॥

[3]अप वा इत्यादि ॥ सङ्ग्रामजयार्थं सङ्ग्राममुपप्रयास्यतः ॥

निन्द्रियं वीर्यं धत्तस्सहेन्द्रियेण वीर्ये-
णोप प्र याति जयति तꣳ सङ्ग्रामं वि
वा एष इन्द्रियेण वीर्येणर्ध्यते यस्स-
ङ्ग्रामं जयत्यैन्द्राग्नमेकादशकपालं
निर्वपेत्सङ्ग्रामं जित्वेन्द्राग्नी एव स्वे-
न भागधेयेनोप धावति तावेवास्मि-
न्निन्द्रियं वीर्यम् ॥ ३ ॥ धत्तो नेन्द्रि-

सह । इन्द्रियेण । वीर्येण । उप । प्रेति । याति । जयति । तम् । सङ्ग्राममिति सं–ग्रामम् । [1]वीति । वै । एषः । इन्द्रियेण । वीर्येण । ऋध्यते । यः । सङ्ग्राममिति सं–ग्रामम् । जयति । ऐन्द्राग्नमित्यैन्द्र–अग्नम् । एकादशकपालमित्येकादश–कपालम् । निरिति । वपेत् । सङ्ग्राममिति सं–ग्रामम् । जित्वा । इन्द्राग्नी इतीन्द्र–अग्नी । एव । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । तौ । एव । अस्मिन् । इन्द्रियम् । वीर्यम् ॥ ३ ॥ धत्तः । न ।

---

[1]वि वा एष इत्यादि ॥ सङ्ग्रामं जितवतः सङ्ग्रामश्रान्त्या इन्द्रियवीर्यहानिर्भवतीति ॥

येणं वीर्येण व्यृध्यतेऽप वा एतस्मा-
दिन्द्रियं वीर्यं क्रामति य एति जन-
तामैन्द्राग्नमेकादशकपालं निर्वपेज्ज-
नतामेष्यन्निन्द्राग्नी एव स्वेन भाग-
धेयेनोप धावति तावेवास्मिन्निन्द्रियं
वीर्यं धत्तस्सहेन्द्रियेण वीर्येण जन-
तामेति पौष्णं चरुमनु निर्वपेत्पूषा
वा इन्द्रियस्य वीर्यस्यानुप्रदाता पूष-

इन्द्रियेणं । वीर्येण । वीति । ऋध्यते । [b]अपेति । वै । एतस्मात् । इन्द्रियम् । वीर्यम् । क्रामति । यः । एति । जनताम् । ऐन्द्राग्नमित्यैन्द्र–अग्नम् । एकादशकपालमित्येकादश–कपालम् । निरिति । वपेत् । जनताम् । एष्यन् । इन्द्राग्नी इतीन्द्र–अग्नी । एव । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । तौ । एव । अस्मिन् । इन्द्रियम् । वीर्यम् । धत्तः । सह । इन्द्रियेण । वीर्येण । जनताम् । एति । पौष्णम् । चरुम् । अनु । निरि-

[b]अप वा इत्यादि ॥ जनतामेष्यतो वादार्थं सङ्ग्रामार्थं वा ।

र्णमेव ॥ ४ ॥ स्वेन भागधेयेनोप
धावति स एवास्मा इन्द्रियं वीर्यम-
नु प्र यच्छति क्षैत्रपत्यं चरुं निर्व-
पेज्जनतामागत्येयं वै क्षेत्रस्य पतिर-
स्यामेव प्रति तिष्ठत्यैन्द्राग्नमेकादश-

तिं । वपेत् । पूषा । वै । इन्द्रियस्य । वीर्यस्य । अनु-प्रदातेत्यनु–प्रदाता । पूषणम् । एव ॥ ४ ॥ स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । सः । एव । अस्मै । इन्द्रियम् । वीर्यम् । अनु । प्रेति । यच्छति । [6]क्षैत्रपत्यमिति क्षैत्र–पत्यम् । चरुम् । निरिति । वपेत् । जनताम् । आगत्येत्या–गत्य । इयम् । वै । क्षेत्रस्य । पतिः । अस्याम् । एव । प्रतीति । तिष्ठति । [7]ऐन्द्राग्नमित्यैन्द्र–अग्नम् । ए-

---

प्रशानादनन्तरं निर्वपणमनुनिर्वपणं, अनुक्रमेण प्रदानं अनुप्रदानम् ॥

[6]क्षैत्रपत्यं चरुं निर्वपेज्जनतामागतवतः । इयं पृथिवी क्षेत्रस्य पतिः क्षेत्रभक्तीनामधिपतित्वात् । तस्माज्जनतां गत्वा अभिमतसम्पत्त्या अनयेष्टया पृथिव्यां प्रतिष्ठितो भवति । आर्थवादिकी प्रतिष्ठा फलं, रात्रिसत्त्रन्यायात् ॥

[7]उपरिष्टादिति ॥ क्षैत्रपत्योत्तरकालमस्यां प्रतिष्ठितो भूत्वा इन्द्रियं वीर्यं चोपरिष्टात् सर्वस्मिन्नप्यागामिनि काले आत्मनि धत्ते

कपालमुपरिष्टान्निर्वपेदस्यामेव प्रतिष्ठायेन्द्रियं वीर्यमुपरिष्टादात्मन्धत्ते ॥ ५ ॥

अग्नये पथिकृते पुरोडाशमष्टाकपा-

कादशकपालमित्येकादश–कपालम् । उपरिष्टात् । निरिति । वपेत् । अस्याम् । एव । प्रतिष्ठायेति प्रति–स्थाय । इन्द्रियम् । वीर्यम् । उपरिष्टात् । आत्मन्न् । धत्ते ॥ ५ ॥

प्रजाकाम इन्द्राग्नी उपप्रयात्यैन्द्राग्नमेकादशकपालं निर्वीर्यं पूषणमेवैकान्न चत्वारिꣳशच्च ॥१॥

[1]अग्नये । पथिकृत इति पथि–कृते । पुरोडाशम् । अष्टाकपालमित्यष्टा–कपालम् । निरिति ।

---

स्थापयति । एवं सैत्रपत्यं नैमित्तिकमिति केचित्, प्रतिष्ठार्थमित्यन्ये । उपरिष्टादैन्द्राग्नं इन्द्रियवीर्यप्रतिष्ठास्थापनार्थमिति ॥

इति द्वितीये काण्डे द्वितीयप्रपाठके प्रथमोनुवाकः ॥

---

[1]अग्नये पथिकृत इत्यादि ॥ दर्शपूर्णमासाभ्यामिष्टवान् दर्शपूर्णमासयाजी । 'करणे यजः' इति णिनिः । अमावास्यापौर्णमासीशब्दौ

लं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयेत्पथो वा एषोध्यपथेनैति यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वातिपादयत्यग्निमेव पथिकृतꣳ स्वेन भागधेयेनोप धावति

वपेत् । यः । दर्शपूर्णमासयाजीति दर्शपूर्णमास–याजी । सन्न् । अमावास्यामित्यमा–वास्याम् । वा । पौर्णमासीमिति पौर्ण–मासीम् । वा । अतिपादयेदित्यति–पादयेत् । पथः । वै । एषः । अधीति । अपथेन । एति । यः । दर्शपूर्णमासयाजीति दर्शपूर्णमास–याजी । सन्न् । अमावास्यामित्यमा–वास्याम् । वा । पौर्णमासीमिति पौर्ण–मासीम् । वा । अतिपादयतीत्यति–पादयति । अग्निम् । एव । पथिकृतमिति पथि–कृतम् । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । सः । एव । एनम् । अपथात् । पन्थाम् ।

कर्मनामधेयकालवचनो । स्वकालेनानुष्ठानमतिपादनम् । पथो वा इति । पथः प्रच्युतो भूत्वा अपथमारूढः तेनैति गच्छतीति । 'पथो

स एवैनमपथात्पन्थामपि नयत्यन-
ड्वान्दक्षिणा वही ह्येष समृद्ध्या अ-
ग्नये व्रतपतये ॥ ६ ॥ पुरोडाशम-
ष्टाकपालं निर्वपेद्य आहिताग्निस्स-
न्नव्रत्यमिव चरेदग्निमेव व्रतपतिꣳ

अपीति । नयति । अनड्वान् । दक्षिणा । वही ।
हि । एषः । समृद्ध्या इति सं-ऋद्ध्यै । [2]अग्नये ।
व्रतपतय इति व्रत-पतये ॥ ६ ॥ पुरोडाशम् ।
अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपेत् ।
यः । आहिताग्निरित्याहित-अग्निः । सन् । अव्र-
त्यम् । इव । चरेत् । अग्निम् । एव । व्रतपतिमि-
ति व्रत-पतिम् । स्वेन । भागधेयेनेति भाग-धे-

विभाषा ' इति समासान्तः । अनड्वान् अनसो वोढा । पृषोदरादिः । अन्वाहार्यमासाद्यानड्वाहं दक्षिणां ददाति—वहीति । वहनप्रदेशो वहः, तद्वान् वही । तेन वहता च यागानतिपन्नतां निनीषोस्समृद्ध्यै भवत्यनड्वान् ॥

[2]अव्रत्यमिति ॥ वृत्ते*र्वशादनृतवचनादि अव्रत्यम् । 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम् । आलम्भयतीति । 'लभेश्च' इति नुम् । व्रत्य इति । चरितस्याव्रत्यत्वापनयनात्स्वयमपि व्रत्यो भवति ॥

*स—ग. वृते.

स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ स ए॒वैनं॑ व्र॒तमा ल॑म्भयति॒ व्र॒त्यो॑ भवत्य॒ग्नये॑ रक्षो॒घ्ने पु॒रो॒डाश॑म॒ष्टाक॑पालं॒ निर्व॑पे॒द्यꣳ रक्षाꣳ॑सि॒ सचे॑रन्न॒ग्निमे॒व रक्षो॒हण॒ꣳ स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ स ए॒वास्मा॒द्रक्षा॒ꣳस्यप॑ हन्ति॒

येन॑ । उपेति॑ । धा॒व॒ति॒ । सः । ए॒व । ए॒न॒म् । व्र॒तम् । एति॑ । ल॒म्भ॒य॒ति॒ । व्र॒त्यः॑ । भ॒व॒ति॒ । [3]अ॒ग्नये॑ । र॒क्षो॒घ्न इति॑ रक्षः–घ्ने । पु॒रो॒डाश॑म् । अ॒ष्टाक॑पाल॒मित्य॒ष्टा–क॒पा॒ल॒म् । निरिति॑ । व॒पे॒त् । यम् । रक्षाꣳ॑सि । सचे॑रन्न् । अ॒ग्निम् । ए॒व । र॒क्षो॒हण॒मिति॑ रक्षः–हन॑म् । स्वेन॑ । भा॒ग॒धेये॒नेति॑ भाग–धेये॑न । उपेति॑ । धा॒व॒ति॒ । सः । ए॒व । अ॒स्मा॒त् । रक्षाꣳ॑सि । अपेति॑ । ह॒न्ति॒ । निशि॑ता-

[3]सचेरन्निति ॥ षच समवाये, बाधयेरन्* इत्यर्थः । निशितायामिति । निशायां मध्यं निशिता रात्रिः, तत्रोत्थायाग्नये रक्षोघ्ने निर्वपेत् । आशु च तस्यास्साद्गुण्यसामर्थ्यादमावास्यायाः कालापनयस्स्यादिति । प्रेरते प्रकर्षेण संचरन्ति । तस्मात्संप्रेर्णानि संहत्य कृतप्रचरणान्येतानि भवन्ति । परिश्रिते परिच्छादिते रक्षसामनन्ववचारायाननुप्रवेशाय । रक्षोघ्नीति । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । रक्षोघ्नचा

*क.–बोधयेरन्.

निर्शितायां निर्वपेत् ॥ ७ ॥ निर्शि-
ताया१ँ हि रक्षा१ँसि प्रेरते सम्प्रेर्णा-
न्येवैनानि हन्ति परिश्रिते याजयेद्र-
क्षसामनन्ववचाराय रक्षोघ्नी याज्या-
नुवाक्ये भवतो रक्षसा१ँ स्तृत्या अ-

यामिति नि-शितायाम् । निरिति । वपेत् ॥ ७॥
निर्शितायामिति नि-शितायाम् । हि । रक्षा१ँ-
सि । प्रेरत इति प्र-ईरते । सम्प्रेर्णानीति सं-
प्रेर्णानि । एव । एनानि । हन्ति । परिश्रित इति
परि-श्रिते । याजयेत् । रक्षसाम् । अनन्ववचारा-
येत्यनन्‌-अवचाराय । रक्षोघ्नी इति रक्षः-घ्नी ।
याज्यानुवाक्ये इति याज्या-अनुवाक्ये । भवतः ।
रक्षसाम् । स्तृत्यै । [1]अग्नये । रुद्रवत इति रुद्र-व-

'रक्षोहणं वाजिनम्' 'वि ज्योतिषा बृहता'* इति द्वे याज्यानुवाक्ये इति । यजत्यनयेति याज्या । 'ऋहलोण्यत्', 'यजयाच' इति कुत्वाभावः । अवदानेन सहोच्यत इत्यनुवाक्या । सहार्थे नु शब्दः, पूर्ववण्ण्यत् । स्तृत्यै विनाशाय भवति । स्तरतिरेव क्तिन्नन्तः; धात्वन्तरमिति केचित् ॥

[1]रुद्रवते घोरस्वभाववते अभिचरन् । एषा वा इति । रुद्र-

*सं. १-२-१४[10-17]

अग्नये॑ रु॒द्रव॑ते पुरो॒डाश॑म॒ष्टाक॑पालं॒ निर्व॑पेदभि॒चर॑न्ने॒षा वा अ॑स्य घो॒रा त॒नूर्यद्रु॒द्रस्तस्मा॑ ए॒वैन॒मा वृ॑श्चति ता॒जगार्ति॒मार्छ॒त्यग्नये॑ सुर॒भिम॑ते पुरो॒डाश॑म॒ष्टाक॑पालं॒ निर्व॑पे॒द्यस्य॒ गावो॑ वा॒ पुरु॑षाः ॥ ८ ॥ वा॒ प्र॒मीये॑र॒न्

ते॒ । पु॒रो॒डाश॑म् । अ॒ष्टाक॑पाल॒मित्य॒ष्टा–क॒पा॒ल॒म् । निरिति॑ । व॒पे॒त् । अ॒भि॒चर॒न्नित्य॑भि–चर॒न् । ए॒षा । वै । अ॒स्य॒ । घो॒रा । त॒नूः । यत् । रु॒द्रः । तस्मै॑ । ए॒व । ए॒न॒म् । एति॑ । वृ॒श्च॒ति॒ । ता॒जक् । आर्ति॑म् । एति॑ । ऋ॒च्छ॒ति॒ । [5]अ॒ग्नये॑ । सु॒र॒भिम॑त॒ इति॑ सुर॒भि–म॒ते॒ । पु॒रो॒डाश॑म् । अ॒ष्टाक॑पाल॒मित्य॒ष्टा–क॒पा॒ल॒म् । निरिति॑ । व॒पे॒त् । यस्य॑ । गावः॑ । वा॒ । पुरु॑षाः ॥ ८ ॥ वा॒ । प्र॒मीये॑र॒न्निति॑ प्र–मीये॑र॒न् ।

---

शब्देन तद्धर्मो घोरत्वं लक्ष्यते । एषा खल्वस्याग्नेर्घोरा तनूः यद्रुद्रवद्घोरस्वभावत्वं, तस्मै तादृशघोरमूर्तये एनमभिचर्यमाणं आवृश्चति आभिमुख्येन छिनत्ति । ततस्ताजक्तदानीमेवार्तिं गच्छति । 'उपसर्गादृति धातौ' इति वृद्धिः ॥

[5]सुरभिमते सुरभिगन्धवते । यस्येति । यस्य सम्बन्धिनो गावो वा पुरुषा वा सातत्येन प्रमीयेरन् । यो वेति पृथगधि-

यो वा विभीयादेषा वा अस्य भेषज्या तनूर्यत्सुरभिमती तयैवास्मै भेषजं करोति सुरभिमते भवति पूतीगन्धस्यापहत्या अग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्सङ्ग्रामे संयत्ते भागधेयेनैवैनꣳ शमयित्वा

यः । वा । विभीयात् । एषा । वै । अस्य । भेषज्या । तनूः । यत् । सुरभिमतीति सुरभि-मती । तया । एव । अस्मै । भेषजम् । करोति । सुरभिमत इति सुरभि-मते । भवति । पूतीगन्धस्येति पूति-गन्धस्य । अपहत्या इत्यप-हत्यै । [6]अग्नये । क्षामवत इति क्षाम-वते । पुरोडाशम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपेत् । सङ्ग्राम इति सं-ग्रामे । संयत्त इति सं-यत्ते । भागधेयेनेति भाग-धेयेन । एव । एनम् । शमयित्वा । परान् । अभि । निरिति । दिशति ।

कारं केचिदाहुः । पूतीगन्धाद्भीतिः, अर्थवादे दर्शनात् । पूतीगन्धः शवगन्धः । रात्रिसत्त्रन्यायेन तन्निवृत्तिः फलम् । भेषज्या भेषजे साधुः । पूतीगन्धो दुर्गन्धः ॥

[6]क्षामवते क्षीणेन निग्राहेण तद्वते । आत्मदग्धेन पुरोडाशेन

परा॑नुभि नि॒र्दिश॑ति य॒मव॑रेषा॒ं वि-
ध्य॑न्ति॒ जीव॑ति॒ स यं परे॑षा॒ं प्र स
मी॒यते॑ जय॑ति॒ तꣳ स॒ङ्ग्राम॑म् ॥ १ ॥
अ॒भि वा ए॒ष ए॒ताँ उ॑च्यति॒ येषा॑ं पू-
र्वा॒प॒रा अ॒न्व॒ञ्चः प्र॒मीय॑न्ते पुरुषाहु॒-

यम् । अव॑रेषाम् । विध्य॑न्ति । जीव॑ति । सः । यम् । परे॑षाम् । प्रेति॑ । सः । मी॒य॒ते॒ । जय॑ति । तम् । स॒ङ्ग्राम॒मिति॑ सं-ग्राम॑म् ॥ १ ॥ ⁷अ॒भीति॑ । वै । ए॒षः । ए॒तान् । उ॒च्य॒ति॒ । येषा॑म् । पू॒र्वा॒प॒रा इति॑ पूर्व-अ॒प॒राः । अ॒न्व॒ञ्चः । प्र॒मीय॑न्त॒ इति॑ प्र-मीय॑न्ते । पु॒रु॒षा॒हु॒तिरिति॑ पुरुष-आ॒हु॒तिः ।

---

भागधेयेनात्मीयेन जनविषये अग्निं शमयित्वा परान् शत्रून् अग्नये अभिनिर्दिशति निग्राह्यत्वेन दर्शयति । ततश्चावरेषामात्मीयानाम्मध्ये यं विद्ध्यन्ति शत्रवः स जीवति परेषां शत्रूणां मध्ये यं विध्यन्ति स प्रमीयते म्रियते तथा च तं संग्रामं जयति ॥

⁷अभि वा इति ॥ एषोग्निः एतानभ्युच्यति आभिमुख्येन समवैति । उच समवाये, दैवादिकः । कान् इत्याह—येषां सम्बन्धिनः पूर्वापराः पूर्वे चापरे च ज्ञातयः अन्वञ्चः अन्वगतयः अविच्छेदेन क्रमोच्छ्वनेन पुनःपुनः म्रियेरन्, पुरुषाहुतेः प्रियतमत्वात् । नेषामिति । एषामात्मीयानां मध्ये आयुषः शतसंवत्स-

तिह्वँस्य प्रियतमाग्नये क्षामवते पु-
रोडाशमष्टाकपालं निर्वपेद्भागधेयेनै-
वैनꣳ शमयति नैषां पुरायुषोपरः प्र
मीयतेभि वा एष एतस्य गृहानुच्यति
यस्य गृहान्दहत्यग्नये क्षामवते पुरो-
डाशमष्टाकपालं निर्वपेद्भागधेयेनैवै-

हि । अस्य । प्रियतमेति प्रिय-तमा । अग्नये ।
क्षामवत इति क्षाम-वते । पुरोडाशम् । अष्टाक-
पालमित्यष्टा-कपालम् । निरिति । वपेत् । भाग-
धेयेनेति भाग-धेयेन । एव । एनम् । शमयति ।
न । एषाम् । [illegible] आयुषः । अपरः । प्रेति ।
मीयते । अभीति । वै । एषः । एतस्य । गृहान् ।
उच्यति । यस्य । गृहान् । दहति । अग्नये । क्षा-
मवत इति क्षाम-वते । पुरोडाशम् । अष्टाकपा-
लमित्यष्टा-कपालम् । निरिति । वपेत् । भागधे-
येनेति भाग-धेयेन । एव । एनम् । शयमति ।

रम्रमाणात्पुरा पूर्वं अपरो न प्रमीयते पूर्वम्मृतेम्यः कश्चिदन्यो न म्रियते ॥

[8]अभि वा इत्यादि ॥ पूर्ववत्* । नास्येति । अस्य गृहान्

*सं. २-२-२.[7]

नꣳ शमयति नास्यापरं गृहान्दं-
हति ॥ १० ॥
अग्नये कामाय पुरोडाशमष्टाकपा-
लं निर्वपेद्यं कामो नोपनमेदग्निमेव
कामꣳ स्वेन भागधेयेनोप धावति

न । अस्य । अपरम् । गृहान् । दहति ॥ १० ॥
व्रतपतये निशितायां निर्वपेत्पुरुषा-
स्सङ्ग्रामं न चत्वारि च ॥ २ ॥

[1]अग्नये । कामाय । पुरोडाशम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपेत् । यम् । कामः । न । उपनमेदित्युप-नमेत् । अग्निम् । एव । कामम् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । एनम् । कामेन । स-

अपरं न दहति पुनर्न दहति । क्रियाविशेषणत्वान्नपुंसकत्वम् ॥

इति द्वितीये द्वितीये द्वितीयः.

---

[1]अग्नये कामायेत्यादि ॥ वैदिके कर्मणि फलस्य नियतत्वात् कृष्यादिफलविषयं काममाहुः, सर्वकामविषयमन्ये ब्रुवते । स एवेति ।

स एवैनं कामेन समर्धयत्युपैनं कामो नमत्यग्नये यविष्ठाय पुरोडाशमष्टाकपालं निर्वपेत्स्पर्धमानः क्षेत्रे वा सजातेषु वाग्निमेव यविष्ठꣳ स्वेन भागधेयेनोप धावति तेनैवेन्द्रियं वीर्यं भ्रातृव्यस्य ॥ ११ ॥ युवते वि पाप्मना भ्रातृव्येण जयतेऽग्नये यवि-

मिति । अर्धयति । उपेति । एनम् । कामः । नमति । [2]अग्नये । यविष्ठाय । पुरोडाशम् । अष्टाकपालमित्यष्टा–कपालम् । निरिति । वपेत् । स्पर्धमानः । क्षेत्रे । वा । सजातेष्विति स–जातेषु । वा । अग्निम् । एव । यविष्ठम् । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । तेन । एव । इन्द्रियम् । वीर्यम् । भ्रातृव्यस्य ॥ ११ ॥ युवते । वीति । पाप्मना । भ्रातृव्येण । जयते । [3]अग्नये । यविष्ठाय । पुरोडाशम् । अष्टाकपालमित्यष्टा–क-

सोऽग्निः कामयमानमेनं कामेन समर्धयति । स च काम एनमुपनमति ॥

[2]यविष्ठः युवतमः, पृथक्कर्तृतमो वा । युवते पृथक्करोति । व्यत्ययेनात्मनेपदम् । पाप्मना भ्रातृव्येण व्यावृत्तो जयमाप्नोति ॥

[3][युवयति] अभिचरतस्सकाशाद्रक्षांसि बाधकानि पृथक्करोति

ष्ठाय पुरोडाशमष्टाकपालं नि-
र्वपेदभिचर्यमाणोऽग्निमेव यविष्ठꣳ
स्वेन भागधेयेनोप धावति स एवा-
स्माद्रक्षाꣳसि यवयति नैनमभिच-
रन्स्तृणुतेऽग्नय आयुष्मते पुरोडाश-
मष्टाकपालं निर्वपेद्यः कामयेत सर्व-
मायुरियामित्यग्निमेवायुष्मन्तꣳ स्वे-

पालम् । निरिति । वपेत् । अभिचर्यमाण इत्यभि–चर्यमाणः । अग्निम् । एव । यविष्ठम् । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । सः । एव । अस्मात् । रक्षाꣳसि । यवयति । न । एनम् । अभिचरन्नित्यभि–चरन् । स्तृणुते । [4]अग्नये । आयुष्मते । पुरोडाशम् । अष्टाकपालमित्यष्टा–कपालम् । निरिति । वपेत् । यः । कामयेत । सर्वम् । आयुः । इयाम् । इति । अग्निम् । एव । आयुष्मन्तम् । स्वेन । भागधेयेनेति भाग–धेयेन ।

---

ततः प्रच्यावयति । यौतेर्णिचि व्यत्ययेन वृद्ध्यभावः । ततश्च साधनाभावात् नैनमभिचरन् स्तृणुते न हिंसितुं क्षमते ॥

[4]अग्नय आयुष्मते इत्यादि ॥ गतम् । सर्वमायुश्श्रौतं शतं

नं भागधेयेनोप धावति स एवा-
स्मिन्न् ॥ १२ ॥ आयुर्दधाति सर्व-
मायुरेत्यग्नये जातवेदसे पुरोडाशं-
मष्टाकपालं निर्वपेद्भूतिकामोऽग्निमे-
व जातवेदसꣳ स्वेन भागधेयेनोप
धावति स एवैनं भूतिं गमयति भ-
वत्येवाग्नये रुक्मते पुरोडाशमष्टाक-

उपेति । धावति । सः । एव । अस्मिन् ॥ १२ ॥
आयुः । दधाति । सर्वम् । आयुः । एति । [5]अग्न-
ये । जातवेदस इति जात-वेदसे । पुरोडाशम् ।
अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपेत् ।
भूतिकाम इति भूति-कामः । अग्निम् । एव ।
जातवेदसमिति जात-वेदसम् । स्वेन । भागधेये-
नेति भाग-धेयेन । उपेति । धावति । सः । एव ।
एनम् । भूतिम् । गमयति । भवति । एव । [6]अग्न-
ये । रुक्मते । पुरोडाशम् । अष्टाकपालमित्यष्टा-

---

वर्षाणि । षोडश वा शतम्, छान्दोग्योपनिषदि श्रुतत्वात् ॥

[5]अग्नये जातवेदसे इति ॥ जातानां वेदिता जातधनो वा जातवेदाः ॥

पालं निर्वपेद्रुक्कामोऽग्निमेव रुक्मन्त५ स्वेन भागधेयेनोप धावति स एवास्मिन्रुचं दधाति रोचत एवाग्नये तेजस्वते पुरोडाशम् ॥ १३ ॥ अष्टाकपालं निर्वपेत्तेजस्कामोऽग्निमेव तेजस्वन्त५ स्वेन भागधेयेनोप धावति स एवास्मिन्तेजो दधाति ते-

कपालम् । निरिति । वपेत् । रुक्काम इति रुक्—कामः । अग्निम् । एव । रुक्मन्तम् । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । अस्मिन् । रुचम् । दधाति । रोचते । एव । अग्नये । तेजस्वते । पुरोडाशम् ॥ १३ ॥ अष्टाकपालमित्यष्टा—कपालम् । निरिति । वपेत् । तेजस्काम इति तेजः—कामः । अग्निम् । एव । तेजस्वन्तम् । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । अस्मिन् । तेजः ।

---

रुक्मान् दीप्तिमान् ॥

[7] तेजस्वान् औद्धत्यवान् ॥

जस्व्येव भवत्यग्नये साहन्त्याय पुरोडाशमष्टाकपालं निर्वपेत्सीक्षमाणोऽग्निमेव साहन्त्यꣳ स्वेन भागधेयेनोप धावति तेनैव सहते यꣳ सीक्षते ॥ १४ ॥

दधाति । तेजस्वी । एव । भवति । [8]अग्नये । साहन्त्याय । पुरोडाशम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपेत् । सीक्षमाणः । अग्निम् । एव । साहन्त्यम् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । तेन । एव । सहते । यम् । सीक्षते ॥ १४ ॥

भ्रातृव्यस्यास्मिन्तेजस्वते पुरोडाशमष्टात्रिꣳशच्च ॥ ३ ॥

---

[8]साहन्त्यायेति ॥ साधु अभिभविता सहन्तः । औणादिको झच् । स एव साहन्त्यः । छान्दसो यत् । सीक्षमाणः अभिभवितुमिच्छन् शत्रून् । तितिक्षितुमिच्छन् निग्राह्यानिति केचित् । सहतेस्सनि छान्दसमीत्वमभ्यासलोपश्च । धात्वन्तरं वा सीक्षतिर्द्रष्टव्यः । तेनैवेति । तेन साहन्त्येनाग्निना सहायेन सह यजमानस्सहते अभिभवति । कम्? यं सीक्षते अभिभवितुमिच्छति ॥

इति द्वितीयस्य द्वितीये तृतीयोनुवाकः.

अग्नयेऽन्नवते पुरोडाशमष्टाकपालं नि-
र्वपेद्यः कामयेतान्नवान्त्स्यामित्य-
ग्निमेवान्नवन्त२ स्वेन भागधेयेनोप
धावति स एवैनमन्नवन्तं करो-
त्यन्नवानेव भवत्यग्नयेऽन्नादाय पु-
रोडाशमष्टाकपालं निर्वपेद्यः का-

[1]अग्नये । अन्नवत इत्यन्न—वते । पुरोडाशम् । अष्टाकपालमित्यष्टा—कपालम् । निरिति । वपेत् । यः । कामयेत । अन्नवानित्यन्न—वान् । स्याम् । इति । अग्निम् । एव । अन्नवन्तमित्यन्न—वन्तम् । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । एनम् । अन्नवन्तमित्यन्न—वन्तम् । करोति । अन्नवानित्यन्न—वान् । एव । भवति । [2]अग्नये । अन्नादायेत्यन्न—अदाय । पुरोडाशम् । अष्टाकपालमित्यष्टा—कपालम् । निरिति । वपेत् । यः । कामयेत । अन्नाद इत्यन्न—

---

[1]अग्नयेन्नवत इत्यादि ॥ अन्नवान् बह्वन्नः ॥

[2]अन्नादोन्नादनशक्तियुक्तः ॥

मयेतान्नादस्स्यामित्यग्निमेवान्नाद१॰
स्वेन भागधेयेनोप धावति स एवै-
नमन्नादं करोत्यन्नादः ॥ १५ ॥ ए-
व भवत्यग्नयेन्नपतये पुरोडाशमष्टा-
कपालं निर्वपेद्यः कामयेतान्नपति-
स्स्यामित्यग्निमेवान्नपति१॰स्वेन भा-
गधेयेनोप धावति स एवैनमन्नपतिं

अदः । स्याम् । इति । अग्निम् । एव । अन्नाद-मित्यन्न—अदम् । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । एनम् । अन्नादमित्यन्न—अदम् । करोति । अन्नाद इत्यन्न—अदः ॥ १५ ॥ एव । भवति । [3]अग्नये । अन्नपतय इत्यन्न—पतये । पुरोडाशम् । अष्टाकपालमित्यष्टा—कपालम् । निरिति । वपेत् । यः । कामयेत । अन्नपतिरित्यन्न—पतिः । स्याम् । इति । अग्निम् । एव । अन्नपतिमित्यन्न—पतिम् । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । एनम् । अन्नपतिमित्यन्न—पतिम् ।

[3]अन्नपतिः अन्नस्य पालयिता ॥

करोत्यन्नपतिरेव भवत्यग्नये पर्व-
मानाय पुरोडाशमष्टाकपालं निर्व-
पेदग्नये पावकायाग्नये शुचये ज्यो-
गामयावी यदग्नये पर्वमानाय
निर्वपति प्राणमेवास्मिन्तेन दधा-
ति यदग्नये ॥ १६ ॥ पावकाय
वाचमेवास्मिन्तेन दधाति यदग्नये

करोति । अन्नपतिरित्यन्न–पतिः । एव । भवति । अग्नये । पर्वमानाय । पुरोडाशम् । अष्टाकपालमित्यष्टा–कपालम् । निरिति । वपेत् । अग्नये । पावकाय । अग्नये । शुचये । ज्योगामयावीति ज्योक्–आमयावी । यत् । अग्नये । पर्वमानाय । निर्वपतीति निः–वपति । प्राणमिति प्र–अनम् । एव । अस्मिन् । तेन । दधाति । यत् । अग्नये । ॥ १६ ॥ पावकाय । वाचम् । एव । अस्मिन् । तेन । दधाति । यत् । अग्नये । शुचये । आयुः ।

---

[1]पवमानः पापानां शोधयिता प्राणस्थितिहेतुः । पावकः पाप-विश्लेषहेतुः वाचः प्रवृत्तिहेतुः । शुचिरौज्ज्वल्यहेतुरायुषो[illegible] । ज्योगामयावी दीर्घामयः । उतेति । गतासुरपि [illegible] ज्जीवत्येव आयुरन्तरं लभते ॥

शुचय आयुरेवास्मिन्तेन दधा-
त्युत यदीतासुर्भवति जीवत्येवै-
तामेव निर्वपेच्चक्षुष्कामो यदग्नये
पवमानाय निर्वपति प्राणमेवास्मि-
न्तेन दधाति यदग्नये पावकाय वा-
चमेवास्मिन्तेन दधाति यदग्नये शु-
चये चक्षुरेवास्मिन्तेन दधाति॥१७

एव । अस्मिन्न् । तेन । दधाति । [5]उत । यदि । इतासुरितीत–असुः । भवति । जीवति । एव । एताम् । एव । निरिति । वपेत् । चक्षुष्काम इति चक्षुः–कामः । यत् । अग्नये । पवमानाय । निर्वपतीति निः–वपति । प्राणमिति प्र–अनम् । एव । अस्मिन्न् । तेन । दधाति । यत् । अग्नये । पावकाय । वाचम् । एव । अस्मिन्न् । तेन । दधाति । यत् । अग्नये । शुचये । चक्षुः । एव । अस्मिन्न् । तेन । दधाति ॥ १७ ॥ उत । यदि । अन्धः ।

[5]एतामेवेत्यादि ॥ चक्षुष्कामस्तिमिरादिदोषनिवृत्तिकामः । यद्यप्यन्धो भवति अनेन कर्मणा मपश्यत्येव मकष्टदर्शनवान् भवति ॥

उत यद्यन्धो भवति प्रैव पश्यत्यु-
ग्नये पुत्रवते पुरोडाशमुष्टाकपालं
निर्वपेदिन्द्राय पुत्रिणे पुरोडाशमेका-
दशकपालं प्रजाकामोऽग्निरेवास्मै
प्रजां प्रजनयति वृद्धामिन्द्रः प्र य-
च्छत्यग्नये रसवतेऽजक्षीरे चरुं निर्व-
पेद्यः कामयेत रसवान्थ्स्यामित्यग्नि-

भवति । प्रेति । एव । पश्यति । [6]अग्नये । पुत्रव-
त इति पुत्र–वते । पुरोडाशम् । अष्टाकपालमि-
त्यष्टा–कपालम् । निरिति । वपेत् । इन्द्राय । पु-
त्रिणे । पुरोडाशम् । एकादशकपालमित्येकादश–
कपालम् । प्रजाकाम इति प्रजा–कामः । अग्निः।
एव । अस्मै । प्रजामिति प्र–जाम् । प्रजनयती-
ति प्र–जनयति । वृद्धाम् । इन्द्रः । प्रेति । यच्छ-
ति । [7]अग्नये । रसवत इति रस–वते । अजक्षी-
र इत्यज–क्षीरे । चरुम् । निरिति । वपेत् । यः ।
कामयेत । रसवानिति रस–वान् । स्याम् । इति।

---

[6]पुत्रवान् पुत्रजननशक्तिमान् । पुत्री पुत्रवृद्धिहेतुः ॥

[7]रसवान् प्रशस्तरसोत्पत्तिहेतुः । अन्नवानित्येके । अजक्षीरे

मेव रसंवन्तꣳ स्वेन भागधेयेनोप
धावति स एवैनꣳ रसंवन्तं करोति
॥ १८ ॥ रसंवानेव भवत्यजक्षीरे
भवत्याग्नेयी वा एषा यदजा साक्षा-
देव रसमव रुन्धेऽग्नये वसुमते पुरो-
डाशमष्टाकपालं निर्वपेद्यः कामयेत
वसुमान्थ्स्यामित्यग्निमेव वसुमन्तꣳ

अग्निम् । एव । रसंवन्तमिति रसं-वन्तम् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति। सः । एव । एनम् । रसंवन्तमिति रसं-वन्तम् । करोति ॥ १८ ॥ रसंवानिति रसं-वान् । एव । भवति । अजक्षीर इत्यज-क्षीरे । भवति । आग्नेयी । वै । एषा । यत् । अजा । साक्षादिति स-अक्षात् । एव । रसम् । अवेति । रुन्धे । [1]अग्नये। वसुमत इति वसु-मते । पुरोडाशम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपेत् । यः । कामयेत । वसुमानिति वसु-मान् । स्याम् । इ-

भवतीत्यादि । गतम् । अग्नेरस्वभूता आग्नेयी । 'सर्वत्राग्निकलिभ्याम्' इति ढक् ॥

[1]वसुमान् वासहेतुभिर्वरिष्ठैर्मे नैस्तद्वान् ॥

स्वेनं भागधेयेनोपं धावति स एवै-
नं वसुंमन्तं करोति वसुंमानेव भव-
त्यग्नये वाजसृतें पुरोडाशंमष्टाकंपा-
लं निर्वंपेत्सङ्ग्रामे संयंत्ते वाजंम् ॥
११॥ वा एष सिसीर्षति यस्संङ्ग्रा-
मं जिगींषत्यग्निः खलु वै देवानाँ

ति । अग्निम् । एव । वसुंमन्तमिति वसुं–मन्तम् । स्वेनं । भागधेयेनेति भाग–धेयेन । उपेति । धावति । सः । एव । एनम् । वसुंमन्तमिति वसुं–मन्तम् । करोति । वसुंमानिति वसुं–मान् । एव । भवति । [4]अग्नये । वाजसृत इति वा-ज–सृतें । पुरोडाशंम् । अष्टाकंपालमित्यष्टा–क-पालम् । निरिति । वपेत् । सङ्ग्राम इति सं–ग्रा-मे । संयंत्त इति सं–यत्ते । वाजंम् ॥ ११ ॥ वै । एषः । सिसीर्षति । यः । सङ्ग्राममिति सं–ग्रा-मम् । जिगींषति । अग्निः । खलु । वै । देवा-नाम् । वाजसृदिति वाज–सृत् । अग्निम् । एव ।

---

[4]वाजसृते इति ॥ वाजोन्नं तत्साधनभूतात्संग्रामं [illegible] धृष्यत्वेन प्राप्नोतीति वाजसृत् । सिसीर्षति [illegible]

वाजसृदग्निमेव वाजसृतꣳ स्वेन भा-
गधेयेनोप धावति धावति वाजꣳ
हन्ति वृत्रं जयति तꣳ संग्राममथो
अग्निरिव न प्रतिधृषे भवत्यग्नयेऽ-
ग्निवते पुरोडाशमष्टाकपालं निर्वपेद्य-

वाजसृतमिति वाज-सृतम् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । धावति । वाजम् । हन्ति । वृत्रम् । जयति । तम् । सङ्ग्राममिति सं-ग्रामम् । अथो इति । अग्निः । इव । न । प्रतिधृष इति प्रति-धृषे । भवति । [10]अग्नये । अग्निवत इत्यग्नि-वते । पुरोडाशम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपेत् । यस्य ।

---

दिप्राप्त्यर्थमेव संग्रामं जिगीषति न तु जयमात्रेणास्यार्थः । धावतीत्यादि । वाजं ऊर्गर्थं संग्रामं धावति आक्रामति । वृत्रं वारकं पापादिकं च हन्ति जयति च सङ्ग्रामम् । अथो अपिच अग्निरिव अयं न प्रतिधृषे प्रतिधर्षयितुं शक्यो न भवतीत्यर्थे केन्प्रत्ययः । अप्रधृष्यो भवतीत्यर्थः ॥

[10]अग्निवान् अग्न्यन्तरेण । ‘छन्दसीरः’ इति मतुपो वत्वम् । उपरि प्रणयनमुद्धरणम् । तस्योपरि पुनः प्रणयनमभ्युद्धरणम् । प्रमादादिना तत्र तयोरेको निर्दिष्टभागः, । यस्मै हविर्निरुप्तं भवि-

स्याम्नाव॒ग्निम॑भ्यु॒द्धरे॑युर्नि॒र्दि॑ष्टभागो॒ वा ए॒तयो॑र॒न्योऽनि॑र्दिष्टभा॒गोन्यस्तौ॑ स॒म्भव॑न्तौ॒ यज॑मानम् ॥ २० ॥ अ॒भि सं भ॑वत॒स्स ई॑श्व॒र आर्ति॒मा- र्तो॒र्यद॒ग्नये॑ऽग्नि॒वते॑ नि॒र्वप॑ति भाग॒धे- ये॑नै॒वैनौ॑ शमयति॒ नार्ति॒मार्छ॑ति॒ य-

अ॒ग्नौ । अ॒ग्निम् । अ॒भ्यु॒द्धरे॑यु॒रित्य॑भि–उ॒द्धरे॑युः । नि॒र्दि॑ष्टभाग॒ इति॒ नि॒र्दि॑ष्ट–भा॒गः । वै । ए॒तयोः॑ । अ॒न्यः । अनि॑र्दिष्टभाग॒ इत्यनि॑र्दिष्ट–भा॒गः । अ॒न्यः । तौ । स॒म्भव॑न्ता॒विति॑ सं–भव॑न्तौ । यज॑मानम् ॥ २० ॥ अ॒भि । समिति॑ । भ॒व॒तः । सः । ई॒श्व॒रः । आर्ति॑म् । आर्तो॒रित्या–अ॒र्तोः । यत् । अ॒ग्नये॑ । अ॒ग्नि॒वत॒ इत्य॑ग्नि–वते॑ । नि॒र्वप॒तीति॑ निः–वप॑ति । भा॒ग॒धे॒ये॒नेति॑ भाग–धेये॑न । ए॒व । ए॒नौ॒ । श॒म॒य॒ति॒ । न । आर्ति॑म् । एति॑ । ऋ॒च्छ॒ति॒ । यज॑-

प्याति अन्यो निर्दिष्टभागः तादृशौ भिन्नस्वभावौ । तौ सम्भवन्तौ सहभवन्तो यजमानमभि एतत्कारणं यजमानमेवाभिलक्ष्य सम्भवतः अभिव्याप्नुतः । ततस्स यजमानः आर्तिं गन्तुमीश्वरस्स्यात् । 'ईश्वरे तोसुन्कसुनौ' इति तोसुन् । यदित्यादि गतम् ॥

जमानोऽग्नये ज्योतिष्मते पुरोडाश-
मष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतो-
ऽहुतेऽग्निहोत्र उद्वायेदपर आदीप्या-
नूद्धृत्य इत्याहुस्तत्तथा न कार्यं यद्भा-
गधेयमभि पूर्व उद्ध्रियते किमप-

मानः । [11]अग्नये । ज्योतिष्मते । पुरोडाशम् । अ-
ष्टाकपालमित्यष्टा-कपालम् । निरिति । वपेत् ।
यस्य । अग्निः । उद्धृत इत्युत्-हृतः । अहुते । अग्नि-
होत्र इत्यग्नि-होत्रे । उद्वायेदित्युत्-वायेत् । अपरः ।
आदीप्येत्या-दीप्य । अनूद्धृत्य इत्यनु-उद्धृत्यः । इति ।
आहुः । तत् । तथा । न । कार्यम् । यत् । भाग-
धेयमिति भाग-धेयम् । अभीति । पूर्वः । उद्ध्रि-
यत इत्युत्-ह्रियते । किम् । अपरः । अभि ।

---

[11]ज्योतिष्मान् ज्योतिषा युक्तः । यस्य यजमानस्य अग्नि-
होत्रार्थमुद्धृतोऽग्निः अग्निहोत्रहोमात्प्रागेव उद्वायेदुद्गच्छेत् विनश्येत्,
तदापरोऽग्निरादीप्यः न तु मथित्वानूद्धृत्यः, उद्वापनानन्तरं प्रणेय
इत्याहुः । एतद्दूषयति—तत्तथा न कर्तव्यम् । हेतुमाह—यद्भा-
गधेयमभिलक्ष्य पूर्वोऽग्निरुद्ध्रियते प्रणीयते, किं तदेव भागमभिलक्ष्य
अपरोऽग्निरुद्ध्रियते? किमेतद्युज्यते? । तर्हि कथं कर्तव्यमित्याह—
तान्येवावक्षाणानि दग्धकाष्ठानि येभ्यः पूर्व उदभवत् । क्षै जै षै

रोभ्युत् ॥ २१ ॥ ह्रियेतेति तान्ये- वावक्षाणानि सन्निधार्य मन्थेदितः प्रथमं जज्ञे अग्निस्स्वाद्योनेरधि जा- तवेदाः । स गायत्रिया त्रिष्टुभा ज- गत्या देवेभ्यो हव्यं वहतु प्रजान- न्निति छन्दोभिरेवैनꣳ स्वाद्योनेः प्र

उदिति ॥ २१ ॥ ह्रियेत । इति । तानि । एव । अवक्षाणानीत्यव—क्षाणानि । सन्निधायेति सं—नि- धाय । मन्थेत् । इतः । प्रथमम् । जज्ञे । अग्निः । स्वात् । योनेः । अधीति । जातवेदा इति जात— वेदाः । सः । गायत्रिया । त्रिष्टुभा । जगत्या । देवेभ्यः । हव्यम् । वहतु । प्रजानन्निति प्र—जानन् । इति । छन्दोभिरितिछन्दः—भिः । एव । ए- नम् । स्वात् । योनेः । प्रेति । जनयति । एषः ।

---

क्षये, तस्माल्ल्युट् । तानि सन्निधाय मन्थेत् । इतः प्रथमं जज्ञे इति त्रिष्टुप् । पङ्क्तिप्रकारोयमिति केचित् । एवं हि स एवाग्नि- रवस्थितो भवति । तदेवाह—छन्दोभिरिति । सम्यङ्निधानं सन्नि- धानं, मथनानुगुणं निधाय तेष्वेव मथनेनाग्निमुत्पादयेदिति । तादृशाव- क्षाणाभावे तद्रस्मनापि संस्पृश्य मन्थेदिति प्रदर्शनार्थमेवकार-

जनयत्येष वाव सोऽग्निरित्याहुर्ज्यो-
तिस्त्वा अस्य परापतितमिति यद-
ग्नये ज्योतिष्मते निर्वपति यदेवा-

वाव । सः । अग्निः । इति । आहुः । ज्योतिः ।
तु । वै । अस्य । परापतितमिति परा-पतितम् ।
इति । यत् । अग्नये । ज्योतिष्मते । निर्वपतीति
निः-वपति । यत् । एव । अस्य । ज्योतिः । परा-

ग्रहणम् । छन्दोभिर्गायत्र्यादिभिः स्वाद्योनेः कारणादवक्षाणात्मकात् प्रजनयत्यग्निं, अग्निर्हि छन्दांसि श्रुत्वा जायते यथा— 'गायत्रं छन्दोनु प्र जायस्व'* इत्यादि । नन्वेवमपि मन्थनजन्मा अन्य एवायमग्निः, तत्राह—एष खलु मन्थनजन्मा स चाग्निः, योनिगतस्यैकत्वात् । ज्योतिस्त्वस्याग्नेः परापतितं उत्सन्नं, तावता अग्निरेवोत्सन्न इति लौकिका मन्यन्ते, तस्मात्स एवायमग्निरिति यथोक्तदोषाप्रसङ्ग इत्याहुः पुराविदः । एवमुत्पादितेऽग्नौ अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेदिति । यदग्नये इत्यादि । गतम् । मन्त्रार्थस्तु—प्रथममप्ययमग्निः इत एव जातः स्वादात्मीयाद्योने कारणादधिजज्ञे । जातवेदाः जातानां वेदिता, जातधनो वा सोयमिदानीं स्वाद्योनेर्गायत्र्यादिभिः जातो देवेभ्यो हव्यं वहन् प्रजानन् प्रकर्षेण वहनोपायज्ञः ॥

*सं, १-३-७.६

स्य ज्योतिः परापतितं तदेवाव
रुन्धे ॥ २२ ॥
वैश्वानरं द्वादशकपालं निर्वपेद्वारुणं
चरुं दधिक्रावृण्णे चरुमभिशस्यमा-

पतितमिति परा-पतितम् । तत् । एव । अवेति । रुन्धे ॥ २२ ॥

करोत्यन्नादो दधाति यदग्नये शुचये चक्षु-
रेवास्मिन्तेन दधाति करोति वाजं
यजमानमुदेवास्य पङ्क्ते ॥ ४ ॥

[1]वैश्वानरम् । द्वादशकपालमिति द्वादश-कपालम् । निरिति । वपेत् । वारुणम् । चरुम् । दधिक्रावृण्ण इति दधि-क्रावृण्णे । चरुम् । अभि-

इति द्वितीये द्वितीये चतुर्थोऽनुवाकः.

---

[1]वैश्वानरं द्वादशकपालमिति ॥ अभिशस्यमानः पातकारोपेण दूष्यमाणः स्वदयति निर्दोषीकरोतीति । ष्वद आस्वादने, चुरादिरदन्तः । अपेति । पापं वर्णं रूपं आरोप्यमाणं अपहते । दधिक्राव्णा पुनातीति । दधीनि धारकाणि पृथिव्यादीनि ।

नो यद्वैश्वानरो द्वादशकपालो भवं-
ति संवत्सरो वा अग्निर्वैश्वानरस्सं-
वत्सरेणैवैनँ स्वदयत्यप पापं वर्ण-
ँ हते वारुणेनैवैनं वरुणपाशान्मु-
ञ्चति दधिक्रावृण्णा पुनाति हिरंण्यं
दक्षिणा पवित्रं वै हिरंण्यं पुनात्ये-

शस्यमांन इत्यंभि–शस्यमांनः । यत् । वैश्वानरः । द्वादंशकपाल इति द्वादंश–कपालः । भवंति । संवत्सर इतिं सं–वत्सरः । वै । अग्निः । वैश्वानरः । संवत्सरेणेतिं सं–वत्सरेणं । एव । एनम् । स्वदयति । अपेतिं । पापम् । वर्णम् । हते । वारुणेनं । एव । एनम् । वरुणपाशादितिं वरुण–पाशात् । मुञ्चति । दधिक्रावृण्णेतिं दधि–क्रावृण्णां । पुनाति । हिरंण्यम् । दक्षिणा । पवित्रम् । वै । हिरंण्यम् । पुनातिं । एव । एनम् । आद्यम् ।

---

'आदृगमहन' इति किमत्ययः । तेषु सर्वेषु क्रमते व्याप्नोतीति व्यापकोमिः दधिक्रावा, तेन पुनाति । क्रमेः 'अन्येभ्योपि दृश्यते' इति वनिप्, 'विड्वनोरनुनासिकस्यात्' इत्यात्वम् । हिरण्यमिति । अन्वाहार्यमासाद्य हिरण्यं दक्षिणां ददाति ॥

वैनमाद्यमस्यान्नं भवत्येतामेव नि-
र्वपेत्प्रजाकामस्संवत्सरः ॥ २३ ॥
वा एतस्याशान्तो योनिं प्रजायै
पशूनां निर्दहति योलं प्रजायै स-
न्प्रजां न विन्दते यद्वैश्वानरो द्वाद-
शकपालो भवति संवत्सरो वा अ-
ग्निर्वैश्वानरस्संवत्सरमेव भागधेयेन

अस्य । अन्नम् । भवति । [1]एताम् । एव । निरिति । वपेत् । प्रजाकाम इति प्रजा—कामः । संवत्सर इति सं—वत्सरः ॥ २३ ॥ वै । एतस्य । अशान्तः । योनिम् । प्रजाया इति प्र—जायै । पशूनाम् । निरिति । दहति । यः । अलम् । प्रजाया इति प्र—जायै । सन् । प्रजामिति प्र—जाम् । न । विन्दते । यत् । वैश्वानरः । द्वादशकपाल इति द्वादश—कपालः । भवति । संवत्सर इति सं—वत्सरः । वै । अग्निः । वैश्वानरः । संवत्सरमिति सं—वत्सरम् । एव । भागधेयेनेति भाग—

[1]एतामिति ॥ त्रिहविष्कामिष्टिम् । एतस्येत्युक्तम्, कस्येत्याह—यो-लमिति । गतमन्यत्* ॥

*सं, २-१-५.

शमयति सोऽस्मै शान्तस्स्वाद्यो-
नेः प्रजां प्र जनयति वारुणेनैवै-
नं वरुणपाशान्मुञ्चति दधिक्राव्ण्णा
पुनाति हिरण्यं दक्षिणा पवित्रं वै
हिरण्यं पुनात्येवैनम् ॥ २४ ॥ वि-
न्दते प्रजां वैश्वानरं द्वादशकपालं
निर्वपेत्पुत्रे जाते यदष्टाकपालो भ-

धेयेन । शमयति । सः । अस्मै । शान्तः । स्वात् । योनेः । प्रजामिति प्र-जाम् । प्रेति । जनयति । वारुणेन । एव । एनम् । वरुणपाशादिति वरुण-पाशात् । मुञ्चति । दधिक्राव्ण्णेति दधि-क्राव्ण्णा । पुनाति । हिरण्यम् । दक्षिणा । पवित्रम् । वै । हिरण्यम् । पुनाति । एव । एनम् ॥ २४ ॥ विन्दते । प्रजामिति प्र-जाम् । वैश्वानरम् । द्वादशकपालमिति द्वादश-कपालम् । निरिति । वपेत् । पुत्रे । जाते । यत् । अष्टाकपाल इत्यष्टा-कपालः । भवति । गायत्रिया । एव ।

[1]पुत्रे जाते इति ॥ दशाहात्त्वयम*पर्वण्येव । यदष्टाकपाल इत्यादि अवप्लुत्य द्वादशकपालेन स्तूयते ब्रह्मवर्चसेनेति । तद्वे-

*ग—रत्वयं.

वंति गायत्रियैवैनं ब्रह्मवर्चसेन पु-
नाति यन्नवकपालस्त्रिवृतैवास्मिन्ते-
जो दधाति यद्दशकपालो विराजै-
वास्मिन्नन्नाद्यं दधाति यदेकादशक-
पालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति
यद्द्वादशकपालो जगत्यैवास्मिन्पशू-
न्दधाति यस्मिञ्जात एतामिष्टिं नि-

एनम् । ब्रह्मवर्चसेनेति ब्रह्म–वर्चसेन । पुनाति । यत् । नवकपाल इति नव–कपालः । त्रिवृतेति त्रि–वृता । एव । अस्मिन् । तेजः । दधाति । यत् । दशकपाल इति दश–कपालः । विराजेति वि–राजा । एव । अस्मिन् । अन्नाद्यमित्यन्न–अद्यम् । दधाति । यत् । एकादशकपाल इत्येकादश–कपालः । त्रिष्टुभा । एव । अस्मिन् । इन्द्रियम् । दधाति । यत् । द्वादशकपाल इति द्वादश–कपालः । जगत्या । एव । अस्मिन् । पशून् । दधाति । यस्मिन् । जाते । एताम् । इष्टिम् ।

---

तुल्यत्वाच्छन्द्यम्.। त्रिवृतेति । नवस्तोत्रीयस्तोमस्त्रिवृत् । विराट् दशाक्षरा, अन्नं च । त्रिष्टुभेति । तस्येन्द्रियहेतुत्वात्त्रिष्टुबिन्द्रिययोस्सहजात-

वर्पति पूतः ॥ २५ ॥ एव तेज-
स्व्यन्नाद इन्द्रियावी पशुमान्भवत्य-
व वा एष सुवर्गाल्लोकाच्छिद्यते यो
दर्शपूर्णमासयाजी सन्नमावास्यां
वा पौर्णमासीं वातिपादयति सुव-

निर्वपतीति निः—वर्पति । पूतः ॥ २५ ॥ एव । तेजस्वी । अन्नाद इत्यन्न—अदः । इन्द्रियावी । पशुमानिति पशु—मान् । भवति । [4]अवेति । वै । एषः । सुवर्गादिति सुवः—गात् । लोकात् । छिद्यते । यः । दर्शपूर्णमासयाजीति दर्शपूर्णमास—याजी । सन्न् । अमावास्यामित्यमा—वास्याम् । वा । पौर्णमासीमिति पौर्ण—मासीम् । वा । अतिपादयतीत्यति—पादयति । सुवर्गायेति सुवः—

त्वात् । जगत्येति । तस्याः पशव्यत्वात् । जातेष्ट्याः फलमाह—यस्मिन्निति । पूतत्वादिकं जातस्य पुत्रस्य फलमिति दर्शयति । तेन पूतत्वादिगुणो जाते भवत्विति सङ्कल्पः ॥

[4]अव वा एष इत्यादि ॥ गतम्* । अत्र पाथिकृतवैश्वानरयोः समुदाय इत्येके, विकल्प इत्यन्ये । अथो इति । अपि खल्वस्य- संवत्सरमेवास्मा उपदधाति उपस्थापयति । अवयविन उपस्थापने

*सं. २-२-२.[1]

गाय हि लोकायं दर्शपूर्णमासा-
विज्येते वैश्वानरं द्वादशकपालं नि-
र्वपेदमावास्यां वा पौर्णमासीं
वाऽतिपाद्य संवत्सरो वा अग्निर्वैश्वा-
नरस्संवत्सरमेव प्रीणात्यथो संव-
त्सरमेवास्मा उप दधाति सुवर्गस्य
लोकस्य समष्ट्यै ॥ २६ ॥ अथो

गार्य । हि । लोकाय । दर्शपूर्णमासाविति दर्श—पूर्णमासौ । इज्येते इति । वैश्वानरम् । द्वादशकपालमिति द्वादश—कपालम् । निरिति । वपेत् । अमावास्यामित्यमा—वास्याम् । वा । पौर्णमासीमिति पौर्ण—मासीम् । वा । अतिपाद्येत्यति—पाद्य । संवत्सर इति सं—वत्सरः । वै । अग्निः । वैश्वानरः । संवत्सरमिति सं—वत्सरम् । एव । प्रीणाति । अथो—इति । संवत्सरमिति सं—वत्सरम् । एव । अस्मै । उपेति । दधाति । सुवर्गस्येति सुवः—गस्य । लोकस्य । समष्ट्या इति सं—अष्ट्यै ॥ २६ ॥ अथो इति । देवताः । एव । अन्वारभ्येत्यनु—आर-

का नामावयवयोरतिपत्तिरिति अथो अपि च देवता एवान्वारम्य स्वर्गं गच्छति, तत्कुतोस्य स्वर्गादपच्छित्तिरिति ॥

देवता एवान्वारभ्य सुवर्गं लोकमे-
ति वीरहा वा एष देवानां योऽग्नि-
मुद्वासयते न वा एतस्य ब्राह्मणा-
ऋतायवः पुरान्नमक्षन्नाग्नेयमष्टाक-
पालं निर्वपेद्वैश्वानरं द्वादशकपाल-
मग्निमुद्वासयिष्यन् यदष्टाकपालो
भवत्यष्टाक्षरा गायत्री गायत्रोऽग्नि-

भ्य । सुवर्गमिति सुवः-गम् । लोकम् । एति । [5]वीरहेति वीर-हा । वै । एषः । देवानाम् । यः । अग्निम् । उद्वासयत इत्युत्-वासयते । न । वै । एतस्य । ब्राह्मणाः । ऋतायव इत्यृत-यवः । पुरा । अन्नम् । अक्षन् । आग्नेयम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपेत् । वैश्वानरम् । द्वादशकपालमिति द्वादश-कपालम् । अग्निम् । उद्वासयिष्यन्नित्युत्-वासयिष्यन् । यत् । अष्टाकपाल इत्यष्टा-कपालः । भवति । अष्टाक्षरेत्यष्टा-अक्षरा । गायत्री । गायत्रः । अग्निः ।

[5]वीरहेत्यादि ॥ 'उद्वास्य पुनरा दधीत'* इत्यत्रेदमुच्यते । ऋता-

*सं.—१-५-१.

यावानेवाग्निस्तस्मा आतिथ्यं करो-
त्यथो यथा जनं यतेऽवसं करोति
तादृक् ॥ २७ ॥ एव तद्द्वादशक-
पालो वैश्वानरो भवति द्वादश मा-
सास्संवत्सरस्संवत्सरः खलु वा
अग्नेर्योनिस्स्वामेवैनं योनिं गमय-

यावान् । एव । अग्निः । तस्मै । आतिथ्यम् । करोति ।
अथो इति । यथा । जनम् । यते । अवसम् । करोति ।
तादृक् ॥ २७ ॥ एव । तत् । द्वादशकपाल इति
द्वादश—कपालः । वैश्वानरः । भवति । द्वादश ।
मासाः । संवत्सर इति सं—वत्सरः । संवत्सर इति
सं—वत्सरः । खलु । वै । अग्नेः । योनिः । स्वाम् ।
एव । एनम् । योनिम् । गमयति । आद्यम् ।

---

यवः ऋतं सत्यं यज्ञं वा आत्मन इच्छन्तः । अस्यान्नं नाक्षन् नादन् । 'लुङ्सनोर्घस्लृ', 'मन्त्रे घसह्वर' इति च्लेर्लुक्, भाषा-निवृत्त्यर्थत्वान्मन्त्रग्रहणस्य ; 'घसिभसोर्हलि च' इत्युपधालोपः, 'शासिवसिघसीनां च' इति षत्वम् । अग्निमुद्वासयिष्यन्नित्यादि । उद्वासनारम्भे अष्टाकपालनिर्वपणेन अष्टत्वान्वयाद्गायत्रत्वाच्च अग्निर्यावान् कश्चिदग्निर्नाम, तस्य सर्वस्य यत्र क्वापि गतस्यातिथ्यं करोति । तस्मादुद्वासनेनाग्निरुत्क्षेप इति । अथो अपि च यथाजनं जनप-

त्यार्द्यमस्यान्नं भवति वैश्वानरं द्वादशकपालं निर्वपेन्मारुतꣳ सप्तकपालं ग्रामकाम आहवनीये वैश्वानरमधि श्रयति गार्हपत्ये मारुतं पापवस्यसस्य विधृत्यै द्वादशकपालो वैश्वानरो भवति द्वादश मासास्सं-

अस्य । अन्नम् । भवति । [6] वैश्वानरम् । द्वादशकपालमिति द्वादश-कपालम् । निरिति । वपेत् । मारुतम् । सप्तकपालमिति सप्त-कपालम् । ग्रामकाम इति ग्राम-कामः । आहवनीय इत्या-हवनीये । वैश्वानरम् । अधीति । श्रयति । गार्हपत्य इति गार्ह-पत्ये । मारुतम् । पापवस्यसस्येति पाप-वस्यसस्य । विधृत्या इति वि-धृत्यै । द्वादशकपाल इति द्वादश-कपालः । वैश्वानरः । भवति । द्वादश । मासाः । संवत्सर इति

---

दादिकं जनमेव वामीष्टं यते गच्छते । अवसं पाथेयादि करोति । तादृशमेतदुद्वासनारम्भे अष्टाकपालनिर्वपणम् । अथ द्वादशकपालनिर्वपणेन द्वादशत्वान्वयात् द्वादशमासात्मकसंवत्सरयोनेः स्वायामेव योनौ प्रतिष्ठापनं कृतं भवति । ततश्च न कश्चिदुद्वासने दोष इति ॥

[6]आहवनीय इति ॥ उपसादनं च वैश्वानरस्यापरेणाहवनीयं

वत्सरस्संवत्सरेणैवास्मै सजाताꣳश्
श्च्यावयति मारुतो भवति ॥ २८ ॥
मरुतो वै देवानां विशो देवविशेनै-
वास्मै मनुष्यविशमव रुन्धे सप्त-
कपालो भवति सप्तगणा वै मरुतो-

सं–वत्सरः । संवत्सरेणेति सं–वत्सरेण । एव । अस्मै । सजातानिति स–जातान् । च्यावयति । मारुतः । भवति ॥ २८ ॥ मरुतः । वै । देवानाम् । विशः । देवविशेनेति देव–विशेन । एव । अस्मै । मनुष्यविशमिति मनुष्य–विशम् । अव । इति । रुन्धे । सप्तकपाल इति सप्त–कपालः । भवति । सप्तगणा इति सप्त–गणाः । वै । मरुतः ।

---

एवमपरेण गार्हपत्यं सामर्थ्यात्क्षत्रियस्यैवम् । क्षत्रियवृत्तीनामपीच्छन्ति द्रोणादेरिव । पापवस्यसस्येति । वसीयः पापं पापवस्यसम् । राजदन्तादित्वात्परनिपातः, ईयस ईकारस्य छान्दसो लोपः, 'अनसन्तान्नपुंसकाच्छन्दसि' इत्यच्समासान्तः । विधृत्यै विश्लेषाय । च्यावयति प्रह्वीभूतान् करोति । देवविशेनेति । 'अच्' इति योगविभागादच्समासान्तः । गणश इति । 'बहुगण' इति सङ्ख्यात्वात्, 'सङ्ख्यैकवचनाच्च' इति शस् । अनूच्यमान इति । सामिधेनीसमूहेनूच्यमाने मारुतस्यासादनकाले मत्यश्वं वैश्वानरमासादयति ।

गणश एवास्मैं सजातानवं रुन्धेऽनू-
च्यमान आ सादयति विशमेवा-
स्मा अनुवर्त्मानं करोति ॥ २९ ॥
आदित्यं चरुं निर्वपेत्सङ्ग्राममुंपप्र-

गणश इतिं गण-शः । एव । अस्मै । सजाता-
निति स-जातान् । अवेति । रुन्धे । अनूच्यमान
इत्यनु-उच्यमाने । एति । सादयति । विशम् ।
एव । अस्मै । अनुवर्त्मानमित्यनु-वर्त्मानम् । क-
रोति ॥ २९ ॥

प्रजाकामस्संवत्सरः पुनात्येवैनं पूतस्समष्टयै
ताद्दङ्मारुतो भवत्येकान्न त्रिंशच्च ॥ ५ ॥

[1]आदित्यम् । चरुम् । निरिति । वपेत् । सङ्ग्रा-
ममिति सं-ग्रामम् । उपप्रयास्यन्नित्युप-प्रयास्य-

अनुवर्त्मानमिति । या वर्त्मन्यागत्यानुवर्त्मा[वर्त]नं करोति सानुवर्त्मा । देवविशां सम्बन्धिनो मारुतस्यासादने पाश्चात्यतया मनुष्यविशोप्यनु-वर्त्मानो भवन्तीति ॥

इति द्वितीये द्वितीये पञ्चमोनुवाकः.

---

[1]आदित्यं चरुमित्यादि ॥ गतम् । संग्रामजयेनास्यां प्रतितिष्ठति ॥

यास्यन्नियं वा अदितिरस्यामेव पूर्वे प्रति तिष्ठन्ति वैश्वानरं द्वादशकपालं निर्वपेदायतनं गत्वा संवत्सरो वा अग्निर्वैश्वानरस्संवत्सरः खलु वै देवानामायतनमेतस्माद्वा आयतनाद्देवा असुरानजयन् यद्वैश्वानरं द्वादशकपालं निर्वपति दे-

न्न् । इयम् । वै । अदितिः । अस्याम् । एव । पूर्वे । प्रतीति । तिष्ठन्ति । [2]वैश्वानरम् । द्वादशकपालमिति द्वादश—कपालम् । निरिति । वपेत् । आयतनमित्या—यतनम् । गत्वा । संवत्सर इति सं—वत्सरः । वै । अग्निः । वैश्वानरः । संवत्सर इति सं—वत्सरः । खलु । वै । देवानाम् । आयतनमित्या—यतनम् । एतस्मात् । वै । आयतनादित्या—यतनात् । देवाः । असुरान् । अजयन् । यत् । वैश्वानरम् । द्वादशकपालमिति द्वादश—कपालम् । निर्वपतीति निः—वपति । देवानाम् । एव । आयत-

[2]आयतनमिति ॥ संग्रामायतनं गत्वा संग्रामजयार्थी तत्र यजेत । यद्वा—आ समन्ताद्यतनमायतनं सन्नाहगतं प्राप्य वैश्वानरं निर्वपेत् ।

वानामेवायतने यतते जयति तꣳ संग्राममेतस्मिन्वा एतौ मृजाते ॥ ३० ॥ यो विद्विषाणयोरन्नमत्ति वैश्वानरं द्वादशकपालं निर्वपेद्विद्विन्

न इत्या—यतने । यतते । जयति । तम् । सङ्ग्राममिति सं—ग्रामम् । [3]एतस्मिन् । वै । एतौ । मृजाते इति ॥३०॥ यः । विद्विषाणयोरिति वि—द्विषाणयोः । अन्नम् । अत्ति । [4]वैश्वानरम् । द्वादशकपालमिति द्वादश—कपालम् । निरिति । वपेत् ।

---

देवानामेव सन्नाहे वर्तते इति सङ्ग्रामम् [....मं जयति] । केचिदाहुः व्यायामस्थानमायतनमिति ॥

[3]एतस्मिन्वा इत्यादि ॥ मृजाते पापमात्मीयं शोधयतः । विविधं परस्परं विद्विषन्तौ आभिचारादिघोरानर्थप्रवृत्तौ विद्विषाणौ, तयोरितरस्यान्नं योत्ति तस्मिन्नात्मीयं पापं विद्विषाणौ मृजाते । उभयोरन्यतरमिति केचित् । संवत्सरस्वदितमिति । संवत्सरेण निर्दोषीकृतमन्नमिति । तस्मान्नास्मिन् पापं मृजाते । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । मृजेर्व्यत्ययेनात्मनेपदम् ॥

[4]संवत्सराय वा इत्यादि ॥ यौ सममाते एकस्मिन् कार्ये शपथं कुर्वाते अस्मिन्विषये अन्योन्यमावाभ्यां न द्रोग्धव्यमिति । एतौ खलु संवत्सराय सममाते संवत्सरार्थं संवत्सरमेव साक्षिणं कृत्वा । यद्वा—संवत्सरसमाप्तिः प्रागनभिद्रोहाय सममाते । तस्मात्

पाणयोरन्नं जग्ध्वा संवत्सरो वा अ-
ग्निर्वैश्वानरस्संवत्सरस्वदितमेवात्ति
नास्मिन्मृजाते संवत्सराय वा एतौ
सममाते यौ सममाते तयोर्यः पू-

विद्विपाणयोरिति वि-द्विपाणयोः । अन्नम् । ज-
ग्ध्वा । संवत्सर इति सं-वत्सरः । वै । अग्निः ।
वैश्वानरः । संवत्सरस्वदितमिति संवत्सर-स्वदि-
तम् । एव । अत्ति । न । अस्मिन् । मृजाते इति ।
संवत्सरायेति सं-वत्सराय । वै । एतौ । समिति ।
अमाते इति । यौ । सममाते इति सं-अमाते ।
तयोः । यः । पूर्वः । अभिद्रुह्यतीत्यभि-द्रुह्यति ।

---

तयोर्मध्ये यः पूर्वोभिद्रुह्यति प्रथमं संवत्सरादर्वाक् समयं भिनत्ति तं वरुणो गृह्णाति, तस्मात्सममानयोः पूर्वोभिद्रुह्यः वैश्वानरं द्वादशकपालं निर्वपेत् इति । ततो यागबलेन संवत्सरमेवाप्त्वा आप्तं कृत्वा समाप्य वा परस्तादेवाभिद्रुह्यति । अन्येनाभिद्रुग्धे पश्चादेव वा संवत्सरस्याभिद्रोहः कृतो भवति । निर्वरुणं वरुणग्रहणरहितं, तदेवाह—नैनं वरुणो गृह्णातीति । अमतिरत्र सत्यापने वर्तते । यथा—'सोऽब्रवीदृतममीप्व'* इति । अमगत्यादिषु, 'बहुलं छन्दसि' इति शपो लुक् ॥

---

*सं. २-१-५.

वींभिद्रुह्यति तं वरुणो गृह्णाति वै-
श्वानरं द्वादशकपालं निर्वंपेत्सम-
मानयोः पूर्वोभिद्रुह्यं संवत्सरो वा
अग्निर्वैश्वानरस्संवत्सरमेवाप्त्वा निं-
र्वरुणम् ॥३१॥ पुरस्तादभि द्रुह्यति
नैनं वरुणो गृह्णात्याव्यं वा एष प्र-
तिं गृह्णाति योऽविं प्रतिगृह्णाति वैश्वा-

तम् । वरुणः । गृह्णाति । [5]वैश्वानरम् । द्वादशक-
पालमिति द्वादश–कपालम् । निरिति । वपेत् ।
सममानयोरिति सं–अमानयोः । पूर्वः । अभिद्रुह्ये-
त्यभि–द्रुह्य । संवत्सर इति सं–वत्सरः । वै । अ-
ग्निः । वैश्वानरः । संवत्सरमिति सं–वत्सरम् ।
एव । आप्त्वा । निर्वरुणमिति निः–वरुणम् ॥३१॥
पुरस्तात् । अभीति । द्रुह्यति । न । एनम् । वरु-
णः । गृह्णाति । आव्यम् । वै । एषः । प्रतीति ।
गृह्णाति । यः । अविम् । प्रतिगृह्णातीति प्रति–गृ-
ह्णाति । वैश्वानरम् । द्वादशकपालमिति द्वादश–

[5]आव्यमिति ॥ अवत्यस्मादिति आव्यं पापं रोगविशेषो वा । अवतेः 'ऋहलोर्ण्यत्' । शेफरोगं केचिदाहुः । तदेव खल्वयं

नरं द्वादशकपालं निर्वपेदविं प्रतिगृ-
ह्य संवत्सरो वा अग्निर्वैश्वानरस्संव-
त्सरस्वदितामेव प्रति गृह्णाति नान्यं
प्रति गृह्णात्यात्मनो वा एष मात्रा-
माप्नोति य उभयादत्प्रतिगृह्णात्यश्वं
वा पुरुषं वा वैश्वानरं द्वादशकपा-

कपालम् । निरिति । वपेत् । अविम् । प्रतिगृह्येति प्रति–गृह्य । संवत्सर इति सं–वत्सरः । वै । अग्निः । वैश्वानरः । संवत्सरस्वदितामिति संवत्सर–स्वदिताम् । एव । प्रतीति । गृह्णाति । न । आन्यम् । प्रतीति । गृह्णाति । आत्मनः । वै । एषः । मात्राम् । आप्नोति । यः । उभयादत् । प्रतिगृह्णातीति प्रति–गृह्णाति । अश्वम् । वा । पुरुषम् । वा । [6]वैश्वानरम् । द्वादशकपालमिति द्वादश–कपालम् ।

प्रतिगृह्णाति योविं प्रतिगृह्णाति । संवत्सरस्वदितामिति । संवत्सरेण निर्दोषीकृतामेवाविं प्रतिगृह्णाति । ततो नान्यं प्रतिगृह्णातीति ॥

[6]आत्मन इत्यादि ॥ अश्वादिकमुभयादत् उभयोर्भागयोर्दन्तवत् । प्रतिगृह्णन् आत्मन एष मात्रां प्रतिगृह्णाति । मीयतेनयेति मात्रा । तस्या हि प्रतिग्रहे प्रतिग्राह्यत्वे क्षितः स्यादात्मा । यद्वा— आत्मनो मात्राल्पता आयुरसमाप्तिः, तां प्रतिगृह्णाति म्रियेत इत्यर्थः ।

लं निर्वपेदुभयादंत् ॥ ३२ ॥ प्रति-
गृह्यं संवत्सरो वा अग्निर्वैश्वानरस्सं-
वत्सरस्वदितमेव प्रति गृह्णाति ना-
त्मनो मात्रामाप्नोति वैश्वानरं द्वा-
दशकपालं निर्वपेत्सनिमेष्यन्त्संव-
त्सरो वा अग्निर्वैश्वानरो यदा खलु-

निरिति । वपेत् । उभयादत् ॥ ३२ ॥ प्रतिगृह्येति प्रति-गृह्य । संवत्सर इति सं-वत्सरः । वै । अग्निः । वैश्वानरः । संवत्सरस्वदितमिति संवत्सर-स्वदितम् । एव । प्रतीति । गृह्णाति । न । आत्मनः । मात्राम् । आप्नोति । [7]वैश्वानरम् । द्वादशकपालमिति द्वादश-कपालम् । निरिति । वपेत् । सनिम् । एष्यन् । संवत्सर इति सं-वत्सरः । वै । अग्निः । वैश्वानरः । यदा । खलु । वै । संव-

यद्वा—आत्मनो मात्रामेकदेशं प्रतिगृह्णाति एकदेशस्य प्रतिग्राह्यत्वेन क्षेपः । 'छन्दसि च' इति दन्तस्य दतृभावः, वस्तुत्वेन विवक्षितत्वान्नपुंसकत्वम्, 'अन्येषामपि दृश्यते' इति दीर्घत्वम् ॥

[7]सनिमेष्यन्निति ॥ याच्ञालब्धं धनं सनिः, तदर्थमेष्यन् वैश्वानरं निर्वपेदिति । यदेत्यादि । संवत्सरं जनतायां जनसमूहे दातृपार्श्वे

वै संवत्सरं जनतायां चरत्यथ स
धनार्घो भवति यद्वैश्वानरं द्वादशक-
पालं निर्वपति संवत्सरसातामेव
सनिमभि प्र च्यवते दानकामा अ-
स्मै प्रजा भवन्ति यो वै संवत्स-

त्सरमिति सं—वत्सरम् । जनतायाम् । चरति ।
अथ । सः । धनार्घ इति धन—अर्घः । भवति ।
यत् । वैश्वानरम् । द्वादशकपालमिति द्वादश—
कपालम् । निर्वपतीति निः—वपति । संवत्सरसा-
तामिति संवत्सर—साताम् । एव । सनिम् । अ-
भि । प्रेति । च्यवते । दानकामा इति दान—कामाः ।
अस्मै । प्रजा इति प्र—जाः । भवन्ति । [8]यः ।
वै । संवत्सरमिति सं—वत्सरम् ॥ ३३ ॥ प्रयुज्ये-

---

चरन् धनार्घो भवति धनेन पूजितो महाधनो भवति । अर्घ पूजायाम्, कर्मणि घञ्, थाथादिनोत्तरपदान्तोदात्तत्वम् । संवत्सरसातां संवत्सरेण दत्तां* सनिमभिमच्यवते मगच्छति मासं चेष्टते । ततश्च सर्वाः मजाः अस्मै दानकामा भवन्ति ॥

[8]यो वा इत्यादि ॥ सन्यर्थं संवत्सरयागेन मयुज्य न विमुञ्चति

---

*क-ख—यदत्तां.

रम् ॥ ३३ ॥ प्रयुज्य न विमुञ्चत्य-
प्रतिष्ठानो वै स भवत्येतमेव वैश्वा-
नरं पुनरागत्य निर्वपेद्यमेव प्रयुङ्क्ते
तं भागधेयेन वि मुञ्चति प्रतिष्ठित्यै
यया रज्ज्वोत्तमां गामाजेत्तां भ्रातृ-

ति प्र-युज्य । न । विमुञ्चतीति वि-मुञ्चति । अप्रति-
ष्ठान इत्यप्रति-स्थानः । वै । सः । भवति । एत-
म् । एव । वैश्वानरम् । पुनः । आगत्येत्या-गत्य ।
निरिति । वपेत् । यम् । एव । प्रयुङ्क्त इति प्र-
युङ्क्ते । तम् । भागधेयेनेति भाग-धेयेन । वीति ।
मुञ्चति । प्रतिष्ठित्या इति प्रति-स्थित्यै । यया ।
रज्ज्वा । उत्तमामित्युत्-तमाम् । गाम् । आजेदि-
त्या-अजेत् । ताम् । भ्रातृव्याय । प्रेति । हिनु-

---

अप्रतिष्ठानो भवति प्रतिष्ठानशक्तिरहितस्स्यात् । सनिं लब्ध्वा आगत्यैनं वैश्वानरं पुनर्निर्वपेत् । अत्र कपालोपदेशाभावान्न कर्मभेदः; अधिकारभेद एवायम् । संवत्सरं प्रयुङ्क्ते, तं भागधेयेन विमुञ्चति तच्चास्य प्रतिष्ठित्यै भवति । तत्रागमनकाले यया रज्ज्वा उत्तमां गां सर्वासां काल्यमानानां गवां पृष्ठतो गच्छन्तीं सनिलब्धामाजेदमयेत्, तां भ्रातृव्याय प्रहिणुयात् भ्रातृव्यमध्यमगोष्ठे

व्याय प्र हिणुयान्निरृतिमेवास्मै
प्र हिणोति ॥ ३४ ॥
ऐन्द्रं चरुं निर्वपेत्पशुकाम ऐन्द्रा
वै पशव इन्द्रमेव स्वेन भागधेये-
नोप धावति स एवास्मै पशून्प्र

यात् । निरृतिमिति निः-ऋतिम् । एव । अ-
स्मै । प्रेति । हिणोति ॥ ३४ ॥

मृजाते निर्वरुणं वपेदुभयाद्यो वै
संवत्सरः पञ्चिंशश्च ॥ ६ ॥

[1]ऐन्द्रम् । चरुम् । निरिति । वपेत् । पशुकाम
इति पशु-कामः । ऐन्द्राः । वै । पशवः । इन्द्रम् ।
एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति ।
धावति । सः । एव । अस्मै । पशून् । प्रेति । प्र-

[व्यगोष्ठमध्ये] न्यस्यति [स्येत्] भ्रातृव्यगवीं वाभिदध्यात् [वा बध्नीयात्] निरृतिं लक्ष्मीमेव भ्रातृव्याय प्रहिणोति प्रेरयति ॥

इति द्वितीये द्वितीये षष्ठोनुवाकः.

---

[1]ऐन्द्रं चरुमित्यादि ॥ गतम् । पशुमानिति । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । स्वादेवेति । यस्मादेव कारणादिन्द्रात्पशून्प्रजनयति ॥

यच्छति पशुमानेव भवति चरुर्भ-
वति स्वादेवास्मै योनेः पशून्प्र ज-
नयतीन्द्रायेन्द्रियावते पुरोडाशमे-
कादशकपालं निर्वपेत्पशुकाम इ-
न्द्रियं वै पशव इन्द्रमेवेन्द्रियावन्तꣳ
स्वेन भागधेयेनोप धावति सः ॥३५
एवास्मा इन्द्रियं पशून्प्र यच्छति प-
शुमानेव भवतीन्द्राय घर्मवते पु-

च्छति । पशुमानिति पशु–मान् । एव । भवति । चरुः । भवति । स्वात् । एव । अस्मै । योनेः । पशून् । प्रेति । जनयति । [2]इन्द्राय । इन्द्रियावत इतीन्द्रिय–वते । पुरोडाशम् । एकादशकपालमित्येकादश–कपालम् । निरिति । वपेत् । पशुकाम इति पशु–कामः । इन्द्रियम् । वै । पशवः । इन्द्रम् । एव । इन्द्रियावन्तमितीन्द्रिय–वन्तम् । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । सः । ॥ ३५ ॥ एव । अस्मै । इन्द्रियम् । पशून् । प्रेति । यच्छति । पशुमानिति पशु–मान् । एव । भवति । [3]इन्द्राय । घर्मवत इति घर्म–वते । पुरोडाशम् ।

[2]इन्द्रियावत इति ॥ 'मन्त्रे सोमाश्व' इति दीर्घत्वम् ॥
[3]घर्मः प्रतापः ॥

रोडाशमेकादशकपालं निर्वपेद्ब्रह्मव-
र्चसकामो ब्रह्मवर्चसं वै घर्म इन्द्र-
मेव घर्मवन्तꣳ स्वेन भागधेयेनोप
धावति स एवास्मिन्ब्रह्मवर्चसं दधा-
ति ब्रह्मवर्चस्येव भवतीन्द्रायार्कव-
ते पुरोडाशमेकादशकपालं निर्वपेद-
न्नकामोर्को वै देवानामन्नमिन्द्रमेवा-

एकादशकपालमित्येकादश–कपालम् । निरिति । वपेत् । ब्रह्मवर्चसकाम इति ब्रह्मवर्चस–कामः । ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् । वै । घर्मः । इन्द्रम् । एव । घर्मवन्तमिति घर्म–वन्तम् । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । सः । एव । अस्मिन् । ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् । दधाति । ब्रह्मवर्चसीति ब्रह्म–वर्चसी । एव । भवति । [1]इन्द्राय । अर्कवत इत्यर्क–वते । पुरोडाशम् । एकादशकपालमित्येकादश–कपालम् । निरिति । वपेत् । अन्नकाम इत्यन्न–कामः । अर्कः । वै । देवानाम् । अन्नम् । इन्द्रम् । एव ।

---

[1]अर्कोन्नं ; अर्चनीयत्वात् । अर्चतेः कर्मणि घञ्, कुत्वम् । अर्क स्तुतौ, इत्यस्मात्[द्वा] ॥

कर्वन्तुꣳ स्वेन भागधेयेन ॥ ३६ ॥
उप धावति स एवास्मा अन्नं प्र
यच्छत्यन्नाद एव भवतीन्द्राय घर्म-
वते पुरोडाशमेकादशकपालं निर्व-
पेदिन्द्रायेन्द्रियावत इन्द्रायार्कवते
भूतिकामो यदिन्द्राय घर्मवते निर्व-
पति शिर एवास्य तेन करोति य-

अर्कवन्तमित्यर्क-वन्तम् । स्वेन । भागधेयेनेति भाग-धेयेन ॥ ३६ ॥ उपेति । धावति । सः । एव । अस्मै । अन्नम् । प्रेति । यच्छति । अन्नाद इत्यन्न-अदः । एव । भवति । [5]इन्द्राय । घर्मवत इति घर्म-वते । पुरोडाशम् । एकादशकपालमित्येकादश-कपालम् । निरिति । वपेत् । इन्द्राय । इन्द्रियावत इतीन्द्रिय-वते । इन्द्राय । अर्कवत इत्यर्क-वते । भूतिकाम इति भूति-कामः । यत् । इन्द्राय । घर्मवत इति घर्म-वते । निर्वपतीति निः-वपति । शिरः । एव । अस्य । तेन । करोति । यत् । इन्द्राय । इन्द्रियावत इतीन्द्रिय-वते ।

[5]त्रिहविष्का भूतिकामेष्टिः । शिर इति । शिरस्स्थानीयत्वात् घर्म-

दिन्द्रायेन्द्रियावत आत्मानमेवास्य
तेनं करोति यदिन्द्रायार्कवते भूत
एवान्नाद्ये प्रति तिष्ठति भवत्येवे-
न्द्राय ॥ ३७ ॥ अꣳहोमुचे पुरो-
डाशमेकादशकपालं निर्वपेद्यः पा-
प्मना गृहीतस्स्यात्पाप्मा वा अꣳ-

आत्मानम् । एव । अस्य । तेन । करोति । यत् । इन्द्राय । अर्कवत इत्यर्क-वते । भूतः । एव । अन्नाद्य इत्यन्न-अद्ये । प्रतीति । तिष्ठति । भवति । एव । [6]इन्द्राय ॥ ३७ ॥ अꣳहोमुच इत्यꣳहः-मुचे । पुरोडाशम् । एकादशकपालमित्येकादश-कपालम् । निरिति । वपेत् । यः । पाप्मना । गृहीतः । स्यात् । पाप्मा । वै । अꣳहः । इन्द्रम् ।

स्य, 'घर्मेशिरः'* इति च दर्शनात् । उच्छ्रितशिरस्को भवतीत्यर्थः । आत्मानमिति । आत्मवत्तां बलवत्तामस्य करोति । भूत इति भूतिं गत्वा अन्नाद्ये प्रतिष्ठितो भवति । भवत्येवेति । एवं भूष्णुतां प्रतापा†तिशयं प्राप्नोतु [मोति] ॥

[6]अंहोमुचे अंहसां पापानां मोचयित्रे ॥

*ब्रा. १-१-७.

†क, तं—तां पापा,

ह इन्द्रमेवाꣳहोमुचꣳ स्वेन भाग-
धेयेनोप धावति स एवैनं पाप्म-
नोꣳहसो मुञ्चतीन्द्राय वैमृधाय
पुरोडाशमेकादशकपालं निर्वपेद्यं
मृधोभि प्रवेपेरन्राष्ट्राणि वाभि सं-
मीयुरिन्द्रमेव वैमृधꣳ स्वेन भाग-
धेयेनोप धावति स एवास्मान्मृधः

एव । अꣳहोमुचमित्यꣳहः–मुचम् । स्वेन । भा-
गधेयेनेति भाग–धेयेन । उपेति । धावति । सः ।
एव । एनम् । पाप्मनः । अꣳहसः । मुञ्चति ।
[7]इन्द्राय । वैमृधाय । पुरोडाशम् । एकादशकपा-
लमित्येकादश–कपालम् । निरिति । वपेत् । य-
म् । मृधः । अभीति । प्रवेपेरन्निति प्र–वेपेरन् ।
राष्ट्राणि । वा । अभीति । समीयुरिति सं–ईयुः ।
इन्द्रम् । एव । वैमृधम् । स्वेन । भागधेयेनेति
भाग–धेयेन । उपेति । धावति । सः । एव । अस्मा-

[7]वैमृधायेति ॥ विविधानां संग्रामाणां जनयितृत्वेन सम्बन्धी वैमृधः । यमिति । यं संग्रामाभिमुख्येन प्रकर्षेण वेपेरन् परान् कम्पयेयुः । राष्ट्राणि नानादेशवासिनो वा जना यमभिसमीयुः आभिमुख्येन संहत्योपद्रवन्ति, यं योद्धारो भूत्वा शत्रवोभिप्रवेपेरन् यं बद्धा नेतुं सर्वजनपदवासिनोभिसमीयुः परिगच्छेयुः ॥

॥ ३८ ॥ अप॑ हन्तीन्द्राय॑ त्रात्रे पु॑रोडाश॒मेका॑दशकपालं॒ निर्व॑पेद्ब॒द्धो वा॒ परि॑यत्तो॒ वेन्द्र॑मे॒व त्रा॒तार॒ꣳ स्वे॑न॒ भाग॒धेये॒नोप॑ धावति॒ स ए॒वैनं॑ त्रायत॒ इन्द्रा॑याका॒श्वमे॒धव॑ते पु॒रोडा॑श॒मेका॑दशकपालं॒ निर्व॑पे॒द्यं म॑हाय॒त् । मृधः ॥ ३८ ॥

अपेति॑ । ह॒न्ति॒ । [1]इन्द्रा॑य । त्रा॒त्रे । पु॒रो॒डाश॑म् । एका॑दशकपाल॒मित्येका॑दश—क॒पा॒ल॒म् । निरिति॑ । व॒पे॒त् । ब॒द्धः । वा॒ । परि॑यत्त इ॒ति॒ परि॑—य॒त्तः । वा॒ । इन्द्र॑म् । ए॒व । त्रा॒तार॑म् । स्वेन॑ । भा॒ग॒धेये॒नेति॑ भाग—धेये॑न । उ॒पेति॑ । धा॒व॒ति॒ । सः । ए॒व । ए॒न॒म् । त्रा॒य॒ते॒ । [2]इन्द्रा॑य । अ॒र्का॒श्व॒मे॒धव॑त॒ इत्य॑र्काश्वमे॒ध—व॒ते॒ । पु॒रो॒डाश॑म् । एका॑दशकपाल॒मित्येका॑दश—क॒पा॒ल॒म् । निरिति॑ । व॒पे॒त् । यम् । म॒हा॒य॒ज्ञ इति॑ म॒हा—य॒ज्ञः । न ।

[1]बद्धः निगळितः परियत्तः परितो निरुद्धः ॥

[2]अर्काश्वमेधौ महाक्रतू । तद्वते ऽ ताभ्यामाराधनीयाय । महायज्ञः सोमयागः । उक्तं चाचार्येण—'ते देवा एतं महायज्ञमपश्यन्'* इत्यत्र । अन्त्ये तनू इति । उत्तमे विकली । अन्तत

*सं. १-२-२.

ज्ञो नोपनमेद्देते वै महायज्ञस्यान्त्ये
तनू यदर्काश्वमेधाविन्द्रमेवार्काश्वमे-
धवन्तꣳ स्वेन भागधेयेनोप धावति
स एवास्मा अन्ततो महायज्ञं च्या-
वयत्युपैनं महायज्ञो नमति ॥३१॥

उपनमेदित्युप-नमेत् । एते इति । वै । महायज्ञ-स्येति महा-यज्ञस्य । अन्त्ये इति । तनू इति । यत् । अर्काश्वमेधावित्यर्क-अश्वमेधौ । इन्द्रम् । एव । अर्काश्वमेधवन्तमित्यर्काश्वमेध-वन्तम् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अस्मै । अन्ततः । महायज्ञमिति महा-यज्ञम् । च्यावयति । उपेति । एनम् । महायज्ञ इति महा-यज्ञः । नमति ॥ ३१ ॥

इन्द्रियावन्तꣳ स्वेन भागधेयेनोप धावति सोर्कवन्तꣳ स्वेन भागधेयेनैवेन्द्रायास्मान्मृधोस्मै सप्त च ॥ ७ ॥

इति । तस्य समीपे महायज्ञं आगमयति । स च महायज्ञः एनमुपनमति ॥

इति द्वितीये द्वितीये सप्तमोनुवाकः.

इन्द्रा॒यान्वृ॑जवे पुरो॒डाश॒मेका॑दशक-
पालं॒ निर्व॑पेद्ग्राम॑काम॒ इन्द्र॑मे॒वान्वृ॑-
जुꣳ॒ स्वेन॑ भाग॒धेये॒नोप॑ धावति॒ स
ए॒वास्मै॑ सजा॒ताननु॒कान्करोति ग्रा-
म्ये॑व भ॑वतीन्द्रा॒ण्यै च॒रुं निर्व॑पेद्य-

[1]इन्द्रा॑य । अन्वृ॑जव॒ इत्यनु॑—ऋ॒ज॒वे॒ । पु॒रो॒डा-
श॑म् । एका॑दशकपाल॒मित्येका॑दश—क॒पा॒ल॒म् ।
निरिति॑ । व॒पे॒त् । ग्राम॑काम॒ इ॒ति॒ ग्राम॑—का॒मः॒ ।
इन्द्र॑म् । ए॒व । अन्वृ॑जु॒मित्यनु॑—ऋ॒जु॒म् । स्वेन॑ ।
भा॒ग॒धेये॒नेति॑ भाग—धेये॑न । उपेति॑ । धा॒व॒ति॒ । सः ।
ए॒व । अ॒स्मै॒ । स॒जा॒ताऩिति॑ स—जा॒तान् । अनु॑-
का॒नित्यनु॑—का॒न् । क॒रो॒ति॒ । ग्रा॒मी । ए॒व । भ॒व॒-
ति॒ । [2]इ॒न्द्रा॒ण्यै । च॒रुम् । निरिति॑ । व॒पे॒त् । यस्य॑ ।

---

[1]इन्द्रायान्वृजव इत्यादि ॥ अनुक्रमेणार्जयति प्रापयति विधे-यीकरोतीत्यन्वृजुः । ऋजु गतौ, औणादिक उप्रत्ययः, व्यत्ययेनाव्ययपूर्वपदप्रकृतिस्वरत्वम् । यद्वा—अनुगता ऋजवो यस्मिन्नित्यन्वृजुः, सर्वेऽप्यस्मिन् ऋजवो भवन्तीति । ग्रामकामः ग्रामं वशीकर्तुकामः । अनुकानिति । इममेव कामयमानान् करोति । 'अनुकाभिकाभीकः कमिता' इति निपात्यते ॥

[2]इन्द्राणीन्द्रपत्नी । 'इन्द्रवरुण' इति ङीप्, आनुगागमश्च,

स्य सेनाऽस॑ꣳशितेव॒ स्यादिन्द्रा॒णी
वै सेना॑यै दे॒वतेन्द्रा॒णीमे॒व स्वेन॑ भा-
ग॒धेये॒नोप॑ धावति॒ सैवास्य॒ सेना॒ꣳ
सꣳ श्यति॒ वल्व॑जा॒नपि॑ ॥ ४० ॥
इ॒ध्मे सन्न॑ह्ये॒द्गौर्यत्राधि॑ष्कन्ना॒ न्यमे॑-
ह॒त्तत॒ो वल्व॑जा॒ उद॑तिष्ठ॒न्गवा॑मे॒वैन॑

सेना॑ । अस॑ꣳशि॒तेत्यस॑—शि॒ता । इ॒व । स्यात् ।
इ॒न्द्रा॒णी । वै । सेना॑यै । दे॒वता॑ । इ॒न्द्रा॒णीम् । ए॒व ।
स्वेन॑ । भा॒ग॒धेये॒नेति॑ भाग—धेये॑न । उपेति॑ । धा॒व॒ति॒ ।
सा । ए॒व । अ॒स्य॒ । सेना॑म् । समिति॑ । श्य॒ति॒ ।
वल्व॑जान् । अपीति॑ ॥ ४० ॥ इ॒ध्मे । समिति॑ ।
न॒ह्ये॒त् । गौः । यत्र॑ । आधि॑ष्क॒न्नेत्यधि॑—स्क॒न्ना ।
न्यमे॑ह॒दिति॑ नि—अमे॑हत् । तत॑ः । वल्व॑जाः ।
उदिति॑ । अ॒ति॒ष्ठ॒न् । गवा॑म् । ए॒व । ए॒न॒म् । न्या-

---

'उदात्तयणः' इति विभक्तेरुदात्तत्वम् । असंशिता अधृता स्वमार्गेऽनवस्थिता, अतीक्ष्णा वा, अनुज्ज्वला वा । वल्वजान् दीर्घतृणानि यैः कटः क्रियते तानपीध्मे सन्नह्य सह बद्ध्वा संहवेध्मेन अभ्यादधाति सह वा प्रोक्षेत् । अधिष्कन्नेति । अधिकं स्कन्नं अधिकपुरीषस्राविणी यत्र न्यमेहत् नितरां मेहति तत्र जायन्ते वल्व-

न्यायमपिनीय गा वेदयतीन्द्राय
मन्युमते मनस्वते पुरोडाशमेका-
दशकपालं निर्वपेत्सङ्ग्रामे संयत्त
इन्द्रियेण वै मन्युना मनसा सङ्ग्रा-
मं जयतीन्द्रमेव मन्युमन्तं मन-
स्वन्तꣳ स्वेन भागधेयेनोप धावति

यमिति नि–आयम् । अपिनीयेत्यपि–नीय । गाः । वेदयति । [3]इन्द्राय । मन्युमत इति मन्यु–मते । मनस्वते । पुरोडाशम् । एकादशकपालमित्येका-दश–कपालम् । निरिति । वपेत् । सङ्ग्राम इति सं–ग्रामे । संयत्त इति सं–यत्ते । इन्द्रियेण । वै । मन्युना । मनसा । सङ्ग्राममिति सं–ग्रामम् । जयति । इन्द्रम् । एव । मन्युमन्तमिति मन्यु–मन्तम् । मनस्वन्तम् । स्वेन । भागधेयेनेति भा-ग–धेयेन । उपेति । धावति । सः । एव । अस्मि-

---

जाः । गवामित्यादि । गवामग्रे एषां प्रवेशेन गाः वेदयति लम्भ-यति सेनास्वामिनम् ॥

[3]इन्द्राय मन्युमते इति ॥ मनस्वान् उद्धत*मनस्कः । इन्द्रि-यादित्रयेण संग्रामजयः ॥

---

*ख–उग्रत.

स एवास्मिन्निन्द्रियं मन्युं मनो दधाति जयति तम् ॥ ४१ ॥ सङ्ग्राममेतामेव निर्वपेद्यो हतमना-स्स्वयम्पाप इव स्यादेतानि हि वा एतस्मादपक्रान्तान्यथैष हतमना-स्स्वयम्पाप इन्द्रमेव मन्युमन्तं मनस्वन्तꣳ स्वेन भागधेयेनोप धाव-

न् । इन्द्रियम् । मन्युम् । मनः । दधाति । जयति । तम् ॥ ४१ ॥ सङ्ग्राममिति सं-ग्रामम् । [1]एताम् । एव । निरिति । वपेत् । यः । हतमना इति हत-मनाः । स्वयम्पाप इति स्वयं-पापः । इव । स्यात् । एतानि । हि । वै । एतस्मात् । अपक्रान्तानीत्यप-क्रान्तानि । अथ । एषः । हतमना इति हत-मनाः । स्वयम्पाप इति स्वयं-पापः । इन्द्रम् । एव । मन्युमन्तमिति मन्यु-मन्तम् । मनस्वन्तम् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अ-

[1]एतामित्यादि ॥ गतम् । हतमनाः प्रतिबद्धप्रभानः स्वयम्पापः

ति॒ स ए॒वास्मि॑न्निन्द्रि॒यं म॒न्युं मनो॑
द॒धाति॒ न ह॒तम॑नास्स्व॒यम्पा॑पो भ-
व॒तीन्द्रा॑य दा॒त्रे पु॑रो॒डाश॒मेका॑दश-
कपाल॒ं निर्व॑पे॒द्यः का॒मये॑त॒ दान॑का-
मा मे प्र॒जास्स्यु॒ः ॥ ४२ ॥ इती-
न्द्र॑मे॒व दा॒तार॒ꣳ स्वेन॑ भाग॒धेये॒नोप॑
धावति॒ स ए॒वास्मै॒ दान॑कामाः प्र-

स्मिन्॒ । इ॒न्द्रि॒यम् । म॒न्युम् । मन॑ः । द॒धाति॒ । न ।
ह॒तम॑ना॒ इति॑ ह॒त-म॒नाः । स्व॒यम्पा॒प॒ इति॑
स्व॒यं-पा॒पः । भ॒व॒ति॒ । [b]इन्द्रा॑य । दा॒त्रे । पु॒रो॒डा-
शम् । एका॑दशकपाल॒मित्येका॑दश-क॒पा॒ल॒म् ।
निरिति॑ । व॒पे॒त् । यः । का॒मये॑त । दान॑का॒मा॒
इति॒ दान॑-का॒माः । मे॒ । प्र॒जा इति॑ प्र-जाः ।
स्यु॒ः ॥ ४२ ॥ इति॑ । इन्द्र॑म् । ए॒व । दा॒तार॑म् ।
स्वेन॑ । भा॒ग॒धेये॒नेति॑ भाग-धेये॑न । उपेति॑ । धा॒व॒-
ति॒ । सः । ए॒व । अ॒स्मै॒ । दान॑का॒मा॒ इति॒ दान॑-

असत्यविचारेण* स्वरूपेण पापः । एतानीति इन्द्रियमन्युमनांसि अस्मादपक्रान्तानि । अथानन्तरमेव हतमनाः स्वयम्पापश्च भवति ॥

[b]इन्द्राय दात्र इत्यादि ॥ गतम् ॥

*क, ख–असत्यपिचरेण.

जाः करोति दानकामा अस्मै प्र-
जा भवन्तीन्द्राय प्रदात्रे पुरोडाश-
मेकादशकपालं निर्वपेद्यस्मै प्रत्त-
मिव सन्न प्रदीयेतेन्द्रमेव प्रदातारꣳ
स्वेन भागधेयेनोप धावति स एवा-
स्मै प्र दापयतीन्द्राय सुत्राम्णे पु-

कामाः । प्रजा इति प्र—जाः । करोति । दान-कामा इति दान—कामाः । अस्मै । प्रजा इति प्र—जाः । भवन्ति । [6]इन्द्राय । प्रदात्र इति प्र—दात्रे । पुरोडाशम् । एकादशकपालमित्येकादश—कपालम् । निरिति । वपेत् । यस्मै । प्रत्तम् । इव। सत् । न । प्रदीयेतेति प्र—दीयेत । इन्द्रम् । एव। प्रदातारमिति प्र—दातारम् । स्वेन । भागधेयेनेति भाग—धेयेन । उपेति । धावति । सः । एव । अ-स्मै । प्रेति । दापयति । [7]इन्द्राय । सुत्राम्ण इति सु—त्राम्णे । पुरोडाशम् । एकादशकपालमित्ये-

[6]इन्द्राय प्रदात्र इत्यादि ॥ प्रकर्षेण दाता प्रदाता । प्रत्तमेव सन्न प्रदीयेत [....त यस्मै] तस्य दात्राऽप्रत्तमदत्तं प्रदापयति ॥

[7]सुत्रामा सुष्ठु त्राता । 'आतो मनिन्' इति मनिन्प्रत्ययः। अपरुद्धः अपरोधनमैश्वर्यभङ्गः, राष्ट्रभ्रंशो वा ॥

रोडाशमेकादशकपालं निर्वपेदपरुद्धो वा ॥ १३ ॥ अपरुध्यमानो वेन्द्रमेव सुत्रामाणꣳ स्वेन भागधेयेनोप धावति स एवैनं त्रायतेऽनपरुध्यो भवतीन्द्रो वै सदृङ्देवताभिरासीत्स न व्यावृतमगच्छत्स प्रजापतिमुपाधावत्तस्मा एतमैन्द्रमेका-

कादश–कपालम् । निरिति । वपेत् । अपरुद्ध इत्यप–रुद्धः । वा ॥ १३ ॥ अपरुद्ध्यमान इत्यप–रुध्यमानः । वा । इन्द्रम् । एव । सुत्रामाणमिति सु–त्रामाणम् । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । सः । एव । एनम् । त्रायते । अनपरुध्य इत्यनप–रुध्यः । भवति । [9]इन्द्रः । वै । सदृङ्ङिति स–दृङ् । देवताभिः । आसीत् । सः । न । व्यावृतमिति वि–आवृतम् । अगच्छत् । सः । प्रजापतिमिति प्रजा–पतिम् । उपेति । अधावत् । तस्मै । एतम् । ऐन्द्रम् । ए-

[9]सदृङ् सदृशः । ‘ समानान्ययोश्च ’ इति क्विन्प्रत्ययः । अस्मै यजमानाय इदं मया दत्तमिति केनचित् [केनचित्] व्यावृत् व्यावृत्तिः । सम्प-.

दशकपालं निरवपत्तेनैवास्मिन्नि-
न्द्रियमदधाच्छक्करी याज्यानुवाक्ये
अकरोद्वज्रो वै शक्करी स एनं वज्रो
भूत्या ऐन्ध ॥ ४४ ॥ सोऽभवत्सो-
ऽबिभेद्भूतः प्र मा धक्ष्यतीति स प्र-

कादशकपालमित्येकादश–कपालम् । निरिति । अवपत् । तेन । एव । अस्मिन् । इन्द्रियम् । अदधात् । शक्करी इति । याज्यानुवाक्ये इति याज्या–अनुवाक्ये । अकरोत् । वज्रः । वै । शक्करी । सः । एनम् । वज्रः । भूत्यै । ऐन्ध ॥४४॥ सः । अभवत् । सः । अबिभेत् । भूतः । प्रेति । मा । धक्ष्यति । इति । सः । प्रजापतिमिति प्रजा–पतिम् । पुनः । उपे-

---

दादिल्लक्षणः क्विप् । शक्करी शक्कर्यौ याज्यानुवाक्ये द्वे अप्यकरोत् । सप्तपदा शक्करी । सा शक्त्यतिशयाद्वज्रतुल्या । स च शक्कर्यात्मा वज्र एनं भूत्यर्थं ऐन्ध दीप्तिमकरोत् । स चाभवत् भूतिमगमयत् । अथ स इन्द्रोऽबिभेत् भूतः भूतिं गतोऽपि पुनरबिभेत् अयं शक्करो वज्रः प्रधक्ष्यति मामिति । स इत्यादि । गतम् । शक्कर्या अधि शक्कर्यामधि शक्करीस्थाने पुरोनुवाक्यां रेवतीं निरमिमीत प्रक्षुप्तवान् । यद्वा—शक्कर्या अधि रेवतीं निरमिमीत पृथक्त्वेन निर्मितवान् शिष्टं पादत्रयं त्यक्तवान् ।

जापतिं पुनरुपाधावत्स प्रजापति-
श्शक्कर्या अधि रेवतीं निरमिमीत
शान्त्या अप्रदाहाय योलꣳ श्रियै
सन्त्सदृङ्ख्समानैस्स्यात्तस्मा एत-
मैन्द्रमेकादशकपालं निर्वपेदिन्द्रमे-
व स्वेन भागधेयेनोप धावति स

ति । अधावत् । सः । प्रजापतिरिति प्रजा-पतिः । शक्कर्याः । अधीति । रेवतीम् । निरिति । अमिमीत । शान्त्यै । अप्रदाहायेत्यप्र-दाहाय । [1]यः । अलम् । श्रियै । सन् । सदृङ्ङिति स-दृङ् । समानैः । स्यात् । तस्मै । एतम् । ऐन्द्रम् । एकादशकपालमित्येकादश-कपालम् । निरिति । वपेत् । इन्द्रम् । एव । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । सः । एव । अ-

तादृशी शक्कर्यस्तीतीदमेव प्रमाणम् । सा च रेवती शान्त्या अप्रदाहायाभवत् । तत्र 'रेवतीर्नस्सधमादः'* इति पुरोनुवाक्या रेवतीशब्दयोगाद्रेवती । अत एव धनसम्बन्धात् शान्त्या अप्रदाहाय च भवति ॥

[1]योलमिति ॥ अधिकां श्रियं प्राप्तुं योग्योपि यस्समानैस्तुल्य-

*सं. १-७-१३.[13]

एवास्मिन्निन्द्रियं दधाति रेवती पु-
रोऽनुवाक्या भवति शान्त्या अप्र-
दाहाय शक्करी याज्या वज्रो वै श-
क्करी स एनं वज्रो भूत्वा इन्धे भ-
वत्येव ॥ ४५ ॥

स्मिन् । इन्द्रियम् । दधाति । रेवती । पुरोनुवा-
क्येति पुरः—अनुवाक्या । भवति । शान्त्यै । अ-
प्रदाहायेत्यप्र—दाहाय । शक्करी । याज्या । वज्रः ।
वै । शक्करी । सः । एनम् । वज्रः । भूत्यै । इन्धे ।
भवति । एव ॥ ४५ ॥

अपि तꣳ स्युवैन्ध भवति चतुर्दश च ॥ ८ ॥

---

श्रीक एव भवति । 'प्रोप्वस्मै'* इति सप्तपदा शक्करी या-
ज्या । गतमन्यत् ॥

इति द्वितीये द्वितीये अष्टमोनुवाकः.

---

*सं. १-७-१३.१६

आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्थ्सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यदाग्नावैष्णव एकादशकपालो भवत्यग्निस्सर्वा देवता विष्णुर्यज्ञो देवताभिश्चैवैनं यज्ञेन चाभि चरति सरस्वत्याज्यभागा भवति वाग्वै सरस्वती वाचैवैनमभि

[1]आग्नावैष्णवमित्याग्ना–वैष्णवम् । एकादशकपालमित्येकादश–कपालम् । निरिति । वपेत् । अभिचरन्नित्यभि–चरन् । सरस्वती । आज्यभागेत्याज्य–भागा । स्यात् । बार्हस्पत्यः । चरुः । यत् । आग्नावैष्णव इत्याग्ना–वैष्णवः । एकादशकपाल इत्येकादश–कपालः । भवति । अग्निः । सर्वाः । देवताः । विष्णुः । यज्ञः । देवताभिः । च । एव । एनम् । यज्ञेन । च । अभीति । चरति । सरस्वती । आज्यभागेत्याज्य–भागा । भवति । वाक् । वै । सरस्वती । वाचा । एव । एनम् ।

---

[1]आग्नावैष्णवमित्यादि ॥ अनिष्टकारिणं प्रत्यनिष्टाचरणं अभिचारः । आज्यं भागो यस्यास्सा आज्यभागा सरस्वती, आज्यहविष्केत्यर्थः । सा द्वितीया देवता द्वितीयस्य हविषः ॥

चरति बार्हस्पत्यश्चरुर्भवति ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवैनमभि चरति ॥ ४६ ॥ प्रति वै परस्तादभिचरन्तमभि चरन्ति द्वेद्वे पुरोनुवाक्ये

अभीति । चरति । बार्हस्पत्यः । चरुः । भवति । ब्रह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्मणा । एव । एनम् । अभीति । चरति ॥ ४६ ॥ प्रतीति । वै । परस्तात् । अभिचरन्तमित्यभि–चरन्तम् । अभीति । चरन्ति । द्वेद्वे इति द्वे–द्वे । पुरोनुवाक्ये इति पुरः–अनुवाक्ये । कुर्यात् । अतीति । प्रयु-

---

[२]प्रति वा इत्यादि ॥ प्रथममेवाभिचरन्तं अभिचारप्रवृत्तं शत्रुं परस्तादयं प्रत्यभिचरति । तस्मात्प्रत्यभिचारद्योतनाय द्वेद्वे पुरोनुवाक्ये कुर्यात्, द्विर्द्विः पुरोनुवाक्यामन्वाहेत्यर्थः । अत्र प्रकृतिद्वित्वापेक्षं द्विर्वचनम् । पक्षान्तरम्—'अग्नाविष्णू सजोषसा'* 'अग्नाविष्णू महि तत्'† इति प्रथमस्य पुरोनुवाक्ये । 'अग्नाविष्णू महि धाम'† इति याज्या । 'प्रणो देवी'† 'आ नो दिवः'† इति द्वितीयस्य पुरोनुवाक्ये । 'पावीरवी'‡ इति याज्या । 'बृहस्पते जुषस्व नः'† इति 'एवा पित्रे'† इति तृतीयस्य पुरोनुवाक्ये । 'बृहस्पते अति यत्'† इति याज्या इति । अति-

*सं. ४-७-१. †सं. १-८-२२[1]–7. ‡सं. ४-१-११.

कुर्यादिति प्रयुक्त्या एतयैव यजेता-
भिचर्यमाणो देवताभिरेव देवताः
प्रतिचरति यज्ञेन यज्ञं वाचा वाचं
ब्रह्मणा ब्रह्म स देवताश्चैव यज्ञं च
मध्यतो व्यवसर्पति तस्य न कुर्त-

कुथा इति प्र-युक्त्यै । [3]एतया । एव । यजेत । अभिचर्यमाण इत्यभि-चर्यमाणः । देवताभिः । एव । देवताः । प्रतिचरतीति प्रति-चरति । यज्ञेन । यज्ञम् । वाचा । वाचम् । ब्रह्मणा । ब्रह्म । सः । देवताः । च । एव । यज्ञम् । च । मध्यतः । व्यवसर्पतीति वि-अवसर्पति । तस्य । न । कुर्तः ।

---

प्रयुक्त्यै अतिशयेन प्रयुक्त्यर्थम् । अभिचरन्तं सकृत्प्रयुञ्जानं द्विःप्रयोगेणाप्यतिशेत इति । यदा तु द्विर्द्विः पुरोनुवाक्यामन्वाह तदानीं त्रिस्त्रिर्हविषामवद्यतीति । काः पुनस्ताः पुरोनुवाक्याः ? उच्यन्ते—'अग्नाविष्णू महि तद्वां महित्वम्'* 'प्रणो देवी सरस्वती'† 'बृहस्पते जुषस्व नः'‡ इत्येताः ॥

[3]एतयैवेति ॥ त्रिहविषा प्रकृतया इष्ट्या । अभिचर्यमाण इति । योऽभिचर्यमाणोऽभिचारफलमनर्थमभिचारिण्येव संक्रामयितुमिच्छति सोऽप्येतया यजेत । देवताभिरिति । आ तृतीयैर्देवतादिभिः

---

*सं. १-८-२२.१ †सं. १-८-२२.३ ‡सं. १-८-२२.५

श्नोपाव्याधो भवति नैनमभिचरं-
न्स्तृणुत आग्नावैष्णवमेकादशक-
पालं निर्वपेद्यं यज्ञो न ॥४७॥ उपन-
मेदग्निस्सर्वा देवता विष्णुर्यज्ञोऽग्निं
चैव विष्णुं च स्वेन भागधेयेनोप
धावति तावेवास्मै यज्ञं प्र यच्छ-

चन । उपाव्याध इत्युप-आव्याधः । भवति । न । एनम् । अभिचरन्नित्यभि-चरन् । स्तृणुते । [1]आग्नावैष्णवमित्याग्ना-वैष्णवम् । एकादशकपालमित्येकादश-कपालम् । निरिति । वपेत् । यम् । यज्ञः । न ॥ ४७ ॥ उपनमेदित्युप-नमेत् । अग्निः । सर्वाः । देवताः । विष्णुः । यज्ञः । अग्निम् । च । एव । विष्णुम् । च । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । तौ । एव । अस्मै । यज्ञम् । प्रेति । यच्छतः । उपेति । एनम् ।

परकीयान् प्रतिचरति तस्यैव सकाशं प्रापयति । ततस्तान् देवतादीन् शत्रोरात्मनश्च मध्ये विविधमवसर्पयति साधयति । ततस्तस्य कुतश्चिदन्यस्मादपि बाधकादुपाव्याधः उपपीडा न भवति । अत एवैनमभिचरन् न स्तृणुते न हिनस्ति ॥

[1]यज्ञस्योपनतिरियं केपाद्धर्मः(?) [ तेषामेव धर्मः ] ॥

तु उपैनं यज्ञो नमत्याग्नावैष्णवं घृ-
ते चरुं निर्वपेच्चक्षुष्कामोऽग्नेर्वै चक्षुषा
मनुष्या वि पश्यन्ति यज्ञस्य देवा
अग्निं चैव विष्णुं च स्वेन भागधे-
येनोप धावति तावेव॥४८॥अस्मि-
ञ्चक्षुर्धत्तश्चक्षुष्मानेव भवति धेन्वै वा

यज्ञः । नमति । [5]आग्नावैष्णवमित्याग्ना–वैष्णवम् । घृते । चरुम् । निरिति । वपेत् । चक्षुष्काम इति चक्षुः–कामः । अग्नेः । वै । चक्षुषा । मनुष्याः । वीति । पश्यन्ति । यज्ञस्य । देवाः । अग्निम् । च । एव । विष्णुम् । च । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । तौ । एव॥४८॥ अस्मिन् । चक्षुः । धत्तः । चक्षुष्मान् । एव । भवति । धेन्वै । वै । एतत् । रेतः । यत् । आ-

---

[5]अग्नेर्वा इत्यादि ॥ तृतीयार्थे षष्ठी । अग्निना चक्षुषा मनुष्या विविधं पश्यन्ति, यज्ञेन चक्षुषा देवाः । यद्वा—चक्षुर्दर्शनं, अग्नेर्यज्ञस्य दर्शनेनेति । रेत इति । भक्षिततृणादिपरिणामत्वात् कार्यमित्यर्थः । कृष्यादिद्वारेणानडुहः कार्याः तण्डुलाः तस्माद्घृते चरुं निर्वपन् मिथुनात् धेन्वनडुहः चक्षुः प्रजनयति, मिथुनाद्धि सर्वाः प्रजायन्ते इति भावः । घृते भवतीत्यादि । गतम् ॥

एतद्रेतो यदाज्यमनडुहस्तण्डुला मिथुनादेवास्मै चक्षुः प्र जनयति घृते भवति तेजो वै घृतं तेजश्चक्षुस्तेजसैवास्मै तेजश्चक्षुरव रुन्ध इन्द्रियं वै वीर्यं वृङ्क्ते भ्रातृव्यो यजमानोऽयजमानस्याध्वरकल्पां प्रति

ज्यम् । अनडुहः । तण्डुलाः । मिथुनात् । एव । अस्मै । चक्षुः । प्रेति । जनयति । घृते । भवति । तेजः । वै । घृतम् । तेजः । चक्षुः । तेजसा । एव । अस्मै । तेजः । चक्षुः । अवेति । रुन्धे । [6]इन्द्रियम् । वै । वीर्यम् । वृङ्क्ते । भ्रातृव्यः । यजमानः । अयजमानस्य । अध्वरकल्पामित्यध्वर—कल्पाम् । प्रति । निरिति । वपेत् । भ्रातृव्ये । यज-

[6]इन्द्रियं वा इत्यादि ॥ भ्रातृव्यो यजमानस्सोमेनेष्टवांश्चेत् अयजमानस्य इन्द्रियं वागादिकं वीर्यं च वृङ्क्ते वर्जयति स्वयमाददीत, तस्माद्भ्रातृव्यो यजमानः सोमेनेष्टवांश्चेत् अयजमानोन्यः* अध्वरकल्पां अध्वरतुल्यां इष्टिं प्रतिनिर्वपेत् अध्वरकल्पया यजेत। पुरा वाचः प्रवदितोरिति । प्रातरनुवाककाल इत्यर्थः । विहगा-

*ए,—भ्रातृव्ये सोमेन यजमाने सति अन्यः.

निर्वपेद्भ्रातृव्ये यजमाने नास्येन्द्रि-
यम् ॥ ४१ ॥ वीर्यं वृङ्क्ते पुरा वाचः
प्रवदितोर्निर्वपेद्यावत्येव वाक्तामप्रो-
दितां भ्रातृव्यस्य वृङ्क्ते तामस्य वा-
चं प्रवदन्तीमन्या वाचोनु प्र वदन्ति

माने । न । अस्य । इन्द्रियम् ॥ ४१ ॥ वीर्यम् । वृङ्क्ते । पुरा । वाचः । प्रवदितोरिति प्र-वदितोः । निरिति । वपेत् । यावती । एव । वाक् । ताम् । अप्रोदितामित्यप्र-उदिताम् । भ्रातृव्यस्य । वृङ्क्ते । ताम् । अस्य । वाचम् । प्रवदन्तीमिति प्र-वदन्तीम् । अन्याः । वाचः । अनु । प्रेति । वदन्ति । ताः । इन्द्रियम् । वीर्यम् । यजमाने । दधति ।

---

दयः यावद्वाचं प्रवदन्ति तावदुत्थाय निर्वपेत् । 'भावलक्षणे स्थेण्कृञ्वदि' इति तोसुन्प्रत्ययः । यावत्येव वाक्तां सर्वामप्रोदितामेव भ्रातृव्यस्य वृङ्क्ते । तथा न सति तामस्य प्रवदन्तीं प्रकर्षेण सर्वोत्कर्षेण वदन्तीं वाचमनुप्रवदन्ति । प्रजानां सर्वा अन्या वाचः तस्या गुणभूतां वदन्ति । अथ ताश्च तादृश्यो वाचः प्राधान्यमस्याविप्कुर्वाणा अस्मिन् यजमाने अध्वरकल्पामिष्टिं कुर्वाणे इन्द्रियं वीर्यं न दधति ॥

ता इन्द्रियं वीर्यं यजमाने दधत्याग्ना-
वैष्णवमष्टाकपालं निर्वपेत्प्रातस्सव-
नस्याकाले सरस्वत्याज्यभागा स्या-
द्बार्हस्पत्यश्चरुर्यदष्टाकपालो भव-
त्यष्टाक्षरा गायत्री गायत्रं प्रातस्सवनं
प्रातस्सवनमेव तेनाप्नोति ॥ ५० ॥

[1]आग्नावैष्णवमित्याग्ना—वैष्णवम् । अष्टाकपाल-मित्यष्टा—कपालम् । निरिति । वपेत् । प्रातस्सव-नस्येति प्रातः—सवनस्य । आकाल इत्या—काले । सरस्वती । आज्यभागेत्याज्य—भागा । स्यात् । बार्हस्पत्यः । चरुः । यत् । अष्टाकपा-ल इत्यष्टा—कपालः । भवति । अष्टाक्षरेत्यष्टा-अक्षरा । गायत्री । गायत्रम् । प्रातस्सवनमिति प्रातः—सवनम् । प्रातस्सवनमिति प्रातः—सवनम् । एव । तेन । आप्नोति ॥ ५० ॥ आग्नावैष्णवमि-

---

[1]इदानीमध्वरकल्पां विदधाति—आग्नावैष्णवमित्यादि ॥ प्रातस्सवनस्याकाल इति । आकलनमाकालः । थाथादिनोत्तरपदान्तोदात्तत्वम् । प्रातस्सवनस्य स्थाने । यद्वा—प्रातस्सवनस्य यः कालः आ ततः आतत्समाप्तेः । आङभिविधौ । अव्ययीभावः, 'तृतीयासप्तम्योर्बहुलम्' इत्यम्भावाभावः, अव्ययपूर्वपदप्रकृतिस्वरत्वस्य तत्पु-

आग्नावैष्णवमेकादशकपालं निर्वपे-
न्माध्यंन्दिनस्य सवनस्याकाले स-
रस्वत्याज्यभागा स्याद्बार्हस्पत्यश्च-
रुर्यदेकादशकपालो भवत्येकादशा-
क्षरा त्रिष्टुप्त्रैष्टुभं माध्यंन्दिनꣳ स-
वनं माध्यन्दिनमेव सवनं तेनाप्नो-
त्याग्नावैष्णवं द्वादशकपालं निर्वपे-

त्याग्ना–वैष्णवम् । एकादशकपालमित्येकादश–कपालम् । निरिति । वपेत् । माध्यंन्दिनस्य । सवनस्य । आकाल इत्या–काले । सरस्वती । आज्यभागेत्याज्य–भागा । स्यात् । बार्हस्पत्यः । चरुः । यत् । एकादशकपाल इत्येकादश–कपालः । भवति । एकादशाक्षरेत्येकादश–अक्षरा । त्रिष्टुप् । त्रैष्टुभम् । माध्यंन्दिनम् । सवनम् । माध्यन्दिनम् । एव । सवनम् । तेन । आप्नोति । आग्नावैष्णवमित्याग्ना–वैष्णवम् । द्वादशकपालमिति द्वादश–कपालम् । निरिति । वपेत् । तृतीयसवनस्येति

रूपविषयत्वात् समासान्तोदात्तत्वम् । सरस्वत्याज्यभागेत्यादि । गतम् ।* एवं माध्यन्दिनतृतीयसवनयोर्वेदितव्यम् । त्रिष्टुब्जगतीशब्दाभ्यामुत्सा-

*सं. २-२-९.[1]

तृतीयसवनस्याकाले सरस्वत्याज्य-
भागा स्याद्बार्हस्पत्यश्चरुर्यद्द्वादश-
कपालो भवति द्वादशाक्षरा जगती
जागतं तृतीयसवनं तृतीयसवनमेव
तेनाप्नोति देवताभिरेव देवताः॥५१
प्रतिचरति यज्ञेन यज्ञं वाचा वाचं ब्र-

तृतीय–सवनस्य । आकाल इत्या–काले । सरस्वती । आज्यभागेत्याज्य–भागा । स्यात् । बार्हस्पत्यः । चरुः । यत् । द्वादशकपाल इति द्वादश–कपालः । भवति । द्वादशाक्षरेति द्वादश–अक्षरा । जगती । जागतम् । तृतीयसवनमिति तृतीय–सवनम् । तृतीयसवनमिति तृतीय–सवनम् । एव । तेन । आप्नोति । देवताभिः । एव । देवताः ॥५१॥ प्रतिचरतीति प्रति–चरति । यज्ञेन । यज्ञम् । वाचा । वाचम् । ब्रह्मणा । ब्रह्म । [8]कपालैः ।

दित्यादस् । गायत्रादिविभक्तत्वात्सवनानां गायत्रं त्रैष्टुभं जागतमित्युच्यते । देवताभिरित्यादि । व्याख्यातम्* ॥

[8]कपालैरिति ॥ अष्टत्वादिविशिष्टैः कपालैः गायत्र्यादीनि मातस्स-

*सं. २-२-९.३

ह्मंणा ब्रह्मं कुपालैरेव छन्दाꣳस्या-
प्नोति पुरोडाशैस्सवनानि मैत्रावरु-
णमेकंकपालं निर्वपेद्वशायै काले
यैवासौ भ्रातृंव्यस्य वशानूंबन्ध्या
सो एवैषैतस्यैकंकपालो भवति न

एव । छन्दाꣳसि । आप्नोति । पुरोडाशैः । सवं-
नानि । [9]मैत्रावरुणमितिं मैत्रा-वरुणम् । एकं-
कपालमित्येकं-कपालम् । निरितिं । वपेत् । व-
शायै । काले । या । एव । असौ । भ्रातृंव्यस्य ।
वशा । अनू बन्ध्येत्यंनु-बन्ध्या । सो इतिं । एव ।
एषा । एतस्य । एकंकपाल इत्येकं-कपालः ।

---

वनादिसंम्बन्धीनि छन्दांस्याप्नोति । [illegible]
प्रातस्सवनादीन्याप्नोति ॥

[9]वशायै काल इति ॥ [illegible]
वा । यैवासौ पूर्वं भ्रातृव्य[illegible]
सैवैषा एतस्य यजमानस्यार्थं [illegible]
प्रतिक्रियेत्यर्थः । सा [illegible] । [illegible]
इति पदद्वयसमुदायो वा । [illegible]
'ओत्' इति प्र[illegible] । [illegible] । [illegible]
निर्दिश्यते । कश्चिदाह—[illegible]

हि कुपालैः पुशुमर्हत्यातुम्॥५२॥
असावादित्यो न व्यरोचत तस्मै
देवाः प्रायश्चित्तिमैच्छन्तस्मा एत॰

भवति । न । हि । कुपालैः । पुशुम् । अर्हति ।
आतुम् ॥ ५२ ॥

ब्रह्मणैवैनमभि चरति यज्ञो न तावेवास्ये-
न्द्रियमाप्नोति देवतास्सप्तत्रिंशच्च ॥९॥

[1]असौ । आदित्यः । न । वीति । अरोचत ।
तस्मै । देवाः । प्रायश्चित्तिम् । ऐच्छन् । तस्मै ।
एतम् । सोमारौद्रमिति सोमा-रौद्रम् । चुरुम् ।

---

पशुमातुं क्रियते । तत्र पुरोडाश एव पश्वाप्तिहेतुः । अतः कपालपर[लवह्न]त्वमकिंचित्करम् । पुरोडाशनिष्पत्त्यर्थमेकं कपालमस्त्विति ॥

इति द्वितीये द्वितीये नवमोऽनुवाकः.

---

[1]असावादित्य इत्यादि ॥ सोमारौद्रमिति । उत्तरपदवृद्धिश्छान्दसी । तिष्यापौर्णमासे इति । तैष्यां पौर्णमास्यामित्यर्थः । तिष्येण सहितः पूर्णमासस्तिष्यापूर्णमासः । 'अन्येषामपि दृश्यते' इति

सोमारौद्रं चरुं निरवपन्तेनैवास्मि-
न्रुचमदधुर्यो ब्रह्मवर्चसकामस्स्यात्त-
स्मा एतꣳ सोमारौद्रं चरुं निर्वपे-
त्सोमं चैव रुद्रं च स्वेन भागधेये-
नोप धावति तावेवास्मिन्ब्रह्मवर्चसं
धत्तो ब्रह्मवर्चस्येव भवति तिष्यापू-
र्णमासे निर्वपेद्रुद्रः ॥ ५३ ॥ वै

निरिति । अवपन्न् । तेन । एव । अस्मिन्न् । रुचम् । अदधुः । यः । ब्रह्मवर्चसकाम इति ब्रह्मवर्चस-कामः । स्यात् । तस्मै । एतम् । सोमारौद्रमिति सोमा-रौद्रम् । चरुम् । निरिति । वपेत् । सोमम् । च । एव । रुद्रम् । च । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । तौ । एव । अस्मिन्न् । ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । धत्तः । ब्रह्मवर्चसीति ब्रह्म-वर्चसी । एव । भवति । तिष्यापूर्णमास इति तिष्या-पूर्णमासे । निरिति । वपेत् । रुद्रः ॥ ५३ ॥ वै । तिष्यः ।

---

दीर्घत्वम् । तिष्यः पुष्यः । रुद्रो वा इत्यादि । तयोस्तत्प्रधानत्वात्ताच्छब्द्यम् । साक्षादिति । अन्यवधानेन द्वयोरपि तेजस्वित्वात् ॥

तिष्यंस्सोमः पूर्णमासस्साक्षादेव
ब्रह्मवर्चसमवं रुन्धे परिश्रिते या-
जयति ब्रह्मवर्चसस्य परिगृहीत्यै
श्वेतायैं श्वेतवंथ्सायै दुग्धं मथित-
माज्यं भवत्याज्यं प्रोक्षणमाज्येन
मार्जयन्ते यावदेव ब्रह्मवर्चसं त-

सोमः । पूर्णमास इति पूर्ण–मासः । साक्षादिति स–अक्षात् । एव । ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् । अवेति । रुन्धे । [2]परिश्रित इति परि–श्रिते । याजयति । ब्रह्मवर्चसस्येति ब्रह्म–वर्चसस्य । परिगृहीत्या इति परि–गृहीत्यै । [3]श्वेतायै । श्वेतवंत्साया इति श्वेत–वत्सायै । दुग्धम् । मथितम् । आज्यम् । भवति । आज्यम् । प्रोक्षणमिति प्र–उक्षणम् । आज्येन । मार्जयन्ते । यावत् । एव । ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् । तत् । सर्वम् ।

---

[2]परिश्रिते क[कु]शादिभिः परितः छादिते । ‘याजयति’ इति वचनात्प्रधानं तु परिश्रिते; स्विष्टकृदाद्यपरिश्रिते. एव ॥

[3]श्वेताया इत्यादि ॥ ईदृशेनाज्येन एतत्कुर्यात् । सर्वब्रह्मवर्चसलाभः सर्वं प्रोक्षणमार्जनान्या[नाद्या]ज्येनेति । एवं ब्रह्मवर्चसमति

थ्सर्वं करोत्यति ब्रह्मवर्चसं क्रियत
इत्याहुरीश्वरो दुश्चर्मा भवितोरि-
ति मानवी ऋचौ धाय्ये कुर्याद्यद्वै
किं च मनुरवदत्तद्भेषजम् ॥ ५४ ॥
भेषजमेवास्मै करोति यदि विभी-

करोति । अतीति । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम्। क्रियते । इति । आहुः । ईश्वरः । दुश्चर्मेति दुः—चर्मा । भवितोः । इति । मानवी इति । ऋचौ । धाय्ये इति । कुर्यात् । यत् । वै । किम् । च । मनुः । अवदत् । तत् । भेषजम् ॥ ५४ ॥ भेषजम् । एव । अस्मै । करोति । यदि । विभीयात्।

क्रियते अन्यत्रोत्पाद्यते, तत्रायं दुश्चर्मा श्वित्री भवितुमीश्वरस्स्यादित्याहुर्ब्रह्मविदः, तत्परिहाराय मानवी मानव्यौ ऋचौ धाय्ये कुर्यात्। 'मक्षू देववतः'* इत्यासां द्वे धाय्ये। लोके[†] दधाति। आद्ये इत्येके। अन्त्ये इत्यन्ये। 'देवानां य इन्मनः'* इति सर्वत्रानुपज्यते। 'समिद्ध्यमानः'[‡] इति 'समिद्धः'[‡] इत्येतयोर्मध्ये ये भवतः ते धाय्ये। यद्वा इत्यादि। मननान्मनुः मनस्वी प्रजापतिः। तेनोक्तं सर्वं भेषजं सर्वोपद्रवशमनं भवति। एवं मनोर्विशिष्टत्वान्मानव्योरप्यृचोर्विशिष्टत्वम्। अतस्तयोर्धाय्यात्वाद्दुश्चर्मत्वभयाप्रसङ्गः ॥

*सं. १-८-२२.[11] †स–...इत्यासद्विपासा लोके. ‡ब्रा. ३-५-२.

याद्दुश्चर्मा भविष्यामीति सोमापौ-
ष्णं चरुं निर्वपेत्सौम्यो वै देवतया
पुरुषः पौष्णाः पशवस्स्वयैवास्मै
देवतया पशुभिस्त्वचं करोति न दु-
श्चर्मा भवति सोमारौद्रं चरुं निर्व-
पेत्प्रजाकामस्सोमो वै रेतोधा अ-
ग्निः प्रजानां प्रजनयिता सोम एवा-
वास्मै रेतो दधात्यग्निः प्रजां प्र ज-

दुश्चर्मेति दुः-चर्मा । भविष्यामि । इति । [4]सोमापौष्णमिति सोमा-पौष्णम् । चरुम् । निरिति । वपेत् । सौम्यः । वै । देवतया । पुरुषः । पौष्णाः । पशवः । स्वया । एव । अस्मै । देवतया । पशुभिरिति पशु-भिः । त्वचम् । करोति । न । दुश्चर्मेति दुः-चर्मा । भवति । [5]सोमारौद्रमिति सोमा-रौद्रम् । चरुम् । निरिति । वपेत् । प्रजाकाम इति प्रजा-कामः । सोमः । वै । रेतोधा इति रेतः-धाः । अग्निः । प्रजानामिति प्र-जानाम् । प्रजनयितेति प्र-जनयिता । सोमः । एव । अस्मै । रेतः । दधाति । अग्निः । प्रजामिति प्र-

[4-5]सोमापौष्णमिति ॥ पूर्ववद्दुत्तरपदवृद्धिः ॥

नयति विन्दते ॥५५॥ प्रजा॰ सो-
मारौद्रं चरुं निर्वपेदभिचरन्त्सौम्यो
वै देवतया पुरुष एष रुद्रो यदग्नि-
स्स्वाया एवैनं देवतायै निष्क्रीय
रुद्रायापि दधाति ताजगार्तिमार्छ-
ति सोमारौद्रं चरुं निर्वपेज्ज्योगा-

जाम् । प्रेति । जनयति । विन्दते ॥ ५५ ॥ प्र-जामिति प्र–जाम् । [6]सोमारौद्रमिति सोमा–रौद्र-म् । चरुम् । निरिति । वपेत् । अभिचरन्नित्यभि–चरन् । सौम्यः । वै । देवतया । पुरुषः । एषः । रुद्रः । यत् । अग्निः । स्वायाः । एव । एनम् । देवतायै । निष्क्रीयेति निः–क्रीय । रुद्राय । अ-पीति । दधाति । ताजक् । आर्तिम् । एति । ऋ-च्छति । [7]सोमारौद्रमिति सोमा–रौद्रम् । चरुम् । निरिति । वपेत् । ज्योगामयावीति ज्योक्–आ-

[6]अग्निरिति ॥ रोदनाद्रुद्रत्वमग्नेः । स्वाया इति । सौम्यं पुरुषं सोमान्निष्क्रीय रुद्रायाग्नये अपिदधाति उपहरति, ताजक् तदानीमेवार्तिमार्छति ॥

[7]ज्योगामयावी व्याख्यातः* । असितमिति । सोमारुद्रयोः

*सं. २-१-१.5

मयावी सोमं वा एतस्य रसो ग-
च्छत्यग्निꣳ शरीरं यस्य ज्योगामय-
ति सोमादेवास्य रसं निष्क्रीणात्य-
ग्नेश्शरीरमुत यदि ॥ ५६ ॥ इता-
सुर्भवति जीवत्येव सोमारुद्रयोर्वा
एतं ग्रसितꣳ होता निष्खिदति स
ईश्वर आर्तिमार्तोरनड्वान् होत्रा दे-

मयावी । सोमम् । वै । एतस्य । रसः । गच्छति । अग्निम् । शरीरम् । यस्य । ज्योक् । आमयति । सोमात् । एव । अस्य । रसम् । निष्क्रीणातीति निः—क्रीणाति । अग्नेः । शरीरम् । उत । यदि ॥ ५६ ॥ इतासुरितीत—असुः । भवति । जीवति । एव । सोमारुद्रयोरिति सोमा—रुद्रयोः । वै । एतम् । ग्रसितम् । होता । निरिति । खिदति । सः । ईश्वरः । आर्तिम् । आर्तोरित्या—अर्तोः अनड्वान् । होत्रा । देयः । वर्हिः । वै । अनड्वान्

---

आस्यगतं खलु होता याज्यया यजन्निष्खिदति निष्क्रमयति 'असितस्कभित' इति निपात्यते । ततश्च स आर्तिं गन्तुमीश्व रस्स्यात् । तस्मात्तेन होत्रा अन्वाहार्यप्रादनानन्तरं अनड्वान् देयः

यो वह्निर्वा अनड्वान् वह्निर् होता वह्निनैव वह्निमात्मानꣳ स्पृणोति सोमारौद्रं चरुं निर्वपेद्यः कामयेत स्वेऽस्मा आयतने भ्रातृव्यं जनयेयमिति वेदिं परिगृह्यार्धमुद्धन्यादर्धं नार्धं बर्हिषस्स्तृणीयादर्धं ना-

वह्निः । होता । वह्निना । एव । वह्निम् । आत्मानम् । स्पृणोति । [8]सोमारौद्रमिति सोमा–रौद्रम् । चरुम् । निरिति । वपेत् । यः । कामयेत । स्वे । अस्मै । आयतन इत्या–यतने । भ्रातृव्यम् । जनयेयम् । इति । वेदिम् । परिगृह्येति परि–गृह्य । अर्धम् । उद्धन्यादित्युत्–हन्यात् । अर्धम् । न । अर्धम् । बर्हिषः । स्तृणीयात् । अर्धम् । न । अ-

---

तथा सति वह्निना वोढ्रा अनडुहा वह्निं यज्ञस्य वोढारं आत्मानं स्पृणोति प्रीणयति, वर्धयति वा । सर्वत्यादिषु [स्पृ प्रीत्यादिषु] । सौवादिकः ॥

[8]यः कामयेतेति ॥ कृषिभूमौ परस्य क्षेत्रमाश्रितां वेदिं परिगृह्य तस्या अर्धं वाध्यवसाय दक्षिणमुद्धन्यात् । अर्धान्तरं नोद्धन्यात् । अर्धं तदेव बर्हिषा स्तृणीयात् छादयेत् । अर्धान्तरं न स्तृणीयात्।

धमिध्मस्याभ्यादध्यादर्धं न स्व ए-
वास्मा आयतने भ्रातृव्यं जनय-
ति ॥ ५७ ॥
ऐन्द्रमेकादशकपालं निर्वपेन्मारु-

र्धम् । इध्मस्य । अभ्यादध्यादित्यभि-आदध्यात् । अर्धम् । न । स्वे । एव । अस्मै । आयतन इत्या-यतने । भ्रातृव्यम् । जनयति ॥ ५७ ॥

रुद्रो भेपजं विन्दते यदि स्तृणीयादर्धं
द्वादश च ॥ १० ॥

[1]ऐन्द्रम् । एकादशकपालमित्येकादश-कपा-लम् । निरिति । वपेत् । मारुतम् । सप्तकपालमि-

---

बर्हिपोर्धमुत्करे त्यजेत् । इध्मस्यार्धं अभ्यादध्यात् नार्थान्तरं, उत्करे तं त्यजेत् । एवं कुर्वन् स्व एवायतने अस्मै भ्रातृव्यं जनयति गृहजातमेवास्य शत्रुं करोति ॥

इति द्वितीये द्वितीये दशमोनुवाकः.

---

[1]ऐन्द्रमेकादशकपालमित्यादि ॥ गतम् । आहवनीये ऐन्द्रमित्यादि । व्याख्यातम्* ॥

---

*सं. २-२-५.६

त॰ सप्तकपालं ग्रामकाम इन्द्रं चै-
व मरुतश्च स्वेन भागधेयेनोप धा-
वति त एवास्मै सजातान्प्र यच्छ-
न्ति ग्राम्येव भवत्याहवनीय ऐन्द्र-
मधि श्रयति गार्हपत्ये मारुतं पा-
पवस्यसस्य विधृत्यै सप्तकपालो
मारुतो भवति सप्तगणा वै मरुतो
गणश एवास्मै सजातानव रुन्धेऽ-

ति सप्त–कपालम् । ग्रामकाम इति ग्राम–कामः । इन्द्रम् । च । एव । मरुतः । च । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धावति । ते । एव । अस्मै । सजातानिति स–जातान् । प्रेति । यच्छन्ति । ग्रामी । एव । भवति । आहवनीय इत्या–हवनीये । ऐन्द्रम् । अधीति । श्रयति । गार्हपत्य इति गार्ह–पत्ये । मारुतम् । पापवस्यसस्येति पाप–वस्यसस्य । विधृत्या इति वि–धृत्यै । सप्तकपाल इति सप्त–कपालः । मारुतः । भवति । सप्तगणा इति सप्त–गणाः । वै । मरुतः । गणश इति गण–शः । एव । अस्मै । सजातानिति स–जातान् । अवेति । रुन्धे । अनूच्यमा-

नूच्यमान आ सादयति विशमेव
॥ ५८ ॥ अस्मा अनुवर्त्मानं करो-
त्येतामेव निर्वपेद्यः कामयेत क्षत्रा-
यं च विशे च समदं दध्यामित्यै-
न्द्रस्यावद्यन्ब्रूयादिन्द्रायानु ब्रूहीत्या-

न इत्यनु-उच्यमाने । एति । सादयति । विशम् ।
एव ॥ ५८ ॥ अस्मै । अनुवर्त्मानमित्यनु-वर्त्मा-
नम् । करोति । [2]एताम् । एव । निरिति । वपेत् ।
यः । कामयेत । क्षत्राय । च । विशे । च । स-
मदमिति स-मदम् । दध्याम् । इति । ऐन्द्रस्य ।
अवद्यन्नित्यव-द्यन् । ब्रूयात् । इन्द्राय । अन्विति ।
ब्रूहि । इति । आश्राव्येत्या-श्राव्य । ब्रूयात् ।

---

[2]समदमिति ॥ क्षत्रवैश्ययोः परस्परं सङ्ग्रामं जनयेयमिति । ऐन्द्रस्यावद्यन् ब्रूयात् इन्द्रायानुब्रूहीति । होता च तदानीं 'इन्द्रं वो विश्वतस्परि'* इत्यन्वाह । अत्याक्रम्याश्राव्य ब्रूयात् मरुतो यजेति । होता च 'या वश्शर्म शशमानाय'† इति यजति । अथ मारुतस्यावद्यन् ब्रूयात् मरुद्भ्योनुब्रूहीति । होता च 'मरुतो यद्ध वो दिवः'† इत्यन्वाह । अत्याक्रम्याश्राव्य ब्रूयादिन्द्रं यज इति । होता च 'इन्द्रं नरः'* इति यजति । एवं स्वे भाग-

---

*सं. १-६-१२.[1-2] †सं. १-५-११.[15-16]

श्राव्यं ब्रूयान्मरुतो यजेति मारुत-
स्यावद्यन्ब्रूयान्मरुद्भ्योनु ब्रूहीत्याश्रा-
व्यं ब्रूयादिन्द्रं यजेति स्व एवैभ्यो
भागधेये समर्दं दधाति वितृꣳहा-
णास्तिष्ठन्त्येतामेव ॥ ५९ ॥ निर्व-
पेद्यः कामयेत कल्पेरन्निति यथादे-

मरुतः । यज । इति । मारुतस्य । अवद्यन्नित्यव-द्यन् । ब्रूयात् । मरुद्भ्य इति मरुत्-भ्यः । अन्विति । ब्रूहि । इति । आश्राव्येत्या-श्राव्य । ब्रूयात् । इन्द्रम् । यज । इति । स्वे । एव । एभ्यः । भागधेय इति भाग-धेये । समर्दमिति स-मर्दम् । दधाति । वितृꣳहाणा इति वि-तृꣳहाणाः । तिष्ठन्ति । [3]एताम् । एव ॥ ५९ ॥ निरिति । वपेत् । यः । कामयेत । कल्पेरन् । इति । यथादेवतमिति यथा-देवतम् । अवदाये-

धेये* इन्द्रस्य मरुतां च कल्पमुपादधाति[†] । ततश्चैते वितृंहाणाः परस्परं हिंसन्तस्तिष्ठन्ति क्षत्रिया विशश्च संग्रामरुचयो भवन्ति ॥

[3]कल्पेरन् निवृत्तसंग्रामा विद्रूपेऽवतिष्ठेरन्नित्यर्थः । यथादेवतमिति । या यस्य देवता तदनतिक्रमेणावदाय यजेत् । ततश्चैता-

*ख-स्वेन भागधेयेन. [†]फ-मुत्पादयति.

वतमवदाय यथादेवतं यजेद्भागधेयेनैवैनान् यथायथं कल्पयति कल्पन्त एवैन्द्रमेकादशकपालं निर्वपेद्वैश्वदेवं द्वादशकपालं ग्रामकाम इन्द्रं चैव विश्वांश्च देवान्त्स्वेन भागधेयेनोप धावति त एवास्मै सजातान्प्र यच्छन्ति ग्राम्येव भव-

त्यव-दाय । यथादेवतमिति यथा-देवतम् । यजेत् । भागधेयेनेति भाग-धेयेन । एव । एनान् । यथायथमिति यथा-यथम् । कल्पयति । कल्पन्ते । एव । ऐन्द्रम् । एकादशकपालमित्येकादश-कपालम् । निरिति । वपेत् । वैश्वदेवमिति वैश्व-देवम् । द्वादशकपालमिति द्वादश-कपालम् । ग्रामकाम इति ग्राम-कामः । इन्द्रम् । च । एव । विश्वान् । च । देवान् । स्वेन । भागधेयेनेति भाग-धेयेन । उपेति । धावति । ते । एव । अस्मै । सजातानिति स-जातान् । प्रेति । यच्छन्ति । ग्रामी । एव ।

न्यथायथं यो यस्य भागः तेनैव तं कल्पयति स्थापयति । ततश्च ते निवृत्तविरोधा विकल्पन्ते ॥

त्यैन्द्रस्यावदाय वैश्वदेवस्याव द्येद-
थैन्द्रस्य ॥ ६० ॥ उपरिष्टादिन्द्रि-
येणैवास्मा उभयतस्सजातान्परि
गृह्णात्युपाधाय्यपूर्वयं वासो दक्षिणा

भवति । *ऐन्द्रस्य । अवदायेत्यव-दाय । वैश्वदेवस्येति वैश्व-देवस्य । अवेति । द्येत् । अथ । ऐन्द्रस्य ॥ ६० ॥ उपरिष्टात् । इन्द्रियेण । एव । अस्मै । उभयतः । सजातानिति स-जातान् । परीति । गृह्णाति । उपाधाय्यपूर्वयमित्युपाधाय्य-पूर्वयम् । वासः । दक्षिणा । सजातानामिति स-

---

*ऐन्द्रस्येत्यादि ॥ प्रथममैन्द्रस्यावदाय द्विर्वैश्वदेवस्यावद्यति । अथैन्द्रस्योपरिष्टात्पुनरवद्यति । एवमिन्द्रियेणेन्द्रदत्तेन वीर्येण सजातानुभयतः आदावन्ते च परिगृह्णाति । अथान्वाहार्यमासाद्य उपाधाय्यपूर्वयं वासो दक्षिणां दद्यात् । वस्त्रान्तरयो[न्तयो]रुपधेयं रत्नं विरुत्रं(?) उपाधाय्यम् । छान्दसो ण्यत्, कृदुत्तरपदप्रकृतिस्वरत्वेन 'तित्स्वरितम्' इति स्वरितत्वम् । तत्सूत्रम् पूर्वं वानकाल एव यातीति उपाधाय्यपूर्वयम् । विनि नपुंसकस्य ह्रस्वत्वम्, दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् । बहुव्रीहिर्वा—उपाधाय्यं वस्त्रं पूर्वयं प्रथमं प्राप्यं यस्य कारणत्वेन तत्तथोक्तम् । उपहित्यै उपसेवायै भवति सजातानाम् ॥

सजातानामुपहित्यै पृश्निये दुग्धे
प्रैय्यङ्गवं चरुं निर्वपेन्मरुद्भ्यो ग्राम-
कामः पृश्नियै वै पयसो मरुतो
जाताः पृश्नियै प्रियङ्गवो मारुताः
खलु वै देवतया सजाता मरुत एव
स्वेन भागधेयेनोप धावति त एवा-
स्मै सजातान्प्र यच्छन्ति ग्राम्येव भ-

जातानाम् । उपहित्या इत्युप–हित्यै । [1]पृश्नियै । दुग्धे । प्रैय्यङ्गवम् । चरुम् । निरिति । वपेत् । मरुद्भ्य इति मरुत्–भ्यः । ग्रामकाम इति ग्राम-कामः । पृश्नियै । वै । पयसः । मरुतः । जाताः । पृश्नियै । प्रियङ्गवः । मारुताः । खलु । वै । देव-तया । सजाता इति स–जाताः । मरुतः । एव । स्वेन । भागधेयेनेति भाग–धेयेन । उपेति । धाव-ति । ते । एव । अस्मै । सजातानिति स–जाता-न् । प्रेति । यच्छन्ति । ग्रामी । एव । भवति ।

---

[1]पृश्नियै दुग्धे इत्यादि ॥ पृश्निः श्वेता गौः । शुक्लबिन्दु-चितेत्येके । प्रैय्यङ्गवमिति । प्रियङ्गुः धान्यविशेषः । विकारे 'ओरञ्' इत्यञ् । पृश्नियै प्रियङ्गव इति । पयसो जाता इत्येव । मारुताः खलु वा इत्यादि । गतम् ॥

वति प्रियवती याज्यानुवाक्ये॥६१॥
भवतः प्रियमेवैन समानानां क-
रोति द्विपदा पुरोनुवाक्या भवति
द्विपद एवाव रुन्धे चतुष्पदा याज्या
चतुष्पद एव पशूनव रुन्धे देवासु-

'प्रियवती इति प्रिय-वती । याज्यानुवाक्ये इति याज्या-अनुवाक्ये ॥ ६१ ॥ भवतः । प्रियम् । एव । एनम् । समानानाम् । करोति । द्विपदेति द्वि-पदा । पुरोनुवाक्येति पुरः-अनुवाक्या । भवति । द्विपद इति द्वि-पदः । एव । अवेति । रुन्धे । चतुष्पदेति चतुः-पदा । याज्या । चतुष्पद इति चतुः-पदः । एव । पशून् । अवेति । रुन्धे । 'देवासुरा इति देव-असुराः । संयत्ता इति सं-

'प्रियवती इति ॥ 'प्रिया वो नाम हुवे तुराणाम्'* 'श्रियसे कं भानुभिः'* इत्येते प्रियशब्दवत्यौ याज्यानुवाक्ये भवतः । द्विपदेति । प्रिया वो नामेति द्विपदा त्रिष्टुप् 'एकद्वित्रिभिश्च पङ्क्त्यान्या'† इति । द्वौ पादावस्या इति द्विपदा । 'सङ्ख्यासुपूर्वस्य' इति लोपः समासान्तः, 'टाबृचि' इति टापि 'पादः पत्' इति पद्भावः, 'द्वित्रिभ्यां पाद्दन्' इत्युत्तरपदान्तोदात्तत्वम् । एवं चतुष्पदा याज्येति । 'श्रियसे कम्'* इति पूर्वोक्ता ॥

'देवासुरा इत्यादि—संज्ञानेष्टिविधिः । देवा अपि मिथो विभि-

*सं. ३-१-११.† पि-सूत्रम्.

रास्संयत्ता आसन्ते देवा मिथो वि-
प्रिया आसन्तेऽन्योन्यस्मै ज्यैष्ठ्या-
यातिष्ठमानाश्चतुर्धा व्यक्रामन्नग्निर्व-
सुभिस्सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण
आदित्यैस्स इन्द्रः प्रजापतिमुपाधा-
वत्तम् ॥ ६२ ॥ एतया संज्ञान्याऽ-

यत्ताः । आसन् । ते । देवाः । मिथः । विप्रिया इति वि-प्रियाः । आसन् । ते । अन्यः । अन्यस्मै । ज्यैष्ठ्याय । अतिष्ठमानाः । चतुर्धेति चतुः-धा । वीति । अक्रामन् । अग्निः । वसुभिरिति वसु-भिः । सोमः । रुद्रैः । इन्द्रः । मरुद्भिरि[ति] मरुत्-भिः । वरुणः । आदित्यैः । सः । [इन्द्रः ।] प्रजापतिमिति प्रजा-पतिम् । उपे[ति ।] [अधाव]तम् ॥ ६२ ॥ एतया । संज्ञान्येति [...]

या आसन् ते देवा अन्योन्यस्य ज्यैष्ठ्यं श्रैष्ठ्यममहम[...]
न्योन्यस्मै अतिष्ठमानाः कार्येष्वप्रकाशमानाश्चतुर्धा व्यक्रामन्[...]
चित्तो व्यूह्य स्थिताः. इन्द्रमनादृत्य अग्निर्वसुभिरित्यादिक्रमेण [...]।
इत्यन् । अन्योन्यस्मा इति 'कर्मव्यतिहारे सर्वनाम्नो द्वे भवत
स्लु वा इद्य बहुलम्' यदा न समासवत्प्रथमैकवचनं तदा पूर्वपदस्य

याजयदग्नये वसुमते पुरोडाशमष्टा-
कपालं निरवपत्सोमाय रुद्रवते च-
रुमिन्द्राय मरुत्वते पुरोडाशमेका-
दशकपालं वरुणायादित्यवते चरुं
ततो वा इन्द्रं देवा ज्यैष्ठ्यायाभि

अयाजयत् । अग्नये । वसुमत इति वसु–मते । पुरोडाशम् । अष्टाकपालमित्यष्टा–कपालम् । निरिति । अवपत् । सोमाय । रुद्रवत इति रुद्र–वते । चरुम् । इन्द्राय । मरुत्वते । पुरोडाशम् । एकादशकपालमित्येकादश–कपालम् । वरुणाय । आदित्यवत इत्यादित्य–वते । चरुम् । ततः । वै । इन्द्रम् । देवाः । ज्यैष्ठ्याय । अभि । समिति ।

---

इति समासाभावे पूर्वपदस्य प्रथमैकवचनम् । अन्यस्मै अन्यस्मै इत्यर्थः । 'श्लाघह्नुङ्स्थाशपाम्' इति सम्प्रदानत्वम् । 'प्रकाशनस्थेयाख्ययोश्च' इत्यात्मनेपदम् । ज्यैष्ठ्यायेति तादर्थ्ये चतुर्थी । अथेन्द्रो देवानां राजा प्रजापतिमुपाधावत् इत्यमस्मिन् प्रतिविधेहीत्रेति । अथ प्रजापतिरिन्द्रं संज्ञानेष्ट्या अयाजयत्, 'अग्नये वसुमते' इत्येतया संज्ञायते सम्यग्ज्येष्ठभावेन ज्ञायते अनयेति करणे ल्युट् । ततो देवा ज्यैष्ठ्याय इन्द्रमभिसमजानत अभ्युपगतवन्तोस्य ज्यैष्ठ्यम् । 'सम्प्रतिभ्यामनाध्याने' इत्यात्मनेपदम् ॥

समंजानत यस्समानैर्मिथो विप्रि-
यस्स्यात्तमेतया संज्ञान्या याजयेद-
ग्नये वसुमते पुरोडाशमष्टाकपालं
निर्वपेत्सोमाय रुद्रवते चरुमिन्द्राय
मरुत्वते पुरोडाशमेकादशकपालं
वरुणायादित्यवते चरुमिन्द्रमेवैनं

अजानत । [8]यः । समानैः । मिथः । विप्रिय इति
वि-प्रियः । स्यात् । तम् । एतया । संज्ञान्येति
सं-ज्ञान्या । याजयेत् । अग्नये । वसुमत इति
वसु-मते । पुरोडाशम् । अष्टाकपालमित्यष्टा-
कपालम् । निरिति । वपेत् । सोमाय । रुद्रवत
इति रुद्र-वते । चरुम् । इन्द्राय । मरुत्वते । पु-
रोडाशम् । एकादशकपालमित्येकादश-कपालम्।
वरुणाय । आदित्यवत इत्यादित्य-वते । चरुम् ।
इन्द्रम् । एव । एनम् । भूतम् । ज्यैष्ठ्याय । स-

[8]यस्समानैरित्यादि ॥ स येस्सञ्जिज्ञासीत तेपूपरतेष्वेतामिष्टिं नि-
र्वपेत् । ततस्समाना एनं यजमानमिन्द्रमेव भूतं ज्यैष्ठ्याय अभि-
सञ्जानते । ततस्समानानां वसिष्ठः वसुमत्तमो भवति । 'विन्मतो-
र्लुक्', 'टेः' इति टिलोपः ॥

भूतं ज्यैष्ठ्याय समाना अभि सं जा-
नते वसिष्ठस्समानानां भवति॥६३॥
हिरण्यगर्भ आपो ह यत्प्रजापते ।
स वेद पुत्रः पितर्ँ स मातर्ँ

मानाः । अभि । समिति । जानते । वसिष्ठः । समानानाम् । भवति ॥ ६३ ॥

विशमेव तिष्ठन्त्येतामेवाथैन्द्रस्यं याज्यानुवाक्ये तं वरुणाय चतुर्दश च ॥ ११ ॥

[1]हिरण्यगर्भ इति हिरण्य–गर्भः । [2]आपः । ह । यत् ।[3]प्रजापत इति प्रजा–पते । [4]सः । वेद । पुत्रः। पितरम् । सः । मातरम् । सः । सूनुः । भुवत् ।

इति द्वितीये द्वितीये एकादशोनुवाकः.

---

[1]अथ याज्याकाण्डं वैश्वदेवमेव । 'यो मृत्योर्बिभीयात्तस्मा एतां प्राजापत्यां शतकृष्णलां निर्वपेत्'* इत्यस्याः पुरोनुवाक्या— हिरण्यगर्भ इति त्रिष्टुप् ॥ प्रतीकग्रहणं चेदं 'हिरण्यगर्भस्सम- वर्तताग्रे'† इत्यस्याः । इयं चाग्निकाण्डे व्याख्यास्यते, यत्राम्ना- स्यते 'ऊर्ध्वा अस्य'† इत्यत्र । हिरण्मयाण्डगर्भः प्रजापतिः अग्रे,

*सं. २-३-२. †सं. ४-१-८.

स सू नुर्भुवत्स भुवत्पुनर्मघः । स द्यामौर्णोदन्तरिक्ष५ँ स सुवस्स वि-

सः । भुवत् । पुनर्मघ इति पुनः–मघः । सः । द्याम् । और्णोत् । अन्तरिक्षम् । सः । सुवः । सः ।

---

प्रथमं समवर्तत ततो जातः । सर्वस्य भूतजातस्य एकः पतिरासीत् । स पृथिवीं विस्तीर्णां दिवं द्यां अन्तरिक्षमिमां भूमिं च दाधार धारयति । तस्मै कस्मै एकस्मै, अविज्ञातस्वभावाय वा देवाय हविषाऽनेन विधेम परिचरेमेति ॥

[2]अथ तत्रैव पुरोनुवाक्याविकल्पः—आपो ह यदिति त्रिष्टुप् ॥ इदं च प्रतीकग्रहणं 'आपो ह यन्महतीर्विश्वम्'* इत्यस्याः । इयमपि तत्रैव व्याख्यास्यते* । महत्य आपो यस्माद्गर्भमायन् दक्षं सर्वसृष्टिकुशलं दधानास्तमेव गर्भं स्वयं मुञ्चयन्त्यः जनयितुकामाः तस्मात्कारणाद्देवानां सर्वेषामेकोसुः प्राणभूतः प्रजापतिर्निरवर्तत निष्पन्नोऽभवत् । तस्मै कस्मै एकस्मै, अविज्ञातस्वभावाय वा देवाय हविषा परिचरेमेति ॥

[3]अथ तत्रैव याज्या—प्रजापत इति त्रिष्टुप् ॥ इदं च प्रतीकग्रहणं 'प्रजापते न त्वदेतान्यन्यः'† इत्यस्याः । इयं च 'सोमस्य त्विषिरसि'† इत्यत्र व्याख्याता । हे प्रजापते न खलु कश्चित् त्वत्तोन्यः तान्येतानि विश्वानि जातानि भूतानि परिबभूव परिभवति । तस्माद्यत्कामा वयं जुहुमस्तन्नोस्माकमस्तु । किंच—वयं रयीणां धनयस्स्वामिनश्च स्यामेति ॥

---

*सं. ४-१-८, †सं. १-८-१४, १०

श्वा भुवो अभवत्स आभवत् । उदु

विश्वाः। भुवः। अभवत्। सः। एति। अभवत्। ⁵उ-

⁴अथ तत्रैव याज्याविकल्पः—स वेद पुत्र इतीयं जगती ॥ स एव प्रजापतिः पुत्रो भूत्वा पितरं मातरं च वेद जानाति, ममायं पिता इयं मातेति जानन् पुत्रात्मना स एव वर्तते । स एव सूनुर्भुवत् यो यस्सोतव्य उत्पाद्यः पदार्थः सोपि भूधरादिस्स एव भवेत् । पुनश्च स एव मघः हिरण्यादि धनं भुवत् भवेत् स एव तथा भवति । भवतेर्लेटि शपो लुक्, 'भूसुवोस्तिङि' इति गुणाभावः । यद्वा—सूनुस्सोमयजमानः, तद्भावेन च भवति। मवस्सोतव्यस्सोमः तादात्म्येन च वर्तते । किञ्च—स एव द्यां द्युलोकं और्णोच्छादयति स्वेन महिम्ना तेजसा वा स एवान्तरिक्षमोर्णोदित्येव । स एव सुवः पृथिवीं च ओर्णोत् । सुष्ठु वरणात् सुवस्सर्वविकाराणां सुष्ठु गन्त्री । तन्वादित्वादुवङ्, छान्दसमाद्युदात्तत्वम् । यद्वा—सूतेरसुनि गुणाभावश्छान्दसः सवित्री सर्वविकाराणाम् । किं बहुनेत्याह—स एव विश्वा भुवः भूतजातानि विश्वा भुवः भावयित्रीः स्योनीः [योनीः] कारणानि अभवत् प्राप्तवान् उत्पादितवान् । स एव चाभवत् आवृत्यावृत्य प्राप्नोति उत्पादयति । यद्वा—स एव विश्वा भुवो अभवत् भवति विश्वभूतजातात्मना कारणात्मना वा स एवावतिष्ठते । स एव चावृत्य तद्रूपेण भवति वर्तते सोस्माकं प्रत्यूह*मपनयत्विति ॥

⁵¹यो ब्रह्मवर्चसकामस्स्यात्तस्मा एतं सौर्यं चरुं निर्वपेत्¹¹

*तं–मृत्यु. †सं. २-३-२.

त्यं चित्रम् । स प्रत्नवन्नवीयसा-

दिति । उ । त्यम् । चित्रम् । सः । प्रत्नवदिति प्रत्न-वत् । नवीयसा । अग्ने । द्युम्नेन । संयतेति

इत्यस्याः पुरोनुवाक्या—उदु त्यमिति गायत्री ॥ व्याख्यातेयं ग्रहेषु* अस्या इदं प्रतीकग्रहणम् । तमिमं जातवेदसं देवं सूर्यं केतवो रश्मय उद्वहन्ति विश्वस्य लोकस्य दर्शनार्थमिति ॥

तत्रैव याज्या—चित्रमिति त्रिष्टुप् ॥ इयमपि तत्रैव व्याख्याता* । प्रतीकग्रहणमेवेदम् । चित्रं चायनीयं देवानामनीकं चमूस्थानीयं मित्रादीनामपि चक्षुस्स्थानीयमुदगादुद्गच्छति । उदुत्यं च द्यावापृथिवी अन्तरिक्षं च आप्रा आप्रात् आपूरयन्ति । जगतः जङ्गमस्य तस्थुषः स्थावरस्य चात्मा सूर्य इति ॥

"आग्नेयमष्टाकपालं निर्वपेत्सावित्रं द्वादशकपालं भूम्यै चरुं यः कामयेत हिरण्यं विन्देय हिरण्यं मोप नमेत्"† इत्यस्यास्त्रिहविष्काया आग्नेयस्य पुरोनुवाक्या—स प्रत्नवदिति गायत्री ॥ हेऽग्ने स त्वं प्रत्नवत्पुराणार्हम् । यद्वा—प्रागिव । यद्वा—पुरातनेनेव नवीयसा नवतरेण द्युम्नेन यशसा धनेन वा संयता त्वमेव सङ्गच्छता । 'शतुरनुमः' इति व्यत्ययेन न प्रवर्तते । यद्वा—त्वयैव संयता धनेन । यमेः क्विपि अनुनासिकलोपे तुक्, कृदुत्तरपदप्रकृतिस्वरत्वम् । संयतशब्दादेव तृतीयाया आकारः । 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । ईदृशेन द्युम्नेन भानुना

*सं. १-४-४३.I–2 †सं. २-३-२.

म्ने द्युम्नेन संयता। बृहत्ततन्थ भानुना। नि काव्या वेधसश्शश्वतस्करू हस्ते दधानः ॥ ६४ ॥ नर्या पुरूणि। अग्निर्भुवद्रयिपती रयी-

सं-यता। बृहत्। ततन्थ। भानुना। [8]नीति। काव्या। वेधसः। शश्वतः। कः। हस्ते। दधानः॥ ६४ ॥ नर्या। पुरूणि। अग्निः। भुवत्। रयिपतिरिति रयि-पतिः। रयीणाम्। सत्रा। चक्राणः।

---

भासनशीलेन बृहत् महदिदं विश्वं ततन्थ विस्तारय। छान्दसो लिट्। यद्वा—विश्वं बृहत् भृशं ततन्थ॰ तथा कुर्वंश्चास्माकं हिरण्यलाभहेतुर्भवेति॥

[8]तत्रैव याज्या—नि काव्येति त्रिष्टुप्॥ कवेर्भावः काव्यं द्रष्टृत्वम्, समीचीनदर्शनत्वम्। गुणवचनत्वात् ष्यञ्, 'सुपां सुलुक्' इति तृतीयाया आकारः। अयमग्निः काव्या कवित्वेन आत्मीयेन वेधसः विधातॄन् यजमानान् शश्वतः नित्यान् अविच्छिन्नयागान् निकः नियमेन करोति। लुङि 'मन्त्रे घस' इति च्लेर्लुक्, लङि वा शपो लुक्, उभयत्र 'बहुलं छन्दस्यमाङ्योगेपि,' इत्यडभावः। लेटि वा शपो लुक्। किं कुर्वन्नित्याह—हस्ते दधानः ददानः प्रत्यक्षवत्प्रयच्छन्नित्यर्थः। किं? नर्याणि नरेभ्यो हितानि धनानि हिरण्यादीनि। गवादिर्द्रष्टव्यः। 'तत्र साधुः' इति वा यत्। पुरूणि बहूनि। किञ्च—अयमित्थं

णा॰ सत्रा चक्राणो अमृतानि वि-
श्वा । हिरण्यपाणिमूतये सविता-
रमुप ह्वये । स चेत्ता देवता पदम् ।
वाममद्य सवितर्वाममु श्वो दिवे-

अमृतानि । विश्वा । [9]हिरण्यपाणिमिति हिरण्य–
पाणिम् । ऊतये । सवितारम् । उपेति । ह्वये ।
सः । चेत्ता । देवता । पदम् । [10]वामम् । अद्य ।
सवितः । वामम् । उ । श्वः । दिवेदिव इति दिवे–

कुर्वन् रयीणां वा रयिपतिः सर्वेषां धनानां नित्यं पालकः भुवत् भवेत् । शपो लुकि पूर्ववद्गुणाभावः, 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वं, 'नामन्यतरस्याम्' इति नामः । पुनश्च किं कुर्वन्नित्याह—सत्रा सहभूतानि । पूर्ववदाकारः, शेर्वा लोपः, छान्दसो वा डाच् । चक्राणः ददानः सहैव दातुं शक्तः । शक्नोते श्चानश् । 'बहुलं छन्दसि' इति शपश्श्लुः, यद्वा—छान्दसस्य लिटः कानजादेशः । किं चक्राणः ? विश्वानि अमृतानि अमरणहेतुभूतानि हिरण्यादीनि ॥

[9]अथ सावित्रस्य द्वादशकपालस्य पुरोनुवाक्या—हिरण्यपाणिमिति गायत्री ॥ व्याख्यातेयं ग्रहेषु* । हिरण्यपाणिं हिरण्याभरणपाणिं रसहरणरश्मिं हितरमणीयरश्मिं वा सवितारमुपह्वये उपेत्याह्वयामि ऊतये रक्षणाय । स खलु चेत्ता ज्ञाता अस्माकं पदमास्पदं देवतास्माकं स एवेति ॥

[10]तत्रैव याज्या—वाममद्येति त्रिष्टुप् ॥ इयमपि तत्रैव व्या-

*सं. १-४-२५.

दिवे वाममस्मभ्यꣳ सावीः । वा-
मस्य हि क्षयस्य देव भूरेरया धि-
या वामभाजस्स्याम । बडित्था
पर्वतानां खिद्रं बिभर्षि पृथिवि ।
प्र या भूमि प्रवत्वति मह्ना जिनोषि

दिवे । वामम् । अस्मभ्यमित्यस्म–भ्यम् । सा-
वीः । वामस्य । हि । क्षयस्य । देव । भूरेः ।
अया । धिया । वामभाज इति वाम–भाजः ।
स्याम । [11]बट् । इत्था । पर्वतानाम् । खिद्रम् ।
विभर्षि । पृथिवि । प्रेति । या । भूमि । प्रवत्वति ।

ख्याता* । हे सवितः वामं वननीयं हिरण्यादि धनं अद्या-स्मिन्नहनि सावीः सुवः प्रेरयः । श्वोपि वाममेव सुवः । किं बहुना—दिवेदिवे दिनेदिने अस्मभ्यं वाममेव सुवः अस्मभ्यं वाममेव सुवः । किञ्च—हे देव भूरेः वामस्य क्षयस्य निवासस्य यद्वामं तद्भाजस्स्याम । यद्वा—अद्य श्वः क्रमेण सर्वदा वाममाजो वयं वामस्य क्षयस्य निवासस्यापि सम्बन्धिनो भूयास्म । अया धिया अनया बुद्ध्या अहंमाप्ति[अर्थप्राप्ति]विषयया । यद्वा—अनेन कर्मणा यागात्मकेनेति ॥

[11]अथ भूम्याश्चरोः पुरोनुवाक्या—बडित्थेत्यनुष्टुप् ॥ बडित्था सत्यं, इत्थमिदं यद्वक्ष्यामः । किम्पुनस्तदित्याह—हे पृथिवि विस्तीर्णे हे भूमे । 'कृदिकारादक्तिनः' इति ङीप् । हे प्रवत्वति

सं*. १-४-२३.

॥ ६५ ॥ म॒हि॒नि॒ । स्तोमा॑सस्त्वा वि॒चारि॑णि॒ प्रति॑ष्टोभन्त्य॒क्तुभिः॑ । प्र

म॒ह्ना । जि॒नो॒षि॒ ॥ ६५ ॥ म॒हि॒नि॒ । [12]स्तोमा॑सः । त्वा॒ । वि॒चारि॑णी॒ति॑ वि-चारि॑णि॒ । प्रतीति॑ । स्तो॒भ॒न्ति॒ । अ॒क्तुभि॒रित्य॒क्तु-भिः॑ । प्रेति॑ । या । वाज॑-

मवत् प्रगतम् । प्रवणम् । 'उपसर्गाच्छन्दसि' इति वतिः । हे तद्वति । 'तसौ मत्वर्थे' इति भत्वम् । हे महिनि महनीये पूज्ये । महेरौणादिक इनिच्, गौरादित्वात् ङीप् । यद्वा—मह उत्सवः प्रजानामिति-हे तद्वति । ईदृशी त्वं पर्वतानां खिद्रं बिलं हिरण्यादिपूर्णं बिभर्षि । या त्वं द्रविणवती धारय विस्तीर्णा खलु त्वं, या त्वं मह्ना माहात्म्येन । महेरौणादिको निप्रत्ययः, उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । प्रजिनोषि प्रकर्षेण प्रजास्तर्पयसि; यस्मात्प्रवणवती अत एव पूजिता । जिवि प्रीणने, इदित्वान्नुम्, वकारस्य छान्दसं सम्प्रसारणम् । यद्वा—जयतेर्व्यत्ययेन श्नुः । केचिदाहुः—सत्यमित्थं पर्वतानां मेखलानां खिद्रं छेदनप्रवहमुदकं बिभर्षि । पृथुत्वात्प्रभूतं वर्षोदकं बिभर्षि । या त्वं प्रणवती प्रवणगामिना उदकेन मह्ना महता विश्वमिदं प्रकर्षेण जिनोषि तर्पयसि, अत एव महनीयासि; अनेनैव क्रमेण सर्वहिरण्यादिलाभहेतुत्वात् ॥

[12]तत्रैव याज्या—स्तोमासस्त्वेत्यनुष्टुप् ॥ हे भूमे विचारिणि विविधं चरणं गमनं भक्षणं वा विचारः । हे तद्वति, स्तोमा-

या वाजं न हेषन्तं पेरुमस्यस्यर्जुनि । ऋदूदरेण सख्या सचेय यो मा न रिष्येद्धर्यश्व पीतः । अयं य-

म् । न । हेषन्तम् । पेरुम् । अस्यसि । अर्जुनि । [13]ऋदूदरेण । सख्या । सचेय । यः । मा । न । रिष्येत् । हर्यश्वेति हरि–अश्व । पीतः । अयम् । यः । सोमः । न्यधायीति नि–अधायि । अस्मे इति ।

सः स्तोमास्तोत्राणि प्रतिष्टोभन्ति प्रत्येकं प्रतिमुखा वा स्तुवन्ति। अक्तुभिस्त्वदीयैः कर्मभिः अपदानैस्स्तुतिभिः स्तोत्रभक्तिभिः या त्वं तथा स्तूयमाना हे अर्जुनि निर्मले । 'अन्यतो ङीष्' इति ङीष् । हेषन्तं शब्दवन्तं दुष्टं वाजन्न अश्वमिव यथा दुष्टो वाजी निरर्थकान् शब्दान् करोति एवं निरर्थकशब्दाभिधायिनं अमन्त्रार्थज्ञमिति । किञ्च—वाजमिव बलमिव पेरुं अश्वमिव पानशीलं उपलक्षणत्वात्पानाशनमात्रकृतार्थं अयज्ञार्हं पुरुषं प्रास्यसि त्वं स्वस्त्वर्जुनीति । सर्वे स्तोत्रादयस्त्वामेव स्तुवन्ति । तेषां च मध्ये वाजिनमिव हेषन्तमिव पेरुं त्वं नाद्रियसे तस्मात्तादृशानस्मान् त्वामेव स्तुवतो हिरण्यादिदानेन तृप्तान् कुर्विति । 'उपसर्गात्सुनोति' इत्यादिना स्तोभतेष्पत्वम् ॥

[13]'एतामेव निर्वपेद्धिरण्यं वित्त्वा'* इत्येतस्या एव याज्यानुवाक्या भवन्ति ; 'एतामेव निर्वपेद्यस्य हिरण्यं नश्येत्'* इत्य-

*सं. २-३-२.

स्सोमो न्यधाय्यस्मे तस्मा इन्द्रं
प्रतिरमेम्यच्छं । आपान्तमन्युस्तृ-
पलंप्रभर्मा धुनिश्शिमीवाञ्छरुंमाँ॒

तस्मै । इन्द्रम् । प्रतिरमिति प्र-तिरम् । एमि । अच्छं । [14]आपान्तमन्युरित्यापान्त-मन्युः । तृपलं-प्रभर्मेति तृपलं-प्रभर्मा । धुनिः । शिमीवान् । शरुमानिति शरु-मान् । ऋजीषी । सोमः ।

स्या अप्येता एव, 'यस्सोमवामी स्यात्तस्मा एतं सोमेन्द्रं श्यामाकं चरुं निर्वपेत्'* इत्येतस्याः पुरोनुवाक्या—ऋदूदरेणेति त्रिष्टुप् ॥ ऋदूदरेण मृदूदरेण यस्मिन्नन्तःप्रविष्टे अपान्ते उदरस्य मृदुत्वं भवति तादृशेन । छान्दसो वर्णलोपः, उत्तरपदप्रकृतिस्वरत्वं च । सख्या समानख्यानेन मामपुञ्चता सोमेन रसात्मना सचेय सङ्गसीय । पुनश्च विशेष्यते—हे हर्यश्व इन्द्र अयं सोमः पीतो न रिष्येत् नोद्यात् नो हिंस्यात् । अपि चास्माकं योयं सोमो न्यधायि उदरे निधीयते तस्मै तदर्थं तत्प्रधानार्थं इन्द्रं प्रतिरं प्रवर्तयितारं अच्छेमि आभिमुख्येन भजेय ॥

[14]तत्रैव याज्या—आपान्तमन्युरिति त्रिष्टुप् ॥ द्वावपि सोमेन्द्रौ प्राधान्येन स्तूयेते । आपान्तमन्युः सर्वतोपगतमन्युः । अम गत्यादिषु, निष्ठायां 'रुष्यमत्वर' इतीडभावः, 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । यद्वा—मन्युर्दीप्तिः, आपान्तमन्युः

*सं. २-३-२.

ऋजीपी । सोमो विश्वान्यत-
विश्वानि । अतसा । वनानि । न । अर्वाक् । इन्द्रम् ।

आपतितदीप्तिः । पण व्यवहारे स्तुतौ च, पन च इत्यस्य निष्ठायां छान्दस इडभावः । तृपलप्रभर्मा, त्रयाणामुपलानां समाहारस्तृपलं, त्र्युपलमिति वक्तव्ये पूर्वपदस्य सम्प्रसारणे उत्तरपदस्यादिलोपः, 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । त्रिभिरुपलैर्ग्रावभिः प्रभर्मा प्रहारोभिषवो यस्य तथोक्तः । हरतेरौणादिको मनिन्, 'हृग्रहोर्भः' इति भत्वम् । धुनिः कम्पनशीलः । धुन् कम्पने, औणादिको निन्प्रत्ययः । यद्वा—'धूञ्प्रीञोर्नुक्' इति नुकि धूनयतेरौणादिक इन्प्रत्ययः, धातोश्च ह्रस्वत्वम् । धूनयिताङ्गानां धुनिः । शिमीवान् कर्मवान् मानाभिषवपवनग्रहणादिसन्ततबहुकर्मा । शरुमान् शरणं शरुः हिंसा अभिषवपीडा तद्वान् । ऋजीषी निस्सारीकृतः । एवं ग्रावप्रहारादिसङ्गेवेपि यस्सोमोपगतमन्युः आगतदीप्तिरेव भवति, स एवास्माकं विश्वान्यतसा अतसानि अविच्छिन्नानि । अततेरौणादिकोऽसच् । वनानि वननीयानि धनानि । यद्वा—अतसानि शुष्काणि, वनानि सरसानि, तानि विश्वान्यपि सोम एव, सर्वौषधिराजत्वात् सोमस्य । एवं वरणीयवस्तुसाम्यादिना सोमस्तुतः ; इदानीमिन्द्रस्तुतिरूपमे[तिरनुपमे]वेति दर्शयति—अर्वाक् अर्वाचीनानि प्रतिमानानि इन्द्रं नैव देभुः दभ्नुवन्ति न बाधन्ते । समत्वेन स्पर्शनमेव वस्त्वन्तरैरिन्द्रस्य बाधः । एवंगुणकाविमौ सोमेन्द्रौ व्यपगतवान्तदोषं* मा कुरुतामिति । 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां च' इति लिटः कित्त्वम् । शरुमानित्यस्य पूर्ववद्रुत्वानुनासिकौ ॥

*ख–न्तरेषं.

सा वनानि नार्वागिन्द्रं प्रतिमाना-
नि देभुः । प्र ॥ ६६ ॥ सुवानस्सो-
मं ऋतयुश्चिकेतेन्द्राय ब्रह्म जमद-

प्रतिमानानीति प्रति-मानानि । देभुः । [15]प्रेति ॥
६६ ॥ सुवानः । सोमः । ऋतयुरित्यृत-युः । चि-
केत । इन्द्राय । ब्रह्म । जमदग्निः । अर्चन् । वृषा ।

---

[15](अथ सोमवामी ह वा अन्यो भवत्यन्यस्सोमाति पवितः सयस्सोमातिपवितस्स्यात्) 'तस्मा एतं सोमेन्द्रं श्यामाकं चरुं निर्वपेत्'* इत्यस्यैषा पुरोनुवाक्या—प्र सुवान इति त्रिष्टुप् ॥ सुवानः अभिषुण्वानः । विकरणस्य लुक्, लिटि वा कानचि द्विर्वचनाभावः, अभ्यासलोपो वा । सोम इति व्यत्ययेन प्रथमा । सोमं सुन्वानो यजमानः । 'सुपां सुलुक्' इति वा स्वादेशः, सोमायतेर्वा पचाद्यच्, वृषादित्वादाद्युदात्तत्वम् । ऋतयुः ऋतं सत्यं यज्ञं वा आत्मन इच्छन् । क्यचि 'न छन्दस्यपुत्रस्य' इतीत्वाभावः, 'क्याच्छन्दसि' इत्युप्रत्ययः । प्रचिकेत प्रकर्षेण जानाति । कित ज्ञाने । इन्द्राय इन्द्रार्थं ब्रह्म परिवृढं एतदन्नं हवीरूपं प्रचिकेत जमदग्निः । जमु अदने । नित्यं जमन् अदन् हवींषि भुञ्जानः । एवं यस्याग्निः स जमदग्निः । उपमानपूर्वपदं वा जमदग्निमूर्त्यर्थो† [जमदग्नितुल्य इत्यर्थः] । अर्चन् पूजयन् इन्द्रमेव बहुमन्यमानः । यद्वा—इन्द्रमर्चन् । कर्मणि चतुर्थी । यत्सोमं सुनुते, यच्चेयक्षते, यच्च हविः प्रकर्षेण जानाति, यच्चा-

---

*सं. २-३-२.

†ख-मित्यौपम्यम्.

ग्निरर्चन्न् । वृषा यन्तासि शवसस्तु-
रस्यान्तर्यच्छ गृणते धर्त्रं दृꣳह ।
सबाधस्ते मदं च शुष्मयं च ब्रह्म

यन्ता । असि । शवसः । तुरस्य । अन्तः । यच्छ । गृणते । धर्त्रम् । दृꣳह । [16]सबाध इति स–बाधः । ते । मदम् । च । शुष्मयम् । च । ब्रह्म । नरः ।

---

स्याग्निस्सदा हविर्भुञ्जानो भवति तत्सर्वमिन्द्रमर्चयितुं करोति यजमानः । हेतौ शतृप्रत्ययः, अर्च पूजायामुदात्तेत् भौवादिकः, तेनाण्यन्तत्वाद्यजमानेपि परस्मैपदमेव । यस्मादेवं तस्मात् हे इन्द्र त्वं वृषा वर्षिता कामानां यन्ता यमयिता यथायमतिसारी न भवति तथावस्थापयिता त्वमसि । कस्य? शवसः बलवतः । मत्वर्थीयो लुप्यते । तुरस्य त्वरमाणस्य अधो निस्सरतः । 'तुर त्वरासम्भ्रमयोः' इत्यस्मादिगुपधलक्षणः कः । तस्मात्सोममतिसरन्तमन्तर्यच्छ अन्तरेवं नियमय यथातो नातिसरेत् । गृणते त्वामेव स्तुवानाय यजमानाय । 'शतुरनुमः' इति चतुर्थ्या आद्युदात्तत्वम् । तदर्थं किं कर्तव्यमिति चेत्? श्रूयतां—धर्त्रमपि तस्य सोमस्य धारणसमर्थं वायुं दंह दृढं कुरु ॥

[16]तत्रैव याज्या—सबाध इति त्रिष्टुप् ॥ बाधनं बाकर्मनिमित्तं बुद्धेर्व्यसनं; तत्सहितास्सबाधाः ऋत्विज उच्यन्ते । छान्दसं समासान्तोदात्तत्वम् । यद्वा—सह बाध्यते इति सबाधः । कृदुत्तरपदप्रकृतिस्वरत्वम् । हे सोम ते तव मदं हर्षं देवानां त्वत्कृतं हर्षं

नरो॑ ब्रह्म॒कृत॑स्सप॒र्यन्न् । अ॒र्को वा॒ यत्तु॒रते॒ सोम॑चक्षा॒स्तत्रेदिन्द्रो॑ दधते

ब्र॒ह्म॒कृत॒ इति॑ ब्रह्म—कृत॑ः। स॒प॒र्यन्न् । अ॒र्कः । वा॒ । यत् । तु॒रते॑ । सोम॑चक्षा॒ इति॒ सोम॑—च॒क्षाः । तत्र॑। इत् । इन्द्र॑ः । द॒ध॒ते॒। पृ॒त्स्विति॑ पृत्—सु । तु॒र्याम्।

शुष्मयं च ब्रह्म शुष्मं बलं तदिच्छतीति सर्वस्यात्मनो वेति । क्यचि पूर्ववदीत्वाभावे पचाद्यच् । धा[याधां]नोर्वा 'आतोनुपसर्गे कः' । ईदृशं ब्रह्म अन्नं च देवानां त्वत्कृतं त्वत्परिमाणरूपं नरः मनुष्याः ऋत्विजः ब्रह्मकृतः ब्रह्मणे हविष्कर्तारः ब्रह्मणः परिबृढस्य वा तव कर्तारः अभिषवं कुर्वन्तः ते सपर्यन् त्वां पूजयन्ति । छान्दसे लङि अडभावः, लेटि वा 'इतश्च लोपः' । सम्यक्सम्पादनमेव पूजा, सम्भवात् । अर्को वा युन्नमिव (?) दृष्टपरिणामं यत्तुरते त्वरते अपागन्तुमुत्सहते किमिदं तव युज्यते योस्य सोमचक्षाः सोमवाचकः । चष्ट इति चक्षः । कर्तर्यसुन्, 'बहुलं संज्ञाछन्दसोः' इति ख्यानादेशाभावः। वाचकं पदमुच्यते । सोमशब्दश्चक्षो यस्य स तथोक्तः । यद्वा—सोमशब्देन ख्यातव्यः सोमचक्षाः । 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इत्यसुन् । यद्वा—प्रकाशनं चक्षः - सोम इति प्रकाशो यस्य तादृशं त्वाम् । यद्वा—अर्कस्सविता अर्कस्स्वयमेव त्वं सोमचक्षाः इदानीं सोमशब्दाभिधेयः । वाशब्दोऽवधारणे । यद्वा—अर्क एव सोमः त्वं, ईदृशो महानुभावो भवान् । यथा त्वन्निमित्तं हर्षं देवानां कर्तुं संक्लेशात् ऋत्विजः परिवृढानां हविषां कर्तारः त्वां सपर्यन्ति एवमर्कः अर्चनीय एव सन् सो-

पृत्सु तुर्याम् । वषट्ते विष्णवास
आ कृणोमि तन्मे जुषस्व शिपि-
विष्ट हव्यम् ॥६७॥ वर्धन्तु त्वा सु-

[17]वषट् । ते । विष्णो । आसः । एति । कृणोमि ।
तत् । मे । जुषस्व । शिपिविष्टेति शिपि-विष्ट ।
हव्यम् ॥ ६७ ॥ वर्धन्तु । त्वा । सुष्टुतय इति सु-

---

मस्यापि प्रकाशयिता भवान् त्वरते । तुर त्वरणसम्भ्रमयोः । तत्र इन्द्र एव तुरते इन्द्र एव तथा करोति । हेतुमाह—यः यस्मात् स एव दधते धारयति उत्पादयति । लेटचाडागमः । किं ? पृत्सु पृतनासु संग्रामेषु तुर्याम् । क्ष्विचो यद्वा—[तुरतेस्तूर्यतेर्वा ?] क्विबन्तात् क्यचि 'अ प्रत्ययात्' इत्यकारप्रत्ययः । यद्वा—पृतनासु कंचित्पुरुषं दुर्बलं तूर्णं यातारं*करोति तस्मात्स एवात्र पीतानां सोमानां परस्परसंग्रामस्थानीये भवन्तं तुर्यां त्वर्यां त्वरिततरमधोयान्तं करोति । यद्वा—तूर्णं धावयितारं† वायुं करोति, तस्मात्स एव भवन्तमिन्द्रं नियमयत्विति । 'मांसपृतनासानूनाम्' इति पृतनाशब्दस्य पृद्भावः ॥

[17]न्यादित्तेषां पुरोनुवाक्याविकल्पेन उत्तरत्र ['यस्य हविर्निरुप्तं पुरस्तात्'‡ इत्यादिनाम्नातानां त्रयाणां हविषामन्तिमस्य हविषः पुरोनुवाक्यायाज्ये पुरोनुवाक्या च विकल्पेन उत्तरास्तिस्रः ।] वषडिति त्रिष्टुप् ॥ हे विष्णो व्यापनशील ते तव । आङ् मर्यादायाम् । वषट् कृणोमि करोमि ददामि । किम् ? आसः अस्यते क्षिप्यत इत्यासः

*ख—दातारं. †ख—योधयितारं. ‡सं. २-५-५.

सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिस्सदा नः । प्र तत्ते अद्य शिपिविष्ट नामार्यश्शꣳसामि वयुनानि वि-

स्तुतयः । गिरः । मे । यूयम् । पात । स्वस्तिभिरिति स्वस्ति-भिः । सदा । नः । [18]प्रेति । तत् । ते । अद्य । शिपिविष्टेति शिपि-विष्ट । नाम । अर्यः । शꣳसामि । वयुनानि । विद्वान् । तम् । त्वा ।

अग्नौ क्षिप्यमाणं हविरुच्यते । कर्मणि घञ्, वचनव्यत्ययः, 'कर्षात्वतः' इत्यन्तोदात्तत्वम् । यद्वा—असुनि सवर्णव्यत्ययः । हे शिपिविष्ट तन्मे हव्यं हविः जुषस्व सेवस्व । शिपयो रश्मयस्तैर्वेष्टितः, प्रविष्टो वा । पृषोदरादित्वादभीष्टं रूपं सिद्धम् । किञ्च—मम सुष्टुतयः शोभनस्तुतिकारणभूता गिरः त्वां वर्धन्तु वर्धयन्तु स्तुवन्त्विति यावत् । स्तुत्या हि स्तोतव्यो वर्धते । 'बहुलं संज्ञाछन्दसोः' इति णिलुक्, 'छन्दस्युभयथा' इति वा शप आर्धधातुकत्वम् । यूयं च मया स्तुताः नः अस्मान् स्वस्तिभिः अविनाशैः पात रक्षत सदा सर्वदा । पूजार्थमेकस्मिन् बहुवचनम् ॥

[18]प्र तत्त इति त्रिष्टुप् ॥ हे शिपिविष्ट ते तव तन्नाम शिपिविष्टेत्येवं रूपं अद्यास्मिन् कर्मणि प्रशंसामि । प्रशस्तगुणाभिधाय्येवेदं नाम न तु निन्दितं मन्तव्यम् । अज्ञस्त्वमिति न वक्तव्यमित्याह—अर्यः अरणीयोहम् । 'अर्यस्स्वामिवैश्ययोः' इति* ।

*क, ख......स्तगुणाभिधाय्येवेदं नामेति मम मतिरिति.

द्वान् । तं त्वा गृणामि तुवसमतवी-

गृणामि । तुवसम् । अतवीयान् । क्षयन्तम् । अ-

कोभिप्रायः ? एषोभिप्रायः । केचिदाहुः—शेप इव निर्वेष्टितः संयतरश्मिश्शिपिविष्ट इति । अन्ये तु ब्रुवते—निर्विष्टशेपश्शिपिविष्ट इति । अपरे त्वाचक्षते—निवृत्तरश्मिश्शिपिविष्ट इति । नैतेषु त्रिष्वपि पक्षेषु अनेन पदेन कश्चिद्गुणोभिधियते । अपि तु निन्देव । ततश्चानेन पदेन निर्वापादि क्रियमाणमुपालम्भमस्यावहेत् । अत इमं दोषमपनेतुमिदमुक्तमिति । तत्कथमिति चेदुच्यते—नात्र शेपशब्दोस्ति ; न च केवलोपि विशिर्निरुपसृष्टस्यार्थमभिधातुमीष्टे । तस्मात् शिपयो रश्मयः ; श्यतेश्शिपयः तैक्ष्ण्यात् ; तेषु प्रविष्टश्शिपिविष्ट इति प्रशंसापरमेतत् । अतोहमप्येतत्प्रशंसामीति । अतवीयान् तन्नामानं तवसं तपस्विनं महान्तम् । 'तु' इति वृद्धिकर्मा । असुन्नन्तादुत्पन्नो मत्वर्थीयो लुप्यते । अत एव प्रत्ययान्तरसङ्क्रान्त्या नब्विषयत्वाभावादाद्युदात्तत्वाभावः । ईदृशमहं गृणामि स्तौमि । अतवीयान्, अतिशयेन तपस्वी तवीयान् ततोन्योतवीयान् । यद्यप्यहं विद्यामहिम्ना तवीयान्, तथापि त्वदपेक्षया अतवीयान् । तादृशोपि त्वत्प्रसादेन त्वां स्तौमीति । 'विन्मतोर्लुक्', तपस्विशब्दादीयसुन्प्रत्ययः । अत एवातिशय्यमानोपि तपस्वीति गम्यते । द्वयोर्हि तपस्विनोरन्यतरस्तपीयान् भवति । इदानीमुक्तं शिपिविष्टपदार्थं समर्थयितुमाह—अस्य रजसोन्तरिक्षस्य पराके परागते दूरे प्रदेशे क्षयन्तं निवसन्तं तथापि सर्वलोकप्रकाशकं त्वां स्तौमि इदं तव शिपिविष्टत्वम् अतः प्रशंसामीति । क्षि निवासगत्योः, व्यत्ययेन शप् ॥

यान्क्षयन्तमस्य रजसः पराके ।
किमित्ते विष्णो परिचक्ष्यं भूत्प्र
यद्ववक्षे शिपिविष्टो अस्मि । मा

स्य । रजसः । पराके । [19]किम् । इत् । ते । वि-
ष्णो इति । परिचक्ष्यमिति परि–चक्ष्यम् । भूत् ।
प्रेति । यत् । ववक्षे । शिपिविष्ट इति शिपि–वि-
ष्टः । अस्मि । मा । वर्पः । अस्मत् । अपेति ।

[19]किमित्त इति त्रिष्टुबेव ॥ हे विष्णो ते तव किं परिचक्ष्यं गूहनीयं वर्जनीयमेव भूत् भवति नैवेतद्वर्जनीयम् । चक्षेः छान्दसो यत्, 'बहुलं संज्ञाछन्दसोः' इति ख्याञादेशाभावः । भवतेर्लेटि शपो लुक्, 'भूसुवोस्तिङि' इति गुणाभावः, लङि वा छान्दसश्शपो लुक् । लुङि वा 'गातिस्था' इति सिचो लुक् । 'बहुलं छन्दस्यमाङ्योगेपि' इत्यडभावः । इदानीं तदेव परिसङ्ख्येयतया सम्भाव्यमानं दर्शयति—हे शिपिविष्ट शिपिविष्टोस्मीति यद्ववक्षे किमिदं तदेव परिचक्ष्यं भवति नैतदेवम् । तस्माच्छिपिविष्टोस्मीति ब्रुवन्नेव विश्वव्यापी वर्तस्वेति । वक्तेर्व्यत्ययेनात्मनेपदम्, 'बहुलं छन्दसि' इति शपश्श्लुः । इदानीं प्रशस्तगुणाभिधाय्येतन्नाम न परिसङ्ख्येयं; अपि तु लोके ख्यापयितव्यमिति दर्शयितुमाह—वर्पः धरितव्यमिदमुच्छ्रितं नाम मापगूहः नेदं अस्माकं गूहनीयं अपि तु लोके श्लाघमानेन त्वया आघोषणीयमेव । वर्प गतौ, असुन्प्रत्ययः । गूहतेश्छान्दसोऽड्प्रत्ययः । अथ यदि ब्रूयाः नापगूहामिति, मृषैतत् यस्मात्त्वं

वर्पो अस्मदर्पं गूह एतद्यदुन्यरूप-
स्समिथे वभूर्थ ॥ ६८ ॥ अग्ने दा
दाशुषे रयिं वीरवन्तं परीणसम् ।

गूहः । एतत् । यत् । अन्यरूप इत्यन्य—रूपः । समिथ इति सं—इथे । वभूर्थ ॥ ६८ ॥ [20]अग्ने । दाः । दाशुषे । रयिम् । वीरवन्तमिति वीर—वन्तम् । परीणसमिति परि—नसम् । शिशीहि । नः ।

समिथे सङ्ग्रामे उदयकाले रक्षोभिस्सह तव यस्सङ्ग्रामः तत्रान्यरूपो बभूथ भवसि, न मध्याह्न इव महातेजा भवसि । तन्नूनं लज्जया शत्रुजनसमवाये उदयकाले एतदात्मीयं रूपं छादयसीति संलक्ष्यते । तस्मान्नैवमिदं गूहनीयमिति । 'वभूथाततन्थ' इतीडभावो निपात्यते । अन्य आहुः—उक्तं शिपिविष्टोस्मीति नेदं परिसङ्ख्येयमिति । अथापि यत्त्वं लज्जयेव समिथे संग्रामे उदयकाले अन्यरूपो भवसि इदमेव वर्पः प्रशस्ततरं रूपं, तस्मादेतं मापगूहः सर्वावस्थास्वपि इदमेव रूपं तव भवतु इदमेव शोभनमिति । अत्र निरुक्तादिषु बहुधा व्याख्यानानि कृतानि, अत्र युक्तरूपमिदमस्माभिरुक्तम् ॥

[20]अथ 'अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं पशुकामः'* इत्यस्य प्राजापत्येन सह त्रिहविष आग्नेयस्य पुरोनुवाक्या—अग्ने दा इति गायत्री ॥ हे अग्ने दा-

*सं. २-३-२.

शिशीहि नस्सूनुमतः। दा नो अग्ने शतिनो दास्सहस्रिणो दुरो न वाजꣳ श्रुत्या अपा वृधि । प्राची

सूनुमत इति सूनु-मतः । [21]दाः । नः । अग्ने । शतिनः । दाः । सहस्रिणः । दुरः । न । वाजम् । श्रुत्यै । अपेति । वृधि । प्राची इति । द्यावापृथि-

शुपे हवींषि दत्तवते यजमानाय रयिं धनलक्षणं दाः देहि । लेटि शपो लुक् । रयिर्विशेष्यते—वीरवन्तं पुत्रपौत्रादिमन्तं तेषां भोगपर्याप्तम् । परीणसम्, नासिकया सर्वेऽवयवा लक्ष्यन्ते, परिगतसर्वावयवम् । छान्दसो नसादेशः, 'उपसर्गाद्बहुलम्' इति णत्वम्, 'अन्येषामपि दृश्यते' इति दीर्घत्वम् । किञ्च—नः अस्माकं अस्य यजमानस्य सूनुमतः त्वया दीयमानपुत्रपौत्रादिकस्य रयिं शिशीहि तीक्ष्णीकुरु उज्ज्वलितं कुरु । यद्वा—नोऽस्मान् शिशीहि उज्ज्वलीकुरु । सूनुमतः सूनुस्सोता सोमस्याभिषोता यजमानस्तत्सहितानस्मान् पुत्रादिसमृद्धान् कृत्वा अस्मान् ऋत्विग्यजमानान् सर्वानपि शिशीहि । श्यतेर्लोटि 'बहुलं छन्दसि' इति शपश्श्लुः, अभ्यासस्य चेत्वम्, 'ईहल्यघोः' इतीत्वम् ॥

[21]तृतीया याज्या—दा न इति जगती ॥ हे अग्ने दाः देहि नः अस्मभ्यम् । किम्? शतिनस्सहस्रिणश्च पशून् दाः देहि । दुरो न द्वाराणीव पशुप्राप्त्युपायानिव वाजमन्नमपावृधि अपावृणु श्रुत्यै श्रवणार्थं यथा वयं लोके नेतारस्स्याम तदनुरूपं पशु-

द्यावापृथिवी ब्रह्मणा कृधि सुवर्ण शुक्रमुपसो वि दिद्युतुः । अग्निर्दा

वी इति द्यावा–पृथिवी । ब्रह्मणा । कृधि । सुवः । न । शुक्रम् । उपसः । वीति । दिद्युतुः । [22]अग्निः ।

---

प्राप्तिद्वारभूतमन्नमाह पुरु [....मन्नमपावृणु] । 'बहुलं छन्दसि' इति शपो लुक्, 'श्रुशृणुपृकृवृभ्यः' इति धिभावः । केचिदाहुः—दुरः द्वाराणि पशुप्राप्त्युपायानपावृधि ; वाजमन्नं श्रुत्ये नापावृधि ; अपि तु अश्रवणार्थं अपावृधि, यथा अपावृते अन्ने पशुसाध्ये श्रावणा न क्रियते, अविचार्यैवार्थित्वमात्रेण पश्वादिकं दीयते तथा अपावृधीति । अथापरे ब्रुवते—वाजमन्नं पशुहेतुकं श्रुत्यै श्रवणायापावृधि श्रवणसामर्थ्यायाविष्कुरु, अन्नेन हि श्रवणसामर्थ्यमुपजायते ; असति ह्यन्ने श्रवणसामर्थ्याभावात् । तस्माच्छ्रुत्या अपावृधि दुरो न श्रोत्रादीनि द्वाराणीव, यथैतानि श्रवणार्थमपावृतानीति । किञ्च—द्यावापृथिवी द्यावापृथिव्यौ प्राची प्राच्यौ अनुकूले ब्रह्मणा परिवृढेन हविषा कर्मणा वा कृधि । पूर्ववच्छपो लुक्, धिभावश्च । यद्वा—ब्रह्मणा अन्नेन सदास्माकं प्राची अनुगुणे द्यावापृथिव्यौ । किञ्च—सुवर्ण सुवरिव आदित्य इव । सांहितिकं णत्वं छान्दसम् । शुक्रं पुत्रादिकं उषसः उदयात् विदिद्युतुः विशेषेण द्योतयन्ते । द्युतेरन्तर्भावितण्यर्थाच्छान्दसो लिट्, व्यत्ययेन परस्मैपदम्, 'द्युतिस्वाप्योः' इत्यभ्यासस्य सम्प्रसारणम् ॥

[22]अत्रैव विकल्प्यते—अग्निर्दा इति त्रिष्टुप् ॥ अयमग्निर्द्वि-

द्रविणं वीरपेशा अग्निर् ऋषिं य-
स्सहस्रा सनोति । अग्निर्दिवि हव्य-
मा ततानाग्नेर्धामानि विभृता पुरु-

द्राः । द्रविणम् । वीरपेशा इति वीर–पेशाः ।
अग्निः । ऋषिम् । यः । सहस्रा । सनोति । अग्निः ।
दिवि । हव्यम् । एति । ततान । अग्नेः । धामानि ।
विभृतेति वि–भृता । पुरुत्रेति पुरु–त्रा । [23]मा ॥

णं धनं दाः दात् ददाति । लेटि शपो लुक् । पुरुषव्यत्ययः । वीरपेशाः विक्रान्तरूपो ग्नोभिः ऋषिं दर्शयितारं श्रेयसां यस्सहस्रा सहस्रेण प्रकारैः सनोति संविभजते ; अग्निः खलु दिवि देवेषु आदित्ये वा हव्यमाततान सर्वतस्तनोति, तस्मादेवं महानुभावस्याग्नेर्धामानि स्थानानि हवींषि वा विभृता धारयिता येन पशुमन्तस्स्या- मेति । पुरुत्रा पुरूणि बहूनि । 'देवमनुष्य' इति त्राप्रत्य- यः । आख्यातस्य सांहितिकं दीर्घत्वम् ॥

[23]अथ 'इन्द्राय प्रदात्रे'* इत्यस्याः पुरोनुवाक्या याज्या च—मा नो मर्धीरा तू भरेति ॥ 'मा नो मर्धीरा भरा दद्धि तन्नः' 'आ तू भर माकिरेतत्परिष्ठात्'† इत्येतयोरेते प्रतीके गृह्येते । व्याख्याते चैते 'अन्वह मासाः'‡ इत्यत्र । तत्र प्रथमा—अस्मान् मा मर्धीः संग्रामेण मा बाधिष्ठाः । दध्यादिकमाभर आहृत्यास्मभ्यं तत्प्रदेहि । किं? दाशुषे हवींषि दत्तवते यजमानाय दातुं यत्ते भूरि बहु सम्पा-

*सं. २-३-२. †सं. १-७-१३.[7-8] ‡सं. १-७-१३.

त्रा । मा ॥६१॥ नो मर्धीरा तू भ-
र । घृतं न पूतं तनूररेपाश्शुचि
हिरण्यम् । तत्ते रुक्मो न रोचत

६१ ॥ नः । मर्धीः । [24]एति । तु । भर । [25]घृतम् ।
न । पूतम् । तनूः । अरेपाः । शुचि । हिरण्यम् ।
तत् । ते । रुक्मः । न । रोचत । स्वधाव इति

दितं तत्तद्धनमिदानीं अस्मभ्यं देहि । वयमपि नव्ये नूतने देष्णे दानसमर्थे अस्मिन् शस्ते प्रशस्ते त्वदीये उक्थे शस्त्रस्थानीये स्तोत्रे त्वां स्तुवन्तः त्वां प्रब्रवाम प्रब्रूमः प्रकर्षेणाभिमतानि याचामहे हे इन्द्रेति ॥

[24]द्वितीया—हे इन्द्र आभर नमु एतत् मापरिष्ठात् अस्मभ्यमन्यत्र मास्थात् । त्वां हि वयं मर्त्येषां वसूनां सम्बन्धिनं पतिं वसुपतिं विद्म जानीमः अस्मान् यत्ते माहिनं महन्महनीयं दत्रं दातव्यं धनमस्ति तदस्मभ्यं प्रयन्धि प्रयच्छ हे हर्यश्व हरितवाहनेति । अत्राचार्येण 'प्रदातारं हवामहे' 'प्रदाता वज्री'* इत्येते उक्ते । तत्र विकल्पो वेदितव्यः ॥

[25]अथ प्राजापत्यस्य पुरोनुवाक्या—घृतं न पूतमिति । अक्षरपङ्क्तिः पञ्चपदा ॥ घृतं न घृतमिव पूतं शुद्धं तनूश्शरीरं तव ; अनिरुक्तत्वात् प्रजापतिरामन्त्र्यते । हे स्वधावः अन्नवन् । 'मतुवसोः' इति रुत्वम् । अरेपाः अपापा तनूः तव रोचते हिरण्यमिव शुचि रोचते, रुक्मो न रजतमिव रोचते तव तनूरिति ।

*सं. १-७-१३.३-१०

स्वधावः । उभे सुश्चन्द्र सर्पिषो द-
र्वी श्रीणीष आसनि । उतो न उत्पु-
पूर्या उक्थेषु शवसस्पत इषꣳ स्तो-

स्वधा–वः । [26]उभे इति । सुश्चन्द्रेति सु–चन्द्र । सर्पिषः । दर्वी इति । श्रीणीषे । आसनि । उतो इति । नः । उदिति । पुपूर्याः । उक्थेषु । शवसः। पते । इषम् । स्तोतृभ्य इति स्तोतृ–भ्यः । एति।

तदिति लिङ्गव्यत्ययः सा तव तनूरिति । यद्वा—तत्ते अन्नं रोचते किमिवेत्याह—पूतं घृतमिव अरेपास्तनूरिव शुचि हिरण्यमिव रोचनशीलं रजतमिवेति ॥

[26]तत्रैव याज्या—उभे इति । पञ्चपदा पङ्क्तिः ॥ हे सुश्चन्द्र सुकान्त । 'सुपूर्वश्च चन्द्रपरः' *इति शकारस्सांहितिक आगमः । दर्वी हनू सर्पिषस्सम्बन्धिन्यौ सर्पिस्संसिक्ते । दीर्यते भक्ष्यते अन्नमाभ्यामिति दर्वी । ते श्रीणीषे सदा सेवसे । यद्वा—उभे दर्वी । सर्पिषश्श्रीणीषे सर्पिः प्रापयसि सर्पिषा मिश्रीकुरुष्व । आसनि आस्ये । पद्दन्नादिना आसन्भावः । उतो अपि च हे शवसस्पते बलस्य पातः । 'षष्ठ्याः पतिपुत्र' इति सत्वम् । नः अस्माकं उक्थेषु स्तोत्रवत्सु यज्ञेषु उत्पुपूर्याः उच्छ्रितं पूरय सामर्थ्याद्धनं बलमेव वा अविशेषणात्सर्वम् । अनिरुक्तत्वात् प्रजापतिरामन्त्र्यते । पूरी आप्यायने, लिङि 'बहुलं छन्दसि' इति शपश्श्लुः । किञ्च—इषमन्नं स्तोतृभ्य आभर स्तोतृभ्य ऋत्विग्भ्यः आभर । 'हृग्रहोर्भः' ॥

* तै. प्रा. ५–५.

तृभ्य आ भर । वायो शतꣳ हरीणां युवस्व पोष्याणाम् । उत वा ते सहस्रिणो रथ आ यातु पाजसा । प्र याभिः ॥७०॥ यासि दा-

भर । [27]वायो इति । शतम् । हरीणाम् । युवस्व । पोष्याणाम् । उत । वा । ते । सहस्रिणः । रथः । एति । यातु । पाजसा । [28]प्रेति । याभिः ॥७०॥ यासि । दाश्वाꣳसम् । अच्छ । नियुद्भिरिति नियुत्—

---

[27]अथ वायव्ये क्वचिद्विनियुज्यते लिङ्गात्—वायो शतमिति पुरोनुवाक्या उष्णिक् ॥ हे वायो हरीणां हरितवर्णानामश्वानां शतं युवस्व मिश्रय रथे योजयास्मद्यज्ञमागन्तुम् । यौतेः व्यत्ययेन शः, आत्मनेपदं च । पोष्याणामिति । पोषे साधूनामिति 'तत्र साधुः' इति यत् । उत वा अपि वा ते तव सहस्रिणः; किं? हरिसहस्रवतः; किं? सहस्रं हरीणां रथे युज्यतामिति सामर्थ्याल्लभ्यते । यद्वा—ते हरयः सहस्रिणः सहस्रसङ्ख्यावन्तो रथे युज्यन्ताम् । तत एवंयुक्तो रथ आयातु अस्मत्सकाशमागच्छतु पाजसा बलेन सहितः ॥

[28]तत्रैव याज्या—प्र याभिरिति त्रिष्टुप् । अच्छेति प्रथमपादान्तः ॥ हे वायो याभिः वडबाभिः नियुत्संज्ञाभिः प्रयासि गच्छसि । दाश्वांसं हविर्दत्तवन्तं अच्छ अभिगन्तुं इष्टये यागाय

श्वा॒ᳪ॑स॒मच्छा॒ नि॒युद्भि॒र्वा॒यवि॒ष्टये॑ दु॒-
रो॒णे । नि नो॑ र॒यि॒ᳪ॑ सु॒भोज॑सं यु॒-
वे॒ह नि वी॒रव॒द्गव्य॒मश्वि॑यं च॒ राधः॑ ।
रे॒वती॑र्नस्सध॒माद॒ इन्द्रे॑ सन्तु तु॒वि-

भि॒ः । वा॒यो॒ । इ॒ष्टये॑ । दु॒रो॒ण इति॑ दुः-ओ॒ने
नीति॑ । न॒ः । र॒यिम् । सु॒भोज॑स॒मिति॑ सु-भोज॑-
सम् । यु॒व॒ । इ॒ह । नीति॑ । वी॒रव॒दिति॑ वी॒र-व॒त् ।
गव्य॑म् । अश्वि॑यम् । च॒ । राध॑ः । [29] रे॒वती॑ः । न॒ः ।
स॒ध॒माद॒ इति॑ सध-माद॑ः । इन्द्रे॑ । स॒न्तु॒ । तु॒वि-

---

पुनरपि यागं प्रवर्तयितुम् । 'मन्त्रे वृष' इति क्तिन उदात्तत्वम्, 'निपातस्य च' इति संहितायां अच्छेत्यस्य दीर्घत्वम् । दुरोणे यज्ञगृहे ताभिरागत्येहास्मद्यज्ञगृहे रयिं धनं सुभोजसं शोभनभोजनम् । 'सोर्मनसि' इत्युत्तरपदाद्युदात्तत्वम् । नियुव मिश्रय शोभनभुक्तिकं धनमस्माभिर्मिश्रय । पूर्ववद्व्यत्ययेन शः । नियुव च रायः धनम् । कीदृशं? वीरवत् पुत्रपौत्रादिवत् गव्यं गोसमृद्धिनिमित्तम् । 'गोद्व्यचः' इति यत् । यद्वा—गव्यैः क्षीरादिभिस्तद्वत् । अश्वियं अश्वसमूहवत्, 'केशाश्वाभ्याम्' इति छः, छान्दसं ह्रस्वत्वम् । आद्युदात्तत्वं च । यद्वा—अश्वयोगस्यापि निमित्तभूतम् । छान्दसो यत् ॥

[29]उत्तरयोः क्वचिदैन्द्रे द्रष्टव्यो विनियोगः—रेवतीर्न इति

वाजाः । क्षुमन्तो याभिर्मदेम । रे-
वाँ इद्रेवतस्स्तोता स्यात्त्वावतो

वाजा इति तुवि-वाजाः । क्षुमन्तः । याभिः ।
मदेम । [30]रेवान् । इत् । रेवतः । स्तोता । स्यात् ।
त्वावत इति त्व-वतः । मघोनः । प्रेति । इत् ।

---

गायत्री पुरोनुवाक्या ॥ व्याख्याता चेयं 'अन्वह मासाः'* इत्यत्र । रेवतीर्धनवत्यः नोस्माकं सधमादः सहमाद्यन्त्यः इन्द्रे सन्तु तुविवाजाः चरुपुरोडाशादिबह्वन्नाः याभिर्वयं क्षुमन्तश्शब्दयन्तः स्तुवन्तः मदेम माद्येम ता इन्द्रार्थमस्माकं बह्वन्नास्सन्तु, सर्वार्थसाधनभूता आप उच्यन्ते ॥

[30]तत्रैव याज्या, पुरोनुवाक्या वा—रेवानिति गायत्री ॥ रेवान् धनवान् महाधनः । 'रयेर्मतौ' इति सम्प्रसारणम्, 'रेशब्दाच' इति मतुप उदात्तत्वम् । सांहितिकौ रुत्वानुनासिकावुक्तौ । इदित्यवधारणे । धनवानेव स्यात् भवितुमर्हति । कः? रेवतः धनवतः यस्य कस्य चिदपि परिबृढस्य स्तोता स्यात् । अथ यद्येवमेतद्भवति तदा त्वावतः त्वत्सदृशस्य । 'युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसङ्ख्यानम्' इति वतुप्, 'आसर्वनाम्नः' इत्यात्वम् । मघोनः धनवतः श्रुतस्य सर्वेष्वपि लोकेषु धनवत्तया विख्यातस्य त्वावतो धनवतस्स्तोता स मेव स्यात् प्रकर्षेण रेवान् भवितुमर्हतीति । उ इति पादपूरणः, विशेषख्यापने

---

*सं. १-७-१३.[13]

मघोनः । प्रेदु हरिवश्श्रुतस्य ॥७१॥

उ । हरिव इति हरि-वः । श्रुतस्य ॥ ७१ ॥

दधानो जिनोपि देभुः प्र हव्यं वभूथ मा याभिश्चत्वारिꣳशच्च ॥ १२ ॥

प्रजापतिस्तास्सृष्टा अग्नये पथिकृतेग्नये कामायाग्नयेन्नवते वैश्वानरमादित्यं चरुमैन्द्रं चरुमिन्द्रायान्वृजव आग्नावैष्णवमसौ सौमारौद्रमैन्द्रमेकादशकपालꣳ हिरण्यगर्भो द्वादश ॥

प्रजापतिरग्नये कामायाभि सं भवतो यो विद्विषाणयोरिध्मे सं नह्येदाग्नावैष्णवमुपरिष्टाद्यासि दाश्वाꣳसमेकसप्ततिः ॥

प्रजापतिः प्रेदु हरिवश्श्रुतस्य ॥
हरिः ओं तत्सत् ॥

---

या । तावतः अस्त्वित्यर्थः । हे हरिवः हरिभिरश्वैर्युक्त इन्द्र, 'मतुवसोः' इति रुत्वम् ॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये
ज्ञानयज्ञाख्ये द्वितीये काण्डे द्वितीयप्रपाठके द्वादशोनुवाकः,
समाप्तश्च प्रपाठकः,

# शुद्धिपत्रिका.

| पृष्ठे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १३ | ९ | दे॒वात् | दे॒वान् |
| १५ | १० | गृ॒ह्णाति॑ | गृह्णाति॑ |
| १७ | १ | त्य॒प | त्ये॒प |
| ,, | १२ | ति॒ऽष्ठार्ह॑ | ति॒ष्ठाऽर्ह॑ |
| २० | ६ | दु॒व | दे॒व |
| ३२ | १२ | ए॒व॒ | ए॒व |
| ४५ | १ | पर्म् | पंम् |
| ६८ | ८ | वृ॒ह॒स्पतेः | वृ॒ह॒स्पतें॑ः |
| ८१ | ४ | अ॒ग्निरकां | अ॒ग्निरेकां |
| ,, | ९ | अ॒ग्निः | [1]अ॒ग्निः |
| ९१ | ७ | अन्विति | अन्विति॑ |
| ९५ | ४ | इति | इति॒ |
| ९६ | १ | भरा॑ | भं॑रा |
| ९८ | ४ | श्वेतिं | श्वेतिं |
| १०४ | ७ | हर्यश्व | हर्यश्व |
| १३४ | ३ | व्य॒व॒सा | व्य॒व॒सा |
| १४१ | ४ | प्रा॒ष्टि॒ | [14]प्रा॒ष्टि॒ |
| ,, | ५ | 1 | 15 |

| पुटे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १४२ | ५ | 15 | 16 |
| | | 16 | 17 |
| " | " | 17 | 18 |
| " | ६ | | |
| १४५ | ६ | वारु | [6]वारु |
| १४६ | " | ऐन्द्रम् | [2]ऐन्द्रम् |
| १५४ | २ | पुरोडशं | पुरोडाशं |
| १५५ | ३ | व्रींहीणां | व्रींहीणां |
| १५६ | ७ | वाचम् | वाचाम् |
| १६५ | ८ | असिं- | असिंश्च- |
| १८० | ४ | अमृतंम् | [2]अमृतम् |
| १८३ | १ | णर्यो | णयो |
| २०४ | ३ | नड्डांह | नड्डांहं |
| २०५ | ४ | वन्तीयं | वन्तीय |
| २०६ | ८ | पष्टौही | पष्ठौहि |
| २०७ | ६ | पष्टौहीम् | पष्ठौहीम् |
| २१५ | ७ | भ्रूम्रम् | धूम्रम् |
| २३० | ४ | जुपन्तें | जुपन्ते |
| २३२ | " | यंसु | यांसु |
| २५२ | ७ | दधाति | दधति |

| पृष्ठे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| २५८ | ,, | इन्द्रियेण | इन्द्रियेण |
| ३०५ | १ | भवत्येतद्वै | भवत्येतद्वै |
| ३२८ | ५ | [13]यज्ञो | यज्ञो |
| ,, | १० | यज्ञः | [13]यज्ञः |
| ३२९ | १ | मतिर्वै | मतिर्वै |
| ३४४ | ,, | परि | परि |
| ,, | ५ | परिष्टात् | परिष्टात् |
| ३४९ | ६ | पुरुषाः | पुरुषाः |
| ३६२ | ८ | [5]उत | उत |
| ,, | १० | एताम् | [5]एताम् |
| ३६३ | ,, | इन्द्राय | इन्द्राय |
| ३७४ | १४ | वैश्वान- | [3]वैश्वान- |
| ३९३ | १३ | ब्रह्म | ब्रह्म |
| ३९८ | ८ | अश्वमेधौ | अश्वमेधौ |
| ४१२ | १४ | यनेति | ये ति |
| ४१५ | ५ | चं प्रव | चं प्रव |
| ४१६ | ८ | तत्सव- | तस्सव- |
| ४३९ | १० | यत् ॥ | यत् । |
| ४४२ | २ | सः | [7]सः |

# भट्टभास्करभाष्यस्थशुद्धाशुद्धसूची.

| पृष्टे. | पङ्क्तौ. | अशुद्धम् | शुद्धम्. |
|---|---|---|---|
| १३ | ७ | भिर्दवा | भिर्देवा |
| १८ | ४ | ादनी | दिना |
| ३८ | ५ | क्रिमोसि | क्रमोसि |
| ४१ | ३ | वर्चो मे | वर्चो मयि |
| ६२ | ५ | भावश्चान्दसः | भावश्छान्दसः |
| ६४ | २ | ह्वानेषु | ह्वानेषु |
| ७८ | १६ | तं ३-२-९. | सं. ३-२ ९. |
| १२६ | १ | च्लेश्रंडि | च्लेश्रडि |
| १४१ | ५ | अत्र | [14]अत्र |
| ,, | १३ | १४ | १५ |
| १४२ | २ | १५ | १६ |
| ,, | ३ | १६ | १७ |
| ,, | ५ | १७ | १८ |
| १५२ | ७ | † | * |
| ,, | १२ | *सं. २-६-४. †ब्रा. १-७-४. | *सं. २-६-४. |
| १६० | ११ | सं.—१-६-५. | सं १-७-७[7]. |
| १६८ | १४ | सं १०-७-९. | सं. १-७-९. |
| १९६ | १६ | सं. १-७-७[1]. | सं. १-७-७[2]. |
| २०९ | ११ | पाश्चालाः | पश्चालाः |

| पृष्ठे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| २२४ | ३ | व्याः | व्याः । |
| २२९ | ११ | बिभीयद्दाश्रर्मा | बिभीयाद्दुश्रर्मा |
| २३१ | २ | गूहतामनाशयताम् | गूहतां नाशयताम् |
| २९९ | १ | न ल त | न लभेत |
| ३२० | १५ | ऐन्द्र | 'ऐन्द्र |
| ४३९ | ८ | देवासुरा | 'देवासुरा |
| ४ | ६ | यमिति । | यमिति ; |